2·3

सरस्वतीभवन-अध्ययनमाला

[ ३३ ]

# दीधितिकारोपज्ञविचाराणामालोचनम्

लेखकः सम्पादकश्च

डॉ० श्रीरामपाण्डेयः

आचार्योऽध्यक्षश्च न्यायवैशेषिकविभागस्य सङ्कायाध्यक्षश्च दर्शनसङ्कायस्य।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-STUDIES

[ Vol. XXXIII ]

# DĪDHITIKĀROPAJÑAVICĀRĀNĀMĀLOCANAM

By

**Dr. ŚRĪRĀMA PĀṆDEYA**

Professor and Head Nyāyavaiśeṣika Department and
Dean Darśana Saṁkāya

**Sampurnanand Sanskrit Vishvavidyalaya**
**VARANASI**




VARANASI
1983

Published by—
Dr. Bhāgīratha Prasāda Tripāthī 'Vāgīśa Śāstrī'
Research Publication Supervisor,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi

[ This thesis has been approved for the "Vācaspati" ( D. Litt. ) Degree of Sampurnanand Sanskrit Vishvavidyalaya and has been Published out of generous grant from University Grants Commission, New Delhi ]

Available at—
Sales Department,
Sampurnanand Sanskrit Vishvavidyalaya
Varanasi-221002. ( India )

First Edition : 1000 Copies,
Price : Rs. 50-00

Printed by—
Ghanshyam Upadhyaya
Manager,
Sanskrit University Press
Varanasi.

सरस्वतीभवन–अध्ययनमाला

[ ३३ ]

# दीधितिकारोपज्ञविचाराणामालोचनम्

लेखकः सम्पादकश्च

**डॉ० श्रीरामपाण्डेयः**

आचार्योऽध्यक्षश्च न्यायवैशेषिकविभागस्य सङ्कायाध्यक्षश्च दर्शनसङ्कायस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये



वाराणस्याम्

२०४० तमे वैक्रमाब्दे १९०५ तमे शकाब्दे १९८३ तमे खिस्ताब्दे

प्रकाशकः—
डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
अनुसन्धानप्रकाशनपर्यवेक्षकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी ।

[ गवेषणाप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन 'वाचस्पतिः' ( डी० लिट्० ) इत्युपाध्यर्थं स्वीकृतः, विश्वविद्यालयानुदानायोगनवदिल्लीतो लब्धेनार्थिकसाहाय्येन प्रकाशितश्च ]

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१००२.

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम् : ५०–०० रूप्यकाणि

मुद्रकः—
घनश्याम उपाध्यायः
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयमुद्रणालयस्य ।

# पुरोवाक्

महर्षिणा गौतमेन सर्वप्राणिनामात्यन्तिकदुःखोन्मूलनार्थं न्यायदर्शनं प्रणीतम्, अयमर्थो नव्यन्यायप्रजापतिना श्रीमता गङ्गेशोपाध्यायेन आत्मनस्तत्त्वचिन्तामणिग्रन्थस्य प्रारम्भिके भागे स्फुटीकृतो यथा--'अथ जगदेवदुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनिनाय' तत्र प्रेक्षावत्प्रवृत्त्यर्थं प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादावसूत्रयदिति ।

ईश्वरास्तित्वप्रतिष्ठापनयशःश्रिया समुद्भासमानेन तत्र भवता उदयनाचार्येणापि विषयोऽयमात्मन आत्मतत्त्वविवेकग्रन्थस्य प्रारम्भेऽवद्योतितो यथा इह खलु निसर्गप्रतिकूलस्वभावं सर्वजनसंवेदनसिद्धं दुःखं जिहासवः सर्व एव प्राणिनस्तद्धानोपायमविद्वांसः सर्वाध्यात्मविदेकवाक्यतया तदुपायतया तत्त्वज्ञानमेवावर्णयन्ति इति मुनेरभीप्सितं प्राणिजातस्य आत्यन्तिकदुःखनिर्मूलनं प्रमाणादीनां तत्त्वज्ञानमात्रेणैव साधयितुमर्हमिति तदीयप्रथमसूत्रेण सुस्पष्टं यथा --प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान् निःश्रेयसाधिगमः' इति महर्षेरनेन प्रथमसूत्रेण निःश्रेयससाधनतया प्रतिपादितं पदार्थतत्त्वज्ञानं तदनुवर्तिभिः सर्वैरेव विपश्चिद्भिर्विविधैः प्रकारैस्तेषु तेषु ग्रन्थेषु अनुमोदितं फलतया भिन्नेषु न्यायशास्त्रग्रन्थेषु विभिन्नैः प्रकारैः पदार्थानामुद्देशलक्षणपरीक्षाभिर्निरूपणमुपलभ्यते ।

वैशेषिकदर्शनसूत्रकारेण मुनिना कणादेन द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगम इत्युक्तम्, आपाततो द्वयोर्दर्शनयोर्निःश्रेयसोपायविषये वैमत्यमिव प्रतीयते, किन्तु न्यायभाष्यकारेण वात्स्यायनेन द्रव्यादीनां सर्वपदार्थानां मुनेर्गौतमस्याप्यनुमतत्वं प्रतिपाद्य वैमत्यशङ्का निराकृता यथा—

अस्त्यन्यदपि--द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयं तद्भेदेन चाऽपरिसंख्येयम् । अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इति ।

अर्वाचीनग्रन्थकारैर्भाष्यकारेण संक्षेपतः प्रकाशितं मतं स्वस्वग्रन्थेषु स्फुटतया समर्थितम् ।

न्यायदर्शनप्रथमसूत्रानुसारेण निःश्रेयसमेव न्यायदर्शनस्य निरूपणीयतया अभिमतं तत्साधनीभूततत्त्वज्ञानविषयीभूतपदार्थानां प्रतिपादनमपि तस्य लक्ष्यं निःश्रेयसं च प्रमेयविभाजकसूत्रेऽपवर्गपदेन निर्दिश्य अपवर्गलक्षकसूत्रेण दुःखात्यन्तनिवृत्तेर्निःश्रेयससाधनत्वं निर्वर्णितम् ।

दुःखस्य मूलं च मिथ्याज्ञानं तच्च मुख्यतया स्वात्मगोचरं मनुष्यो हि देहादिमेव स्वात्मानं मन्यमानस्तत्पुष्टये तद्घटकानामिन्द्रियाणां तृप्तये च सांसारिकीं समृद्धिमात्मसात्कर्तुं बहुप्रकारेण प्रशस्ताप्रशस्तकर्माणि कुरुते, तत्तत्कर्मजनितैः सुकृतदुष्कृतैर्निगडितस्तदनुसारेण विविधासु योनिषु जनिं लभमानो बहुविधैर्दुःखैरुत्पीडितो भवति. निरुक्तं मिथ्याज्ञानं च स्वात्मनो वास्तवस्वरूपसाक्षात्कारादेव निवर्तयितुं शक्यं स्वात्मनो वास्तवस्वरूपं च स्वात्मनो देहादिभिन्नत्वरूपं, देहादीनां भेदज्ञानं च अभावज्ञानस्य प्रतियोगिज्ञानसाध्यतया देहादिज्ञानसाध्यं देहादीनां ज्ञानं च देहादिसाधनानां ज्ञानायत्तं, देहादिसाधनेषु च साक्षात्परम्परया सर्वं जगदन्तर्भवति, अतो जगतः समग्रपदार्थानां साधर्म्यवैधर्म्ययोर्यथार्थबोधे सत्येव आत्मनस्तत्त्वज्ञानं प्राप्तुं शक्यम् अस्मादेव हेतोर्न्यायदर्शने तदुपजीविषु च ग्रन्थान्तरेषु प्रमाणादिपदार्थानां विस्तारेण वर्णनं कृतमुपलभ्यते ।

पदार्थान् साधर्म्यवैधर्म्यादितो वर्णयतां विदुषां परम्पराद्वयं प्रथितमास्ते । एका प्राचीनन्यायनाम्ना अपरा च नव्यन्यायनाम्ना व्यपदिश्यते । ये ग्रन्था न्यायदर्शने प्राप्यमाणं पदार्थोद्देश्यक्रममाश्रित्य प्रवृत्तास्ते प्राचीनन्यायेऽन्तर्भवन्ति तेषु प्रमाणापेक्षया प्रमेयाणां विचारो बाहुल्येनोपलभ्यते ।

यदा खलु देशे बौद्धधर्मस्य बौद्धदर्शनस्य चोद्भवोऽभूत्, बौद्धैर्दार्शनिकैश्च गौतमीयं न्यायदर्शनमाश्रित्य नवनवाभिर्युक्तिभिः प्रहारान् कृत्वा न्यायशास्त्रसिद्धान्तानां निरसनं प्रारम्भि तदा तैः प्रत्युपस्थापितानामाक्षेपाणां प्रतिक्षेपणाय नव्यन्यायस्य प्रादुर्भावः समजनि, तत्र नव्यन्यायप्रादुर्भावं प्रारभमाणेन गङ्गेशोपाध्यायेन तत्त्वचिन्तामणिग्रन्थं निर्माय गौतमोक्तपदार्थेषु प्रथमं प्रमाणपदार्थमधिकृत्यैव भूयान् विचारो न्यबन्धि, तेन स्पष्टमुक्तं यत्प्रमाणाधीनैव सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमेव प्रधानतया विवेचनीयं तदनु अर्वाचीनैरपि नैयायिकैः प्रमाणपदार्थमेव प्रधानं प्रतिपाद्यं विभाव्य तत्त्वचिन्तामणे रीत्यैव ग्रन्थानां रचना कृता ।

नव्यनैयायिकेषु पक्षधरमिश्रवासुदेवसार्वभौम-यज्ञपत्युपाध्याय-मथुरानाथतर्कवागीशरघुनाथशिरोमणि-जगदीशतर्कालङ्कार-गदाधरभट्टाचार्यप्रभृतीनां नामानि न्यायशास्त्रेतिहासे सदा अविस्मरणीयानि सन्ति, सर्वैरेभिर्नैयायिकैः पदार्थानां स्वरूपादिकं चिन्तयद्भिरनेकानि नवनवानि तथ्यानि तत्तद्ग्रन्थेषु निबद्धानि. किन्तु सर्वेषु तेषु

तत्त्वचिन्तामणेर्व्याख्यातुर्दीधितिकारस्य सर्वतः प्रामुख्यमस्ति, यतो हि तेन पदार्थ-निरूपणक्षेत्रे नवीना क्रान्तिः कृता, सर्वेषां प्राचीनानां नैयायिकानां मतेषु दोषान् प्रदर्श्य आत्मनो नूतनानि मतानि प्रतिष्ठापितानि, न केवलं यत्र तत्र प्रसङ्गवशादेव नवनवानां मतानां प्रतिष्ठापनं कृतं किन्तु पदार्थतत्त्वनिरूपणनामानं नवीनं ग्रन्थं निर्माय स्वोपज्ञविचाराणां समीचीनं सङ्कलनमपि कृतम्। अनुमानचिन्तामणेर्व्याख्या-मारभमाणेन तेन---

मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो
भूयो विधाय विनयं विनिवेदयामि।
दूष्यं वचो मम परं निपुणं विभाव्य
भावावबोधविहितो न दुनोति दोषः॥

इत्युक्त्वा स्वविचाराणामालोचनाय विदुषामामन्त्रणमपि कृतम्। दीधितिकृत आमन्त्रणमिदं पश्चाद्वर्तिषु विद्वत्सु केनचित् प्राधान्येन स्वीकृत्य किमपि कृतं भवेदिति नोपलभ्यते, अवश्यं याः काश्चिद् दीधितिकारोक्तीरवलम्ब्य कैश्चिद् ग्रन्थकारैस्त-दालोचनं कृतम्।

यथा व्युत्पत्तिवादे घञन्तानां पाकादिशब्दानां शक्तत्वविचारप्रसङ्गे गदाधर-भट्टाचार्येण दीधितिकृतो मतमालोचयता इत्थमुक्तम् 'अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्तसमुदायस्य संयोगविभागत्वादिविशिष्टावाचकत्वं व्युत्पाद्य संयोग-विभागादिपदानां नैमित्तिकसंज्ञात्वनिराकरणं दीधितिकृतां विरुद्धमिति चेत्का क्षतिर्न हि कस्यचिद् ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद् वस्तुसिद्धौ बाधकम्' अनेन-वचनेन गदाधरभट्टाचार्येण दीधितिकृतो युक्तिविरुद्धविपरीतलेखकत्वं विस्पष्टमुद्-घोषितम्।

वर्तमानख्रीष्टाब्देऽपि महामहोपाध्यायपण्डितराखालदासन्यायरत्नमहाशयेन दीधितिकृन्न्यूनतावादनामानं ग्रन्थं निर्माय दीधितिकृतोऽनेका न्यूनताः प्रदर्शिताः। एतेषां विदुषां प्रवृत्त्या प्रोत्साहितेन मयापि आत्मनः शोधप्रबन्धविषयतया दीधि-तिकारोपज्ञविचाराणामालोचनमङ्गीकृतम्। विषयं चेममाश्रित्य दीधितिकृतः पदार्थ-विषयको मूलग्रन्थ एवमुख्यतया आलोचनीय इति विचिन्त्य च तदीये पदार्थतत्त्वनिरू-पणग्रन्थे प्राप्यमाणानां तदीयाभिनवमतानां यथामति आलोचनं कृतम्। ग्रन्थान्तरेषु तस्य ये नूतना विचाराः प्राचीनमतनिरसनपराः समुपलभ्यन्ते तेष्वपि कियतां पर्या-लोचनं विहितम्।

यद्यपि महानैयायिकस्य न्यायशास्त्रक्षेत्रे महतीं वैचारिकीं क्रान्तिं वितन्वतो दीधितिकारस्य मतानामालोचनं साहसमात्रमेव तथापि तत्परिशीलितेन पथा प्रावर्ति-

विदुषां मतालोचनेनैव शास्त्रस्य विस्तारो भवितुमर्हतीति मत्वा मया किमपि चेष्टितम्। ममायं विश्वासो विद्यते यच्चेष्टितमिदं केवलं ममेयं दृष्टिरेव ग्रहीष्यते यत्पदार्थविचाराणां काचन सीमा नास्ति पदार्थानधिकृत्य यावन्तो विचारा विभिन्न-कालेषु विभिन्नैर्विद्वद्भिः प्रवर्तितास्ते सर्वे आलोचनप्रत्यालोचनया विस्तारयितुं शक्यन्ते। एवं भूते विस्तारे प्रसृते एव च समग्राणां पदार्थसाधर्म्यवैधर्म्याणां यथार्थाव-बोधद्वारा आत्मतत्त्वसाक्षात्कारः सुकरीकर्त्तुं शक्यते तथा सत्त्वे एव च पदार्थतत्त्व-ज्ञानान्निःश्रेयसमधिगन्तुं शक्यते इतिमुनेरभिप्रायः सफलीभवितुमर्हति।

वस्तुतः शोधप्रबन्धो लघुकायेषु पञ्चस्वध्यायेषु लिखितः प्रत्यध्यायं विमर्श-नाम्ना दीधितिकृन्मतालोचनानामुपन्यासोऽस्ति, प्रतिविमर्शं प्राचीनमतस्य सोपपादन-मुपन्यासस्तत्र तत्र दीधितिकृन्मतप्रकाशनं तन्मतस्य नवीनमतालोचनं च समुपन्यस्त-मस्ति। ग्रन्थस्य प्रारम्भे न्यायदर्शनस्य तद्विदुषां च संक्षिप्तपरिचयः संक्षेपेण विषय-सूचिरन्ते उपसंहारोऽधीतग्रन्थानां तालिका निर्दिष्टा तदन्ते शुद्धिपत्रञ्च राजते।

एष शोधप्रबन्धो भूतपूर्वन्यायवैशेषिकविभागाध्यक्षाणां पण्डितराजानाम् आचार्य-श्रीबदरीनाथशुक्लमहोदयानां मार्गनिर्देशने सज्जीकृतस्तत्रत्यः कश्चन गुणो विदुषां प्रतीयेत तत्र तदीयनिर्देशनस्यैव मुख्यं श्रेयो मन्तव्यमिति तान् प्रति हार्दिकीं कृतज्ञतां निवेदयन् शोधप्रबन्धमेनं विनयावनतेन मूर्ध्ना परीक्षकाणां विपश्चितां पुरस्तात् समुपस्थापयामि। सूत्रात्मना पद्यात्मना च ग्रन्थप्रणयनस्य पुरातनं पन्थानमनुसृत्य शोधप्रबन्धे सन्नद्धानां विचाराणां विदुषां मनोविनोदनधिया पद्यात्मनापि प्रबन्धेऽस्मिन् मया सन्निवेशः कृत इति तदंशेऽपि विपश्चितां दृष्टिपातः सविनयं प्रार्थितः यद्यपि शुद्धिपत्रमन्ते विद्यते तथापि मानवसहजदोषसंभवास्त्रुट्यश्चेन्मनीषिभिस्ताः परिमार्जनीयाः। तदर्थं तेषामहमधमर्णः।

यद्यनेन तनीयानपि मनस्तोषस्तेषां भवेत्तदा तावतैव मे श्रमः पुरस्कृतो भवितेति सप्रश्रयं निवेदयते—

मान्यान् मनीषिनिवहान् विनयानतेन
मूर्ध्नाभिवन्द्य विहिताञ्जलि याचना मे।
आचार्यदिष्टमतिगाङ्गवनप्रवाहः
शोधः शिरोमणिगिरां धरतां धरित्रीम्॥१॥

भव्यां पदार्थकलिकां नयनव्यभूतिं
गद्यात्मिकां सुभनसां सुधियां समक्षम्।

प्रस्तुत्य दीधितिकृतो हृदयं निधाय
संक्षेपतो मतिमतो मतिमर्चयामि ॥२॥

शास्त्राविरुद्धमखिलं महनीयतत्त्वं
तर्काञ्चितं मतिमतां महतां समीक्ष्य ।
पद्यात्मकं कुसुमबोधवनञ्च भक्त्या
विद्याधनाय विदुषे नवमर्पयामि ॥३॥

केषाञ्चनैव महतां नयबोधभाजां
सिद्धेतिवृत्तचयनं पवनं विधाय ।
न्यायागमस्य विषयावगमैकयत्नः
साफल्यमेत्य विदुषां परितोषदोऽस्तु ॥४॥

पुंदोषपङ्क्तिकलिकां कमलप्रबन्धे
शोधे स्फुटां सुमनसां सुधियां च दृष्ट्या ।
चेन्मामिकां गुणगणानमलान् गुरूणां
सचिन्त्य बुद्धिविभवैर्विभवो न हेयः ॥५॥

विदुषामाश्रवः
श्रीराम पाण्डेयः

# भूमिकाया विषयानुक्रमणिका





# प्रस्तुतग्रन्थस्य विषयानुक्रमणिका

## प्रथमोऽध्यायः



## द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

## चतुर्थोऽध्यायः



## पञ्चमोऽध्यायः

## न्यायदर्शनस्य तद्विदुषाञ्च संक्षिप्तपरिचयः

लाङ्गूलेऽनललोललम्बधवलज्वालां सलीलां चलां
क्रूरां कालकृतां स्वकीयकवलीभावाय तात्कालिकीम्।
संकल्प्यातुरतामनारतमनाधृत्यापि लोलाननो
लङ्कां हेमपुरीं ददाह विजयी विद्योततां मारुतिः ॥१॥

न्यायम्भोधिसमस्तरत्नविषयाश्चेतुं न शक्याः समै-
र्भाषाग्राहगणैर्वृताः श्रुतिसुखा बोधाकरा मार्मिकाः।
विश्वेशाङ्घ्रिकृपावदातहृदयैः संचीयमाना वरै-
श्चीयन्ते भ्रमपुञ्जनाशनिरता बन्धेऽधुना नीतिपाः ॥२॥

तर्काब्धौ नितरां प्रबुद्धमतयः खेलन्ति खेलां नवां
येषां भव्ययशस्तनोति गगने न्याये नवां शाटिकाम्।
धार्यां तीक्ष्णवराङ्गनाङ्गलतया मत्या बुधानां सदा
तेषां कोऽपि विभूतिभापरिचयो बाभातु बन्धेऽवनौ ॥३॥

भारतीयदर्शनेषु अध्यात्मबोधपयस्विनी जाह्नवी निविडकलुषक्षालनपट्वी आत्मतत्त्वं प्रकाशयन्ती सततमविच्छिन्नधारया प्रवहमाणा चकास्ति। तत्रापि न्यायदर्शन-धारा सर्वेषां दर्शनानां शास्त्राणां च मलापनोदिका प्रकाशपुञ्जप्रदीप इवालोकदा जगत्यामालोकमालामजस्रं सृजति। अध्यात्मबोधप्रवाहसन्ततेर्गौरवमयं निदर्शनं सर्वत्र भारतीयदर्शनपरम्परायां प्राप्यते। तत्र मानवानां चरमपरमपुरुषार्थावाप्तये आत्मादि-निखिलपदार्थतत्त्वानां पूर्णं मौलिकं विवेचनं चित्रणञ्चाञ्जस्येनावाप्यते। भारतीय-दर्शनानि हित्वा अन्यत्र कुत्रापि अध्यात्मबोधसामग्री पुष्कला दुर्लभैव। अध्यात्मबोधस्य पर्याप्ता सामग्री भारतीयदर्शनेष्वेवेति सर्वे विपश्चितो विदन्ति। बृहदारण्यकोपनिषदि मैत्रेयीयाज्ञवल्क्यसंवादे 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति प्राप्यमाणं वाक्यं भारतीयदार्शनिकबोधमीमांसाया मूलभित्तिरस्ति। वेदोपदिष्ट-मात्मदर्शनं तत्त्वसाक्षात्कारं वा परमं कर्त्तव्यं मानवानां मन्वते मनीषिणः।

प्रथमं श्रुतिवाक्येभ्य आत्मतत्त्वश्रवणमनन्तरं हेतुवाक्यैर्मननम्—आत्मनः स्वेतरभेदानुमितिरर्थादनुमित्यात्मकयथार्थानुभवाख्योपासना तदनन्तरं निदिध्यासनमुपदिष्टम्। उपासनाभ्यस्ताभ्य आत्मनो दर्शनं सकलपदार्थानामभिज्ञता चावाप्यते। आत्मदर्शनस्य साधनं मननाख्योपासनात्मकं न्यायशास्त्रे सम्यगवाप्यते तत एव तस्य दर्शनत्वं प्रख्यापितं प्रथितं पृथिव्याम्। 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्वा वा विज्ञानेन इदं सर्वं विदितम्' ( वृहदारण्यकम् २।४।५ )। शाङ्करभाष्येऽप्युक्तम्—श्रोतव्यः पूर्वमाचार्यत आगमतश्च पाश्चान्मन्तव्यस्तर्कतश्च।

अभ्यर्हितोक्तिश्च—

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥

कुसुमाञ्जल्यामुक्तञ्चोदयनेन—

न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।
उपसनैव क्रियते श्रवणानन्तरागता॥

पूर्वम् आत्मादीनां पदार्थानां श्रवणमागमतः पश्चाद् युक्तिभिर्मननं तस्य शास्त्रसम्मतमनुमानमेव अन्वीक्षापदभाक्। अन्वीक्षानिर्वाहार्थमेव न्यायशास्त्रस्याविर्भावः। अत एव न्यायविद्या आन्वीक्षिकीपदेनापि व्यपदिश्यते, भाष्यकृता वात्स्यायनेन प्रत्यक्षागमयोरविरोध्यनुमानम् अन्वीक्षापदेन न्यायनाम्ना वा व्यपदिष्टम्। आन्वीक्षिकीमात्रादेव नाध्यात्मविद्या अपि तु अध्यात्मबोधस्य विशिष्टविश्लेषणोपस्थापकतया अध्यात्मविद्या न्यायविद्येति। अस्यामान्वीक्षिक्यां तर्कस्य प्राधान्येन निरूपणं तदाधारतैव समेषां तत्त्वानां प्रकाशनम् अस्या विद्याया महोपकारकत्वमनर्घत्वं प्रदीपकत्वञ्च प्रख्यापयति। अत एव तर्कविद्यापदेनापि न्यायशास्त्रं व्यपदिष्टं भवति। अत एव चास्या अध्येतारस्तार्किका इति उद्घोष्यन्ते।

उपनिषदादिषु चर्च्यमाणतया न्यायविद्या प्राचीनतमेति न तत्र विमतिर्विदितवेदितव्यानां मनीषिणां केषाञ्चिदपि।

मुण्डकोपनिषदि ब्रह्मणो निःश्वसितानि ऋग्वेदयुजर्वेदसामवेदाथर्ववेद-शिक्षाकल्पव्याकरण-निरुक्तछन्दोज्यौतिषशास्त्राणि प्रथितानि। सुबालोपनिषदि ब्रह्मणो निःश्वसितानि ऋग्वेदयजुर्वेदसामवेदशिक्षाकल्पव्याकरणनिरुक्तछन्दोज्यौतिषन्यायमीमांसाधर्मशास्त्रादीनि व्याख्यानरूपेण वर्णितानि किं बहुना वेदेष्वपि समेषामपि विद्यास्थानानामुल्लेखोऽवाप्यते।

तत्रापरा—ऋग्वेदो यजुर्वेदःसामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषम् इति मुण्डकोपनिषदि १।१।१५। तस्यैतस्य महतो भूतस्य निःश्वसितमेवैतद् ऋग्वेदो यजुर्वेदः सामवेदः शिक्षा कल्पो व्याकरणं निरुक्त छन्दो विदितं ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि इति सुबालोपनिषदि २।२। श्रूयते।

आचार्यजयन्तभट्टोऽपि वेदानिव विद्यास्थानान्यपि प्रवाहरूपेण अनादीनीति ब्रूते। सन्दिहानो भट्टो वक्ति अक्षपादात् पूर्वं वेदप्रामाण्यं किमाधारकमिति कथनं न्यूनं जैमिनेः पूर्वं वेदार्थव्याख्यानं पाणिनेः पूर्वं पदानामनुशासनं पिङ्गलात्पूर्वं छन्दसां रचना च किमाधारिकेत्यपि वक्तव्यमतः सर्गारम्भादेव वेदा इव सकला अपि विद्या प्रवर्तमाना अद्यावधि राजन्ते। समासव्यासमूलक एतासां प्रवर्तकानां निर्देशः केवलं प्राप्यते। पुरुषार्थसाधनज्ञानसाधकत्वेन विद्यास्थानत्वेन निर्दिष्टा इमा विद्योतन्ते।

नन्वक्षपादात्पूर्वं कुतो वेदप्रामाण्यनिश्चय आसीत्? अत्यल्पमिदमुच्यते। जैमिनेः पूर्वं केन वेदार्थो व्याख्यातः? पाणिनेः पूर्वं केन पदानि व्युत्पादितानि? पिङ्गलात्पूर्वं केन च छन्दांसि रचितानि? आदिसर्गात् प्रभृति वेदवदिमाः प्रवृत्ताः। संक्षेपविस्तरविवक्षया तु ताँस्ताँस्तत्र कर्तॄन्नाचक्षते। न्या० म० पृ० ५।

'वेदनं विद्या, तच्च न घटादिवेदनम्, अपि तु पुरुषार्थसाधनवेदनम्। विद्यायाः स्थानमाश्रय उपाय इत्यर्थः। न्या० म० पृ० ४।

विश्वनाथपञ्चाननेन निजीयन्यायसूत्रवृत्तौ उपाङ्गत्वेन न्यायोऽङ्गीकृतः। मीमांसान्यायस्तर्कश्च उपाङ्गत्वेन निर्दिष्टाः। (मीमांसान्यायतर्कश्च उपाङ्गःपरिकीर्त्तितः, न्या० सू० वृ० १।१।१) न्यायविद्यां प्रशंसन् आचार्यजयन्तभट्टो न्यायशास्त्रं निखिलशास्त्राणां मूलस्तम्भं मनुते।

वेदे तार्किकैरुपस्थापितकुतर्कैः प्रामाण्यविप्लवे आस्थाया अभावे बहुवित्तव्ययपरिश्रमादिभिः संसाध्ये वेदार्थानुष्ठाने सज्जनानां प्रवृत्तिर्न जायेत। वेदानां मान्यताया म्लाने मीमांसादिविद्यास्थानानां किमपि स्थानं न स्थास्यति। अतः सर्वान् कुतर्कान् खण्डयित्वा दृढभावनया वेदप्रामाण्याधायकेन न्यायोपदेशक्षमेनाक्षपादेन दृष्टं न्यायविस्तरशास्त्रमन्यासां विद्यानां प्रतिष्ठाकारणमस्ति। अत एव न्यायविद्या परविद्या श्रेष्ठं विद्यास्थानं वर्तते। अप्रामाण्यं निराकृत्य वेदस्य प्रामाण्यं समर्थयन् न्यायविस्तरो वेदानामुपकारक इत्यत्र नास्ति संशीतिः।

मीमांसाशास्त्रेऽपि न्यायविस्तर एव विद्यास्थानमिति नोचितम्। प्रसङ्गेऽत्र न्यायद्वारा अर्थविचार एव क्रियते अतो मीमांसां वाक्यार्थविद्यां न्यायञ्च प्रामाण्यविद्यामाचार्यो मनुते। न्या० म० पृ० ३-४।

एषा न्यायविद्या प्रमाणादिपदार्थान् विभज्य सर्वासां विद्यानां प्रकाशिका सर्वेषां कर्मणामुपायस्तथा समस्तधर्माणामाश्रयः परिगीयते। एतद्द्वारा व्युत्पादिततर्कैः परिशोधितैः प्रमाणैः प्रकाशितानां धर्माणां प्रकाशनमपराभिर्विद्याभिः क्रियते। धर्मद्वारा समस्तविद्यानामुपकारिकैषा न्यायविद्या। विद्योपदेशप्रकरणेऽमुमेवार्थमुपोद्बलयत्यर्थशास्त्रम्—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥

न्या० भा० १।१।१ पृ० ५।

न्यायशास्त्रे प्रतिपादिताः षोडश पदार्थाः समस्तविद्यानामुपजीव्याः। उक्तप्रकारेण निश्चप्रचं यन्महर्षिणा अक्षपादेनैवास्य शास्त्रस्य प्रकाशनं प्राग्विहितम्। किन्तु विद्याया अस्याः स स्रष्टा न। महाभारते एवंविध उल्लेखो विद्यते यद् धर्माणां सदाचारणाञ्च प्रतिष्ठापनाय देवैः स्वयम्भूः प्रार्थितः। प्रसन्नो भगवान् स्वयम्भूः लक्षाध्यायात्मके ग्रन्थे सर्वां विद्यां प्रकाशितवान्। धर्मार्थकाममोक्षाख्यपुरुषार्थ-प्रकाशनाय त्रयी, आन्वीक्षिकी, वार्त्ता, दण्डनीतिश्चेति चतस्रो विद्यास्तेन प्रकाशिताः।

त्रयी चान्वीक्षिकी चैव वार्त्ता च भरतर्षभः।
दण्डनीतिश्च विपुला विद्यास्तत्र निर्दशिताः॥ (शान्तिपर्व ५९।३३)

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च।
एवं व्याहृतयश्चासन् प्रणवो ह्यस्य ऊहतः॥ (भाग० तृ. स्क. १२।४४)

न्यायादीनां पूर्वादिक्रमेणोत्पत्तिमाह—आन्वीक्षिकीति।

आन्वीक्षिक्याद्या मोक्षधर्मकामार्थविद्याः। दह्रतोः हृदयाकाशात्। (श्रीधरस्वामी) उक्तं महर्षिणा वात्स्यायनेनापि न्यायभाष्ये यन्मानवानां कल्याणाय पूर्वोक्तत्रय्यादिविद्या उपदिष्टाः। आसु विद्या चतुर्थी आन्वीक्षिकी वर्तते। उक्तं भागवतेऽपि यदान्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च चतस्रो विद्या व्याहृतिः प्रमाणञ्च विश्वस्रष्टु र्हृदयदेशादागतम्।

अनया रीत्या विद्यासु आन्वीक्षिक्या प्रथमं स्थानं वर्तते लोककल्याणाय च भागवतानुग्रहप्रदत्तं शास्त्रमस्ति। छान्दोग्योपनिषदः प्रथमाध्यायस्य प्रथमखण्डेऽपि नारदसनत्कुमारयोर्वार्त्तालापात् प्रतीयते यदेषा विद्या वेदेन सहैव प्रादुर्भूता। सनत्कुमारेण नारदः पृष्टः त्वया का विद्या अधीता।[१] नारदेनोक्तं भगवन् ऋग्वेद

---

१. ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां दूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवयजनविद्यामेतद्भगवोऽध्येमि। छा० ७।१।२

यजुर्वेदसामवेदाथर्ववेदा मया अधीताः। पञ्चमवेदं इतिहासं पुराणञ्च वेद्मि। व्याकरणशास्त्रस्यापि ज्ञानं ममास्ति। श्राद्धकल्पगणितोत्पादविद्यामहाकालादिनिधिशास्त्रवाकोवाक्यैकायननीतिशास्त्रदेवविद्याभूतविद्याक्षात्रविद्यानक्षत्रविद्यासर्पविद्या-देवयजननृत्यगीतवाद्यशिल्पादिविज्ञानद्गायिकादिविद्यानां बोधो ममास्ति ।

मांसक्षीरोदनमधुकुल्याभिस्तर्पयेत् पठन् ।
वाकोवाक्यं पुराणानि इतिहासानि चान्वहम् ।। (छा० २।१४।११)

तत्र वाकोवाक्यं नाम तर्कशास्त्रं देवविद्या-निरुक्तब्रह्मविद्या (वेदाङ्गशिक्षा-कल्पविज्ञानादिविद्या) भूतविद्या-भूततन्त्र क्षात्रविद्या-धनुर्विधा, नक्षत्रविद्या ज्यौतिषं शास्त्रं सर्पविद्या गारुडशास्त्रमवधेयम् ।

आचार्यशङ्करेण वाकोवाक्यशब्दस्यार्थस्तर्कशास्त्रं कृतम्। (वाकोवाक्यं तर्कशास्त्रम्) संहिताकारेण कात्ययनेन वाकोवाक्यस्य फलं निर्दिष्टम्। गौतमेन बहुश्रुतब्राह्मण-लक्षणोल्लेखप्रसङ्गे वेदादिशास्त्रज्ञानेन सह वाकोवाक्यशास्त्रस्यापि ज्ञानमपेक्षितं मन्यते स एव बहुश्रुतो भवति लोकवेदवेदाङ्गविद् वाकोवाक्येतिहासपुराणकुशलः (२ अष्टम्) अमरसिंहो अमरकोषे आन्वीक्षिकी शब्दार्थस्तर्कविद्येति ब्रूते। (अ. स्वर्गवर्ग १५५।५। महाभारते सभापर्वणि बहुश्रुतनारदस्य विद्योपवर्णनप्रसंगे पञ्चावयवन्यायवाक्यस्य गुणदोषवेत्ता नारद इत्युक्तम् ।

पञ्चावयववाक्यस्य गुणदोषवित् (म. सभापर्व ५।५)

अनया दिशा महाभारतोपाख्यानेन उपनिषदि तर्कविद्यावगत्या पञ्चावयवहेत्वाभासादिवेत्ता नारद इति निश्चीयते ।

याज्ञवल्क्यसंहितायां चतुर्दशविद्यासु न्यायस्यापि गणना कृता विद्यते। पुराण-न्यायमीमांसाद्रि (या० सं० १।६१) विष्णुपुराणे चतुर्दशविद्यागणनाप्रसंगे न्याय-विस्तर उक्तः। शब्दानमूनाश्रित्य आचार्याणां परस्पर मतभेदोऽवाप्यते। आचार्य-जयन्तभट्टो न्यायविस्तरस्यार्थं न्यायविद्यां मनुते एषैव च आन्वीक्षिकीति प्रतिपादयति। किन्तु अन्यैर्मनीषिभिर्न्यायवैशेषिकसांख्यपातञ्जलादीनां बोधकत्वेन विस्तरशब्दप्रयोग इत्यङ्गीक्रियते। वैशेषिकं शास्त्रं न्यायशास्त्रसमं तन्त्रमतो वैशेषिकस्य पृथगुल्लेखो न क्रियते। महाभारते नानान्यायतन्त्राणां चर्चा विद्यते। टीकाकारो नीलकण्ठोऽपि न्यायतन्त्रस्य व्याख्यां मनुते ।

न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः ।
लेखागमसदाचारैर्यदुक्तं तदुपास्यताम् ।।
(महाभा. शा. प. २१०।२२)

न्यायतन्त्राणि तार्किकवैशेषिककापिलपातञ्जलादीनि हेतुर्युक्तिः। आगमो वेदः सदाचारः प्रत्यक्षं तैः प्रमाणैः कृत्वा एतैर्मुनिभिर्यद् ब्रह्म उक्तं तदुपास्यताम्-(नीलकण्ठः)

इदं सत्यं यदान्वीक्षिकी केवलं तर्कविद्यैव न अपि त्वध्यात्मविद्यापि विद्यते। भगवान् षष्ठावतारे दत्तात्रेयालर्कप्रह्लादेभ्यः अन्वीक्षिक्या ज्ञानं ददौ। यथा भागवते—

**षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनुसूयया।**
**आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य उचिवान्** ॥ (भाग १।३।११)

प्रसङ्गेऽत्र श्रीधरस्वामिनापि आन्वीक्षिक्या अर्थ अध्यात्मविद्येति स्वीकृतम्। तन्त्रसंग्रहस्य शमतोषणविद्यालङ्कारः प्राणतोषिण्याम् आन्वीक्षिकी दत्तात्रेयोपस्थापिता आन्वीक्षिकी गौतमोक्ता चैकैवेति मनुते। महाभारतस्य शान्तिपर्वणि आन्वीक्षिक्या निन्दायाः खण्डनश्च तेन कृतम्। अर्थशास्त्रे कौटिल्यः सांख्यमपि आन्वीक्षिकीत्वेन गणयति।

न्यायग्रन्थस्य टीकाकारेण महामनीषिणा राधामोहनगोस्वामिभट्टाचार्येण अन्वीक्षार्थं विदधता श्रवणानन्तरं वेदोपदिष्टमात्ममननमन्वीक्षा तन्निर्वाहकशास्त्रं विद्या वा आन्वीक्षिकीति मन्यते।

यद्यपि अन्यान्यपि शास्त्राणि आन्वीक्षिकीपदभाञ्जि किन्तु न्यायशास्त्रे न्यायस्य बलवत्त्वेन तदर्थमेव च पौनः पुन्येन आन्वीक्षिकीशब्दप्रयोगेण गौतमीयन्यायविद्या एवान्वीक्षिकीति रूढिः प्रथिता जगति। अनया रीत्या न्यायशास्त्रबोधकान्वीक्षिकीशब्दो योगरूढस्तदर्थे यौगिकार्थमवगत्यैव मनीषिनिवहा अध्यात्मविद्याबोधनाय मननशास्त्रबोधनाय वा आन्वीक्षिकीशब्दं प्रयुञ्जते।

महर्षिर्वात्स्यायनो न्यायशास्त्रस्य न्यायविद्याया वा विशदं विवेचनं कृतवान्। प्रमाणप्रमेययोरन्तर्भावाच्चतुर्दशपदार्थानां पृथग्गणना व्यर्थेति प्रसङ्गे वात्स्यायनेनोक्तं यत्संशयादिचतुर्दशपदार्था अस्या आन्वीक्षिक्या विद्याया असाधारणप्रतिपाद्यविषयाः सन्ति। अतः प्रस्थानभेदादेव विद्यानां भेदः सिद्ध्यति। आन्वीक्षिक्याः प्रस्थानं संशयादिचतुर्दशपदार्थाः सन्ति। एषां पदार्थानामन्यत्र विद्यासु वर्णनं नोपलब्धं विद्यते। न्यायवार्तिकार उद्योतकरो भाष्यकृदुक्तं समर्थयन् न्यायविद्यायां चतुर्दशविद्यानामुल्लेख एव अस्याश्चतुर्थविद्यायाः सिद्धौ समर्थो भवति अन्यथा अध्यात्ममात्रविद्याया अस्याः त्रय्यामेव अन्तर्भावान्न पार्थक्यं कदापि सम्भवम्। उक्तरीत्या न्यायविद्या प्राचीनतमा अभ्यर्हिततमा चेतिप्रदिपादने न कापि विप्रतिपत्तिः। वेदान्तादिविद्या अस्या उपबृंहणमात्रम्। यत्र मिथ्यातत्त्वस्य निरुक्ती राजते। अतः कारणादेव आचार्यशङ्करो महर्षिगौतमं प्रति अतिशयश्रद्धां प्रदर्शयन् तदर्थे 'भगवान् महर्षिगौतम इति प्रतिपादयति।

आन्वीक्षिक्या महत्त्व-ज्ञापनं मनुयाज्ञवल्क्यगौतमादि-द्वारारचितसंहितासु उपलब्धं विद्यते—

त्रैविद्येभ्यस्त्रयीं विद्याद् दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः॥ (म० स्मृ० ७।४७)

स्वरन्ध्रगोप्तान्वीक्षिक्यां दण्डनीत्यान्तथैव च।
विनीतस्त्वथ वार्त्तायां त्रय्याञ्चैव नराधिपः॥ (म० १।३११)

याज्ञवक्यसंहिता १।३११।

राजा सर्वस्येष्टे ब्राह्मणवर्जं साधुकारी।
स्यात्साधुवादी त्रय्यामान्वीक्षिक्यां चाभिविनीतः॥ गौ० सं० अ० ११।

राज्ञ आन्वीक्षिक्या ज्ञानमावश्यकमिति मन्वादिना प्रतिपादितम्। विश्वनाथोऽपि न्यायसूत्रवृत्तौ आन्वीक्षिक्या अर्थो न्यायशास्त्रमिति मनुते। मेधातिथिस्तर्कविद्यामर्थशास्त्रञ्च आन्वीक्षिकीं मत्वा उपसंहारे आन्वीक्षिक्या अर्थमात्मविद्यां कृतवान् राज्ञ आन्वीक्षिक्या ज्ञानमपेक्षितमित्यङ्गीकारेण प्रतीयते यदिद शास्त्रं वेदानुकूलं समीचीनं शास्त्रम्। अन्यथा राजार्थमस्य ज्ञानन्नापेक्षितं स्यात्। अत आन्वीक्षिकी नास्तिकतत्त्वविद्या न विद्यते। वेदविरुद्धायास्तर्कविद्याया निन्दा मनुना विहिता महाभारतेऽपि तथैव वेदप्रतिकूलाया एव न्यायविद्यायास्तिरस्कारः। जंयन्तभट्टेन आगमडम्बरे न्यायसिद्धान्तः समर्थितः। आगमस्य प्रामाण्यं स्वीकृतं तथा ईश्वरो जगत्स्रष्टृत्वेनाङ्गीकृतः। अनया रीत्या सुस्पष्टं यदिदं शास्त्रं वेदविरुद्धन्नास्ति। मेधातिथिः सुस्पष्टैः शब्दैः वेदविरुद्धशास्त्रं निन्दितवान् नैतामध्यात्मविद्यामान्वीक्षिकीम्। राज्ञे आन्वीक्षिक्या विद्याया उपदेशप्रसङ्गे उपदिशति यदान्वीक्षिकी केवलम् आत्मविद्यैव न अपि तु युक्तिभिस्तत्त्वनिर्णयसाधकं शास्त्रं न्यायशास्त्रमस्ति। महाभारते राजधर्मप्रसङ्गे राजशास्त्रज्ञानेन सह युक्तिशास्त्रस्य ज्ञानमत्यन्तमावश्यकमिति निर्दिष्टम्—

प्रजापालनयुक्तश्च न क्षतिं लभते क्वचित्।
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत॥
म० अ० प० १०४। १३८

श्रीधरस्वामिना आन्वीक्षिक्या अर्थस्तर्कविद्या कृता। महर्षेर्याज्ञवल्क्यस्य जनकस्य च संवादप्रसङ्गे महाभारते लिखितं यद् विश्वावसुना वेदाय चतुर्विंशतिः प्रश्ना आन्वीक्षिकीसम्बद्धश्चैकः प्रश्नो विहितस्तत्समाधानाय सरस्वतीं देवीं ध्यात्वा आन्वीक्षिक्याः साहाय्येन उपनिषद्वाक्यानि आलोडितानि। मोक्षाय प्रतिष्ठापितामान्वीक्षिकीं

विद्यां तुभ्यमुपदिशामि । याज्ञवल्क्येन प्रस्तुतप्रश्नसमाधानप्रसङ्गे गौतममतस्य व्याख्या कृता नीलकण्ठेनाप्यङ्गीकृतो यद् विश्वावसोरस्या आन्वीक्षिक्या विषये एव प्रश्नाः। याज्ञवल्क्यस्य मन्थनं तर्कविद्यामाश्रित्यैव विद्यते । अनया रीत्या मोक्षसाधनभूता आन्वीक्षिकी विद्या मननरूपैव । आन्वीक्षिकीशून्यस्य पुरुषस्य साङ्गोपाङ्गवेदाध्ययनं भारभूतं विद्यते । न्यायविद्यामन्तरा प्रायोऽसम्भव एव मोक्षः उदयनाचार्येणापि आन्वीक्षिकी न्यायविद्येति व्याजहार । श्रीहर्षोऽपि नैषधीयचरिते गौतमीयविद्या आन्वीक्षिकी मोक्षसाधिकेति ब्रूते । प्रसङ्गेऽमुना इदमपि सिध्यति यन्महाभारते या आन्वीक्षिकी निरर्थिकेति उक्ता सैव वेदाद्यनुगता तर्कविद्या प्रामाणिकी अनिन्द्यैव ।

शान्तिपर्वणि महाभारते इन्द्रकाश्यपसंवादे वेदनिन्दको नास्तिकः सर्वं शङ्कास्पदं मन्वानो वेदवाक्यविषये ब्राह्मणानामाक्रामकः कटुभाषी मूर्ख इत्यादिभिः शब्दैः स एव निन्दितो यो वैदिकमतं परित्यज्य नास्तिकमतमवलम्बते । बार्हस्पत्यसूत्रसमर्थितनास्तिकतर्कविद्या एव निन्दिता तत्र च आन्वीक्षिकीपदप्रयोगो गौण एव । अत एव अनुशासनपर्वणि स्पष्टं प्रतिपादितं यत् केवलं प्रत्यक्षं प्रमाणं मन्वानो नास्तित्ववादी संशयवादी अज्ञो नरो निन्दितः ।

प्रत्यक्षं कारणं दृष्ट्वा हेतुकाः प्राज्ञमानिनः ।<br>
नास्तीत्येवं व्यवस्यन्ति सत्यं संशयमेव च ॥ ( अनुशासनपर्व १६२।५-६ )

तद्युक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ।<br>
हेतुकान् वकवृतींश्च वाङ्मात्रेणापि नार्चयेत् । ( मनु० ४।३० )

प्रसङ्गेऽत्र पाखण्डी वकवृतिः निन्दितव्यक्तिर्नास्तिकतार्किक एव सर्वत्र तत्र तत्र तिरस्कृतः। मनुना तादृश एव नास्तिको निन्दितो धर्मतत्त्वनिर्णयाय महापरिषदं वर्णयता मनुना वेदमीमांसातर्कनिरुक्तधर्मशास्त्रज्ञानेन सह हेतुज्ञपण्डितो निर्दिष्टः । सन्दर्भेऽत्र मेधातिथिकुल्लुकभट्टाभ्यां श्रुतिस्मृत्यनुगो न्यायशास्त्रज्ञश्च आदृतः । जयन्तभट्टेन न्यायमञ्जर्यां परिषदे नैयायिक एव सदस्यो निर्दिष्टः । वाल्मीकिरामायणे आन्वीक्षिकी निर्दिष्टा । किन्तु तत्प्रसङ्गे वेदविरुद्धतर्कप्रस्तावकस्यैव ग्रहणम् । यतो हि लोकायतिकशब्द एव तत्र प्रयुक्तो विद्यते । तादृशामेव नास्तिकानां मनुसहितायां महाभारते च तार्किकाणां निन्दा कृता विद्यते ये वेदविरुद्धं तर्कमुपस्थापयन्ति । अत एव अर्थशास्त्रे सर्वविद्यानां प्रकाशिका आन्वक्षिकी अभिमता । प्राचीनकाले नैयायिकानां प्रसिद्धिर्योगद्वारा जाता । अर्थशास्त्रे योगशब्देन न्यायवैशेषिकयोरान्वीक्षिक्यामन्तर्भावः । क्लीवलिङ्गकयोगशब्दप्रयोगेण केवलं वैशेषिकमेवाभिप्रेतं भवितुमर्हति । अतो न्यायविद्यैषा सर्वथा अभ्यर्हिता न्यायशास्त्रपदेन व्यपदिश्यते । अत्र कस्यापि विषयस्य विचारो वादजल्पवितण्डासु जायते । प्रश्नस्य सदुत्तरस्य च सम्यक् चर्चा न्यायशास्त्रे एव राजते विचारोपयोगिनः संशयादयश्चतुर्दशपदार्था न्यायशास्त्रस्यैव

विद्यन्ते। अनुमानप्रमाणस्य हेत्वाभासस्य च निरूपणं न्यायशास्त्रे एव राजते। शास्त्रार्थनिर्णयाय अनुमानप्रमाणस्य सम्यग् ज्ञानं नितान्तमावश्यकम्। तैत्तिरीयकारण्यकस्य प्रथमप्रपाठकस्य तृतीयानुवाचि प्रत्यक्षस्मृतिपुराणादिशब्दप्रमाणेन सह अनुमानप्रमाणस्योल्लेखो विद्यते।

स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयमेतैरादित्यमण्डलं सर्वैरेव विधास्यते। (तै० आ० १।३)

मनुना निजीयस्मृतिग्रन्थे परिषद्वर्णनात्प्रागभिहितं यद् धर्मतत्त्वं वाञ्छता पुरुषेण प्रत्यक्षागमप्रमाणाभ्यां सह अनुमानप्रमाणमपि अत्यन्तमभ्यसनीयं तदनन्तरं स्मृतौ चर्चितं यद् ये वेदशास्त्राविरोधितर्कैः शास्त्रं परिशीलयन्ति त एव शास्त्रगम्यधर्मं सम्यगवगच्छन्ति—

प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम्।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता॥
आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ (१२।१०५।६)

प्रसङ्गेऽत्र तर्कशब्दस्य प्रयोगोऽर्थो वा तर्कशास्त्रे रूपेऽर्थे विद्यते न्यायसूत्रवृत्तिकारो विश्वनाथोऽस्य विषयस्याभिव्यक्तये पद्यमुदाजहार अतो विश्वनाथदृष्टावपि तर्कशब्दस्यायं प्रयोगस्तर्कशास्त्रार्थक एव। अनुमानप्रमाणार्थेऽपि तर्कशब्दस्य प्रयोगोऽवलोक्यते। आचार्यशङ्करेणापि एतादृशः प्रयोगः कृतः। किन्तु मनुना त्रीणि प्रमाणान्युक्त्वा प्रमाणसहकारित्वेन तर्क ऊहितः। अतः तर्कशब्दोऽयं न्यायदर्शनस्य षोडशपदार्थान्तर्गततर्कस्यैव परिचायकः। अयञ्च समेषां प्रमाणानां सहकारीति मन्तव्यम्। तात्पर्यटीकाकृता वाचस्पतिमिश्रेण तार्किकरक्षाग्रन्थरचयितृणा वरदराजेन च न्यायदर्शनोक्तपदार्थं व्याकुर्वतोक्तं मीमांसादर्शनोक्ततर्का एव न्यायदर्शनोक्तपदार्थाः सन्ति। तर्कस्य नाम मीमांसा विद्यते। अयञ्च न्यायदर्शनोक्तषोडशपदार्थान्तर्गत एव। तर्कपदार्थाद्भिन्नं किमपि न विद्यते। वरदराजेन मनुवचनं प्रमाणीकृत्य तर्कः प्रमाणसहकारीति निरूपितम्। वेदान्तसूत्रे बादरायणेनापि उक्तम्—

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः।२।१।११

अन्यप्रकारेण अनुमानानुष्ठानेन अनुमानज्ञानेनापि मुक्तिर्भवितुं नार्हा। अर्थाच्छास्त्रनिरपेक्षतर्कजन्यज्ञानं नैव मोक्षसाधनम्। तर्कस्य प्रतिष्ठा नास्ति इति वदतापि शङ्करेण शेषभागे तर्कस्य प्रतिष्ठा नास्तीति न, यतो हि एवं लोकयात्रानिर्वाह एव दुर्लभः। यदि तर्कमात्रमप्रतिष्ठितं तदा अनुमानप्रमाणं संदिग्धं भवेत्, अस्यां स्थितौ तर्कोऽप्रतिष्ठित इति केन प्रमाणेन निर्णेतुं शक्यते। अनुमानप्रमाणेनैव तर्कमात्रस्य

अप्रतिष्ठा विधेया यदि तर्कमात्रं सन्दिग्धप्रामाण्यकं तदा तर्कमात्रस्याप्रतिष्ठा तर्केण दुर्घटा। आचार्यशङ्करेण ईदृशान् नानाविचारानुद्भाव्य तर्कमात्रस्याप्रतिष्ठितत्वं नोक्तम्। वेदार्थनिर्णयाय च नानातर्काणामावश्यकता सुतरां सुस्फुटा। अतस्तर्कोऽप्रतिष्ठितो नास्ति। एतत्समर्थने पूर्वोक्तमनुवचनानि शङ्करेणोद्धृतानि। आनन्दगिरिणा मनुवाक्यं व्याकुर्वता धर्मशब्दस्य अर्थो ब्रह्मेत्युक्तम्। विचारद्वारा धर्मनिर्णयवद् ब्रह्मनिर्णयेऽपि वेदशास्त्राविरोधितर्कस्य परमावश्यकतोक्ता। विचारद्वारा शास्त्रार्थकर्तुः पुरुषस्य कृते तर्कावलम्बनं नितरामावश्यकम्। वेदान्तवाक्यमीमांसा तर्क एव।

तदविरोधिनः पूर्वमीमांसाया न्यायशास्त्रस्य च तर्का वेदान्तवाक्यमीमांसाया उपकरणभूताः सन्ति। इदं च वाचस्पतिमिश्रव्याख्यानेन सुस्पष्टम्—

> वेदान्तमीमांसा तावत्तर्क एव तदविरोधिनश्च येऽन्येऽपि तर्का अध्वरमीमांसायां न्याये च वेदप्रत्यक्षादिप्रामाण्यपरिशोधनादिषूक्तास्ते उपकरण यस्याः सा तथोक्ताः ( भामती १।१।१ )

वेदान्तदर्शने महर्षेर्वेदव्यासस्य सिद्धान्तं समर्थयता वेदान्तिना युक्तेः = अनुमानप्रमाणस्याश्रयणं कृतमेव। 'युक्तेः शब्दान्तरा च' इति सूत्रविश्लेषणप्रसङ्गे आचार्येण शङ्करेणानुमानमङ्गीकृतम्। वृहदारण्यकभाष्ये आचार्यशङ्करेण आत्मनो नित्यत्वं साधयता उपसंहारे न्यायाच्चेत्युक्तम्। अनेन व्याख्यानेन तर्क एवाश्रितः। दार्शनिकं व्याख्यानं मननमन्तरा कदापि पूर्णं न भवति। फलतः स्वकीयसिद्धान्तसमर्थनाय शास्त्रार्थव्याख्यानार्थं सर्वैराचार्यैस्तर्काऽवलम्बितः। हेतुम्परित्यज्य विचारशास्त्रे दर्शनशास्त्रे वा तर्कोऽवश्यमाश्रयितव्यः। 'शास्त्रयोनित्वात्' ( ब्र० सू० १।१।३ ) 'तत्तु समन्वयात्' (ब्र० सू० १।१।४) इत्यादौ सर्वत्र तर्कमन्तरा साध्वी गतिरन्या कापि नावद्योत्यते। गीतायां भगवता श्रीकृष्णेनोक्तम्—

> ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः।

अस्या व्याख्यानं कुर्वता शङ्करेण हेतुमद्भिरित्यस्य युक्तियुक्तैरित्यर्थः कृतः। श्रीधरस्वामिनापि 'इच्छतेर्नाशब्दम् (ब्र० सू० १।१।५) इत्यादिवेदान्तसूत्राणां साहाय्यं नीतम्। अनया रीत्या शब्दप्रमाणेऽपि सहकारितया युक्तिरावश्यकी। अस्यां स्थितौ हेतोः स्वरूपं किन्? हेतुना कस्य साध्यस्य सिद्धिर्भवति? कश्च हेतुः साध्यसिद्धौ असमर्थः? हेतोः को दोषः? गुणश्च कः? इत्यादीनां परिज्ञानं नितान्तमावश्यकम्। इत्थं शास्त्रार्थनिर्णयाय शास्त्रस्य तात्पर्यं किम्? शास्त्रे कुत्र कः शब्दः कस्मिन्नर्थे प्रयुक्तः? इत्यादीनां परिचयाय तर्कः परममादृतः। फलतः हेतोर्हेत्वाभासस्य सम्यग् ज्ञानं न्यायशास्त्रमन्तरा न संभवमेतदेव न्यायविद्याया मुख्यं प्रस्थानम्। वेदार्थबोधसाधने न्यायस्य मीमांसायाश्च नाम निर्दिष्टम्। चरणव्यूहे सुस्पष्टम्—

'मीमांसान्यायतर्काश्च उपाङ्गः परिकीर्त्तितः ।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते' ॥

तथा प्रतिपदमनुपद छन्दो भाषा धर्मो मीमांसान्यायतर्का इत्युपाङ्गानि ।

उपनिषद्वाक्यादिदं सुसिद्धं यन्न्यायशास्त्रं प्राचीनम् । वेदेन सहैव बृहदारण्यकोपनिषदि 'सूत्राणि' २।४।१० इत्ययं शब्दोऽवाप्यते । याज्ञवल्क्यसंहितायामपि 'सूत्राणि भाष्याणि ३।१८९ इत्यादिकथनेन सूत्रवद् भाष्यस्योल्लेखोऽपि प्राप्यते । भाष्यकृता वात्स्यायनेनापि न्यायभाष्यान्ते 'प्रतिभातम्' इत्युक्तम्:—

योऽक्षपादमृषिं न्यायः प्रत्यभाद् वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥ (न्या० भा० पृ० १२००)

अक्षपाद महर्षिं प्रति 'न्यायोऽभाद्' इत्युक्तं न्यायशास्त्रस्य कर्त्ता अक्षपाद इति नोक्तम् । वार्तिकारम्भे उद्योतकरेणापि अक्षपादो न्यायस्य वक्ता न तु कर्त्तेत्युक्तम् । मननं न्यायशास्त्रमन्तरा न संभवम् । श्रवणानन्तरमर्थाच्छाब्दबोधानन्तरमनुमानप्रमाणेन निर्णीततत्त्वस्य ज्ञानमेव मननम् । श्रुततत्त्वस्य दार्ढ्याय दृढश्रद्धायै च नानाहेतुभिर्ज्ञाततत्त्वस्य पुनः पुनरनुमानम्—मननमुपदिष्टम् । निदिध्यासनात्मकं ध्यानं मननानन्तरमेव संभवम् । आचार्यशङ्करेणापि उक्तं यद् वेदाविरोधि अनुमानप्रमाणमपि श्रुतवेदार्थज्ञानाय आवश्यकमस्ति । अत एव आचार्यशङ्करेणोक्तम् —''पश्चान्मन्तव्यस्तर्कतः'' अक्षपादेनापि शास्त्रविरुद्धमनुमानं न न्यायोऽपि तु न्यायाभासस्तस्य अप्रामाण्यञ्च ।

उपर्युक्तरीत्या प्रत्यक्षागमाभ्यामविरुद्धमनुमानमन्वीक्षा तस्या निर्वाहार्थमेव आन्वीक्षिकी विद्या प्रकाशिता । इदं सत्यं यद् गुरुशास्त्रसाहाय्येन विचारद्वारा श्रवणमननाभ्यां तत्त्वस्य परोक्षं ज्ञानमेवोत्पन्नं भवति । अत्र विचारादानामावश्यकता सुस्फुटा । शास्त्रोक्तोपायैः कर्मद्वारा चित्तशुद्धिसम्पादनपूर्वकं ध्यानादीनां फलभूतं चरमज्ञेयतत्त्वं साक्षात्कृतं भवति अत एव सर्वैर्जिज्ञासुभिर्मोक्षकामैः योगशास्त्रोक्तोपायानवलम्ब्य तत्त्वसाक्षात्कारो निष्पाद्यो भवति ।

तत्त्वसाक्षात्कारेण सर्वे संशयाश्छिन्ना जायन्ते । महर्षिणा गौतमेन षोडशपदार्थान्तर्गतसिद्धान्तस्याप्युल्लेखोऽकारि । दर्शनान्तराणामपि सिद्धान्ता इति न सिद्धान्ता यतः सर्वैः सिद्धान्तवादिभिर्विभिन्नप्रकारैस्तर्कैः श्रुतेर्व्याख्या कृता । तत्त्वमननाय न्यायदर्शने देहादिभिन्नो नित्यो विभुः प्रतिशरीरभिन्नोऽनित्यज्ञानवान् जीवसंज्ञां लभमानोऽवद्योतते । तर्कसिद्धान्तमननद्वारैव तत्सिद्धिः सुशका नान्यः पन्थास्तत्प्रकाशकः ।

न्यायदर्शने पञ्चाध्यायाः सन्ति । प्रत्येकमाह्निकद्वयम् तत्र एकस्मिन् दिवसे यावतां सूत्राणां रचना जाता तावतां समूहः आह्निकपदेन व्यपदिश्यते इति केचन ब्रुवते । अनया

रीत्या दशभिर्दिनैर्यावतां सूत्राणां रचना जाता तेषां सङ्घ आह्निकदशकेनोद्घोष्यते। केचन च कथयन्ति यदेकस्मिन् दिने यावतां सूत्राणामध्यापनं जातं तावतां सङ्घ आह्निकपदेन व्यवह्रियते। पण्डिततारानाथेन तर्कवाचस्पतिना आह्निकशब्दस्यार्थः सूत्रग्रन्थभाष्यस्य पाद्यांशव्याख्याविशेषः कृतः। पञ्चाध्यायन्यायसूत्रस्य रचना महर्षिणा गौतमेन कृता विद्यते। अत्र कोऽपि मतभेदो नास्ति। भगवता वात्स्यायनेनास्य भाष्यं विहितम्। वाचस्पतिमिश्रेण उद्योतकरस्य वार्तिकोपरि टीकां विधाय स्वतन्त्रः न्यायसूत्राणां पाठादिनिर्णयाय न्यायसूचीनिबन्धनामकग्रन्थो रचितः।

प्राचीने काले दर्शनशास्त्रस्य चर्चा यथोपलब्धा तथा नाद्य। हिन्दुराजानां शासनावसरे शास्त्रानुशासनानुकूलः समाजः परिचालितो बभूव। भारतीयाः धर्मप्राणा भवन्ति। भारतीयैः स्वीक्रियते यदस्माकं जन्म कर्त्तव्यसाधनायैव न तु केवलं भौतिकविषयोपभोगार्थम्। आविर्भावादामरणान्तं सर्वाः क्रिया धार्मिकनियमैः प्रतिबद्धास्तेषाम्। धर्मप्रधानानां तेषां धर्मरक्षणाय दुष्करं कृत्यं किमपि नासीत्। तद्रक्षणाय प्राणानविगणय्य तत्र संलग्ना नान्यत्र। तेषामध्ययनं धर्मस्तथा आवश्यकजीवनोपयोगितत्त्वदृष्ट्या आसीत्। उक्तं मनुना—

तपोविशेषैर्विविधैर्व्रतैश्च विधिदेशितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥ मनु० स्मृ० २।१६५।

ज्ञानार्जनं भारतीयानां दृष्टौ पावनमुत्कृष्टं तपः। वेदाध्ययनमक्षरग्रहणमात्रन्न अपि तु पूर्णतावाप्तये। सदाचारावगतये च वेदार्थावबोधो नितान्तमावश्यकः। उक्तं निरुक्ते—

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इतः सकलभद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा। नि० १।६।२

कल्याणमीहमानो मानवो वेदार्थावबोधभासुरः सकलमनोरथकुलं बोधविधूतपाप्मा अधिगच्छति। अर्थबोधविधुरो रासभ इव भारवाहो दुःखशतं सततमनुभवति। यद्यपि अक्षरबोधमात्रमपि वेदस्य अपूर्वतासम्पादनायालं तथापि कर्मावबोधचारित्र्यसम्पत्तिश्चार्थबोधमन्तरा दुःशकैव। आपाततः प्रतीयमानस्य विरुद्धार्थस्य विघटनाय वेदार्थमीमांसा नितरामावश्यकी। मनुना स्पष्टमुदीरितम्—ऊहापोहनिपुण एव जनो वेदशास्त्राविरोधितर्कैर्वेदार्थान् सम्यगवगत्य निखिलमानवानुष्ठानाभ्युदयनिःश्रेयसाधकं साधनं वेत्तुं प्रभवति न तु तद्रहितः—

**आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।**
**यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥** मनु० स्मृ० १२।१०६

मनुना पुनः संकेतितं यद्—धर्मशुद्धिमभीप्सतानरेण तर्कतरिसम्पत्त्या निगमजलनिधिमूलकशास्त्रजातार्थानवगत्य साफल्यं भजते नान्यथा—

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ मनु० स्मृ० १२।१९१

धर्मतत्त्वं सर्वथा दुर्विज्ञेयमितिहेतोः तत्समीक्षायै विशिष्टधर्मवेत्तृणामाध्यक्ष्ये धर्मगोष्ठ्या आयोजनं क्रियमाणमासीत् । सा गोष्ठी शास्त्रे चर्चितस्य निगूढधार्मिक-सिद्धान्तस्य निर्णयमूहापोहनिपुणैस्तर्कैः कुर्वन्ती राजमानासीत् । भृशमावश्यकीं गोष्ठीं जगतः कल्याणाय मन्वाना बौद्धा अपि अनेकशस्तादृशीं धर्मगोष्ठीं क्रयमाणाः शुशुभिरे । तस्यां धर्मपरिषदि, त्रिवेदवेत्ता अनुमानकुशलः ऊहापोहप्रवीणशेमुषीको निरुक्तशास्त्राभिज्ञो धर्मशास्त्रतत्त्वज्ञो ब्रह्मचारी गृहस्थो वानप्रस्थश्चेति दशविधा सदस्या विचारगोष्ठीं कुर्वाणा अभवन् ।

त्रयीविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत्स्याद् दशावराः ॥
मनु० स्मृ० १२।१११

जैमिनिना सूच्यते यत्पुरा गुरुकुलमेत्य वेदमधीत्यैव गुरुकुलत्याग इति नासीत् प्रक्रिया अपि तु वेदाध्ययनानन्तरं न्यायादिविचारशास्त्राणां परिशीलनमप्यावश्यक-कर्त्तव्यत्वेन निर्णीतमासीत् । वेदवादविमर्शकौशल्याय न्यायदर्शनादितन्त्राणां सम्यगवबोधः पुरा काले अपेक्षित आसीत् ।

गुरुकुलात्स्मा समावर्तिष्ट कथं नु वेदवाक्यानि विचारयेदित्येवमर्थोऽयमुपदेशः ।

न्यायदर्शनादीनामध्ययनस्य व्यावहारिकबोध एव फलं नोपदिष्टमपि तु तेषां दर्शनानां परमोपयोग आत्मतत्त्वसाक्षात्कार एव इति तदानीन्तननिर्णायिकानां निश्चय आसीत् ।

वेदधर्मशास्त्रादीनामध्ययनस्य प्रयोजनं केवलं वैषयिकसुखावाप्तिरेव नासीत् तदानीमपि तु न्यायमीमांसादितन्त्राणां वेदार्थप्रकाशकानामध्ययनद्वारा परम-पुरुषार्थस्य आत्मसाक्षात्कारस्य अवापः परमकर्त्तव्यत्वेन निर्दिष्ट आसीत् ।

अयन्तु परमो धर्मो यद् योगेनात्मदर्शनम् ।

यद्यपि प्रासङ्गिकी चर्चा भूतभौतिकपदार्थानां बुद्धिवैशद्याय तत्र तत्र न्यायादि-तन्त्रेषु भूरिशः कृताऽपि परमप्रयोजनत्वेन नाकलिता किन्तु जागतिकपदार्थानां स्वरूपमवज्ञाय व्यवहारपाटवमाकलयता कुशलेन परमपुरुषार्थः कैवल्यं न हेयमिति पौनःपुन्येन बोधयन्ति न्यायादितन्त्राणि नैजीं छटामातन्वन्ति रेजिरे । अखिल-शास्त्रतत्त्वप्रकाशकस्य दीपस्य न्यायशास्त्रस्यैव तात्पर्यं क्वेति प्रथममालोच्यमानं विद्यते ।

प्रपञ्चप्राङ्गणपतितानां प्राणिनामखिलानां निसर्गत एव जिहासितं दुःखं प्रेप्सितञ्च सुखमित्यत्र न केषाञ्चनापि विप्रतिपत्तिः।

असारे संसारे सुखञ्च स्वल्पं सातिशयमागमापायि चेति दुःखप्राचुर्यतया प्रबलविपक्षपुञ्जाक्रान्ततया दुःखकुक्षौ एव निक्षिप्तमिति कुशलैस्तज्जिहासितमित्यत्र न मनागपि संशयसरीसृपसर्पणावसरः।

तज्जिहासायां सत्यां पूर्वं तत्कारणपटुकपाटविदारणे यत्नोऽनुष्ठेयो विद्यते। एवं सति दुःखसमुच्छेदाय न यत्नान्तरमनुष्ठेयं भवेत्। हेत्वभावे हेतुमदभावस्य सर्वसम्प्रदायक्रोडीकृतत्वात्।

तच्च दुःखकारणं किमिति जिज्ञासायामुदितायामात्मतत्त्वाज्ञानमेवेतिसर्वतन्त्रसिद्धान्तः।

यतो हि आत्मनि अज्ञानेनाच्छन्ने तत्र देहेन्द्रियाद्यध्यासरूपं मिथ्याज्ञानं विद्योतते। ततश्च रागद्वेषादीनां दोषाणां प्राकट्यम्, तदनन्तरं वाङ्मनःकायचेष्टास्वरूपायाः प्रवृत्तेः प्रादुर्भावः। प्रवृत्तेश्च धर्माधर्मादीनामुद्भवः धर्माधर्माभ्याञ्च शिवाशिवजन्मप्राप्तिः ततो दुःखानुभूतिः इत्येवमजस्रं प्रवहमाणं चक्र प्रपञ्च इति परिभाष्यते।

प्रपञ्चस्य तस्य समापनं तत्त्वज्ञानमन्तरा न सम्भवं तदेव ब्रूते भगवानक्षचरणः- 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति। न्या० सू० १।१।२।

तत्त्वज्ञानं तन्न परोक्षं मिथ्याज्ञानापसारकमपरोक्षस्य मिथ्याज्ञानस्यापरोक्षेण ज्ञानेन विना नाशासंभवात्। न्यूनाप्तवचनलिङ्गादिभिर्निर्णीतदिगादितत्त्वानामपि नृणां न भूयो दिगादिभ्रमा जायन्ते इति च न। अतस्तत्त्वसाक्षात्कार एवैष्टव्यः।

तत्त्वसाक्षात्कारार्थं साधनमुत्कृष्टं निदिध्यासनमेव। न हि दीर्घानादिकालोपचितमिथ्याज्ञानतत्संस्कृतिसमूहप्रवाहजायमानं विपरीतज्ञानं सहसा झटित्येव तत्त्वनिर्णयेन सकृज्जायमानेन समुच्छेत्तुं शक्यमपि तु अभ्यासपरम्परयैव।

अभ्यासपरम्परापरपर्यायं च निदिध्यासनं तर्कसहकृतवैदिकबोधसाध्यं श्रुतिबोधितज्ञाने उचितानुचिततत्त्वविवेकमन्तरा न सम्भवं यतो निर्दोषश्रुतिसङ्गमनात्प्रतीयमानोप्यर्थो बुद्धि नारोहति सहसा, यावत्पूर्वपक्षोत्तरपक्षाभ्यां न विमृश्यते।

अन्यथा समुत्पन्नमपि श्रौतं ज्ञानं वादिविप्रतिपत्त्यादिप्रयुक्तासम्भावना-विपरीतोद्भावनादिदोषैर्विहतं न साक्षात्कृतये कल्पतेऽतो बुद्धिदोषापहाराय दर्शनकृद्भिर्दयया दर्शनानि ससृजिरे।

गौतमीयं तन्त्रं तत्र प्राधान्येन निरूपयितुमेतदेव जागरुकम्। यत्कस्यचनापि वाञ्छितस्यार्थस्य साधनं रूपेण केन कर्त्तुमर्हं तत्र साधनानि कानि? साधनाभा सावा

के ? अस्मद्वर्त्मना चलन्तो वादिनः कथं वा वस्तुतत्त्वमपलपन्ति, अक्षिणि धूलिप्रक्षेप-सदृशानि वाक्यान्यारचय्य श्रद्धालोः श्रद्धामपहरन्ति, सदुत्तरं किमसदुत्तरं वा किम् ? कथादोषा वा के ? इत्यादिपरिबोधाय । न तु प्राधान्येन कैवल्यसाधनतत्त्वज्ञानाय छलादीनाममुण्योगात् ।

परम्परयाऽपि कैवल्यसाधनतत्त्वज्ञानप्रतिपादनपरत्वविरहे मुमुक्षूणा प्रवृत्ति-र्दुर्घटेति तदपि निरूपितं मुनिना द्वितीयसूत्रेण पारिभाषिकद्वादशविधप्रमेयप्रतिपादक-सूत्रेण च न तु प्रधानतस्तदुद्देश्यम् ।

अत एव तदनुकूलं प्रथमसूत्रं तत्रोपन्यस्यते—"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्त-सिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञाना-न्निःश्रेयसाधिगमः" इति । न्यासू० १।१।१

यस्य कस्यचनापि पदार्थस्य सिद्धौ षोडशपदार्था अपेक्ष्यन्तेऽत एषां तत्त्वज्ञाना-न्निःश्रेयससिद्धिः—अभिमतसिद्धिर्भवति । एतच्च निःश्रेयसपदं न केवलं कैवल्याभि-प्रायेणापि तु विविधनिःश्रेयसाभिप्रायेण ।

तथा हि न्यायवार्त्तिकम्—

"तत्त्वज्ञानान्निःश्रेयसाधिगम" इति । तत्त्वं ज्ञायमानं कर्म सम्पद्यते निःश्रेय-समधिगम्यमानं कर्म भवतीति । पुनरतत्त्वं किं किं वा निःश्रेयसमिति ? तत्त्वं पदार्थानां यथावस्थितात्मप्रत्ययोत्पत्तिनिमित्तत्वं यो यथावस्थितः पदार्थः स तथाभूत-प्रत्ययोत्पत्तिनिमित्तं भवति यत् तत् तत्त्वम् ।

निःश्रेयसं भूयो दृष्टादृष्टभेदाद् द्विधम् । न हि कश्चन पदार्थो ज्ञायमानो हानोपादानोपेक्षाबुद्धिनिमित्तं न भवतीति तथा च सर्वे पदार्था ज्ञेयत्वेनोपक्षिप्यन्ते । निःश्रेयसन्तु आत्मादेस्तत्त्वज्ञानाद्भवति ।

दृष्टं प्रमाणादिपरिज्ञानाददृष्टं पुनरात्मादेः परिज्ञानादित्यत्र नास्ति प्रमाणम् । अर्थ एवायं तथाभूतो यदात्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमोऽधिगम्यते ।

यदा हि अयमात्मादिःप्रमेयं विपर्ययेणाध्यवसितो भवति अथ प्रपञ्चं नातिवर्तते इति । यदि पुनः प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं स्यान्न मोक्ष्यमाणा मोक्षाय घटेरन् न हि कस्यचन क्वचिच्च तत्त्वज्ञानं नास्तीति । तस्मादात्माद्येव प्रमेयं मुमुक्षुणा ज्ञेयमिति पृथगुपदेशाच्च प्रमेयस्य प्रमाणादिभ्यः ।

यदि च यत्किंचित्प्रमेयतत्त्वज्ञानान्निःश्रेयसस्य परस्य प्राप्तिः किमर्थमात्मादि-सूत्रेण द्वादशैव प्रमेयाणि नाधिकानि न न्यूनानि चेत्यवधार्यते सूत्रकारेण । तस्मात्त-देतत्साक्षादुपयोगि निःश्रेयसेन पदार्थमात्रमित्याह प्रमेयेति तात्पर्यटीका ।

स्पष्टमिदमेतेन यन्न्यायदर्शनं न कैवल्यसाधनीभूततत्त्वज्ञानप्रतिपादनायैव प्रवृत्तमपि तु तत्साधनपरिकरतत्त्वज्ञानप्रतिपादानायैव। कैवल्यार्थन्तु वेदान्ताः शरणी-कर्त्तव्याः।

यदि प्रमाद्येव प्रमेयं स्यात्तस्य च परिज्ञानान्निःश्रेयसं स्यात् नात्मादिप्रमेयं पृथगुपदिष्टं स्यात्। प्रमेयार्थविधारणार्थायां चोत्तरसूत्रप्रक्रियायां प्रमेयस्य विहितत्वाद् आद्येन सूत्रेण निपुणः सूत्रकारःस्यात्।

अत्रायमभिसन्धिः—

निखिलास्वपि विद्यासु तत्त्वज्ञानं निःश्रेयसं च विद्यत एव, परं तन्न आत्मज्ञानं कैवल्यरूपं वा अपि तु तत्तत्प्रतिपाद्यविषयज्ञानरूपं फलमपि भिन्नरूपम्।

यथा त्रय्यामग्निहोत्रादिसाधनज्ञानम्, वार्त्तायां भूम्यादिपरिज्ञानम्, फलमपि स्वर्गप्राप्तिकृष्याद्यधिगमरूपमनेकविधम्। एवमनेकप्रभेदतत्त्वज्ञा साध्यनिःश्रेयससङ्ग्रस्य सङ्ग्रहः सूत्रकृतोऽभिमतः, न हि एतद्दर्शनव्युत्पाद्यतर्कादिपरिज्ञानं विना विद्यापदेभ्यो यावन्मात्रावगतिस्तावता प्रेक्षावतां परितोषो मा भूद 'आदित्यो वै यूप इत्यादिभ्य आदित्यादीनां यूपादिता। एवं वार्त्तादिषु 'माघे कर्षिता भूमिः स्वर्णमयं फलमाधत्त इत्यादितर्कानपेक्षायां विफलमेव स्यात्।

तस्मात्संशयपरीक्षाप्रमाणविनिवेशद्वारेण तदर्थतत्त्वमवधारणीयमिति सर्व-स्यापि मूलं भवति आन्वीक्षिकीपरिज्ञानमिति तदेवात्र प्राधान्येन निरूप्यम्।

यद्यपि कैवल्यप्रयोजनकत्वमपि दर्शितं वार्तिकादौ तथापि परम्परयैव तज्ज्ञातव्यं त्रय्यादिवत्, अन्यथा प्रमाणादिकथनवैयर्थ्यप्रसङ्गात्।

किं च यदि एतस्य मुमुक्ष्वभिलषितज्ञानमात्रप्रतिपादनपरत्वं तर्हि संशयादीनां पृथग्वचनमनर्थकं संशयादयः प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्त इति।

इमाश्चतस्रो विद्याः पृथक्प्रस्थानाः प्राणधारिणामनुग्रहायोपदिष्टा यासां चतुर्थी एषान्वीक्षिकी न्यायविद्या। तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थास्तेषां पृथग्वचनं विना अध्यात्मविद्यामात्रमियं स्याद् यथोपनिषदः। तस्मात्संशयादिभिः पदार्थैः पृथक् "प्रस्थाप्यते" इत्यादिभाष्यं न सङ्गच्छेत।

अत्र हि संशयादीनां पृथग्वचनं विना अध्यात्मविद्यामात्रमियमिति मात्रपदं प्रयुञ्जानेन उपनिषदश्च दृष्टान्तयता भाष्यकृता दर्शनमेतत्पदार्थव्यवस्थापकमुक्तिजात-निरूपणाय समारब्धं न तु प्रमेयप्रकटनाय, किन्तु तदंशे ताटस्थ्यमेवास्य। वेदान्ता एव तदर्थं प्रवृत्ता इत्येतदभिप्रेयते।

'चतस्र इमा विद्या भवन्ति ताश्च पृथक्प्रस्थानाः। अग्निहोत्रहवनादिप्रस्थाना त्रयी, हलशकटादिप्रस्थाना वार्ता। स्वाम्यमात्यभेदानुविधायिनी दण्डनीतिः। संशयादिभेदानुविधायिनी आन्वीक्षिकी। तस्याः संशयादिप्रस्थानं विना अध्यात्मविद्यामात्रमियं स्यात्, ततः किं स्याद् अध्यात्मविद्यामात्रत्वाद् उपनिषद्विद्यावद् त्रय्यामेवान्तर्भाव इति चतुष्ट्वं निवर्त्तते तस्मात् पृथक् गृह्यन्ते" इति वार्तिकम्।

यद्यपीतरा विद्या प्रामाणिकमेवार्थमभिनिविशन्ते तथाप्येतद्विद्याप्रतिपाद्यमेव प्रमाणाद्युपजीव्य स्वे स्वे व्युत्पाद्ये वस्तुतत्त्वे प्रवर्तन्ते न तु प्रमाणाद्यपि व्युत्पादयन्ति, तदेतेन विद्योपकरणग्रहणेन व्यापार आन्वीक्षिक्याः प्रदर्शित इति तात्पर्यटीका चैनमेवार्थं प्रदर्शयति।

"तदेतदुक्तं भवति न्यायव्युत्पादने व्यापारवत्तया हि एषान्वीक्षिकी विद्यान्तराद् भिद्यते। स च संशयाद्यङ्गोपाङ्गैनैव व्युत्पादितो भवति ततोऽस्याः संशयादयो विषयभूतास्तान् विना निर्विषयतया विद्यैव न स्याद् विषयान्तरवत्तया विद्यान्तरमेव वा स्याद्" इति ब्रुवाणस्तात्पर्यपरिशुद्धिकारोदयनाचार्योऽपि पूर्वोक्तमेवानुमेने।

अत एव "न च वाच्यमस्तु विद्यात्रयमेव व्यर्थमान्वीक्षिक्या विद्ययेति एतस्या एव समस्तविद्यावदातीकरणकारणत्वात्। यथा वक्ष्यति-प्रदीपः सर्वविद्यानामितिपङ्क्तिव्याख्यानावसरे 'न ह्यन्या विद्याः स्वं स्वमर्थं' व्युत्पादयन्त्योऽपि कथमेतदित्यश्रद्धामलमपनेतुमीशते विनैवान्वीक्षिकीमित्याशयवान् परिहरति, एतस्या एवेति इत्यभिहितवान्।

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने।
निधये वाग्विशुद्धीनामक्षपादाय तायिने॥

इति पद्यव्याकृत्यवसरे तायी—तत्त्वाध्यवसायसंरक्षणक्षमकथासम्प्रदायप्रवर्त्तक इति व्याकृतवान्। न्यायदर्शनस्य मोक्षसाधनप्रतिपादनार्थत्वे संरक्षणपदस्य नैरर्थक्यापत्तेः। अतोऽवगम्यते यदत्र न प्रमेयपरत्वम्, किन्तु येन श्रौतज्ञानं समुत्पन्नं वादिविप्रतिपत्त्यादिभिः कलुषितन्न भवेत्तादृशयुक्तिपङ्क्त्युद्भावनपरमिति 'सेयमान्वीक्षिकी प्रमाणदिभिः पदार्थैर्विभज्यमाना—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥

इत्यभिदधानो भाष्यकारो व्यक्तमेव न्यायतन्त्रस्य निखिलविद्याङ्गत्वमङ्गीचकार। ततश्चास्या उपायभूतत्वमेवाङ्गीकर्त्तुं शक्यं न मौख्यम्। तथा सति सारभूता निखिलविद्यानामित्यावश्यकं वक्तव्यमासीत्, प्रदीपस्य तमोऽपसारणद्वारेणावस्थितघटाद्यर्था-

भिव्यञ्जकत्वमात्रेण प्रयोजनवत्त्वं न भवति किन्तु घटाद्यभिव्यक्त्या हानोपादानादिभिः फलं प्राप्यते इति साधनत्वमेव तस्य, तथा मोक्षसाधनीभूततत्त्वज्ञानं वेदान्तैः साधयितुं न शक्यते यावत् पूर्वपक्षोत्प्रेक्षितन्यायाभासापसारणशक्तान्वीक्षिकी नावलम्बिता स्यादिति परम्परयोपयोगस्तस्या न तु साक्षात्।

अत एव वार्तिककारोऽप्येतद्भाष्यं व्याचक्षाणः, "प्रदीपवत् प्रमाणादिप्रतिपादितमर्थमितरा विद्याः प्रतिपादयन्ति। किमितरासु विद्यासु प्रमाणादीनि न सन्ति? न सन्तीत्याह, कथं न सन्ति अनधिकारात्, न ता विद्याः प्रमाणादिपरिज्ञानेनाधिक्रियन्ते प्रमाणादिप्रकाशिते त्वर्थे ताः प्रवर्तन्ते" इत्यादिना इतरासां विद्यानामुपेयत्वेन प्राधान्यं सूचयामास, तथाप्यस्याः प्रमाणादिपरिकरप्रतिपादनार्थत्वं चोररीचकार।

यथा हि व्याकरणं निखिलविद्याङ्गमिति न तत् प्राधान्येन कस्यचन मतस्य प्रतिष्ठापकमपि तु व्युत्पत्त्याधानपूर्वकाध्येष्यमाणनिखिलविद्यासु अर्हतातिशयमापादयति, अतो न तदध्ययनमात्रेण कृतकृत्यता किन्तु अपराणि दर्शनानि अधीत्यैव तथैव न्यायदर्शनादपि। तथा व्याकरणेष्वेव प्रसङ्गात् सत्कार्यवादादिकं दर्शनप्रतिपाद्यं किञ्चित्तत्त्वमुद्भाव्य विचारितमपि न तत्तद्दर्शनप्रतिपाद्यम्, शुद्धसाधुत्वज्ञानौपयिकतया तस्योपक्षीणत्वात्। अस्या अपि तथा, प्राधान्यात् प्रमाणादिकं निरूपयितु शक्तस्य प्रसङ्गतो यत्र कुत्रचित् स्वमतपरिग्रह इव लक्ष्यते न तत्र तात्पर्यम्।

यथा लक्षणसूत्रमेकं निर्माय तस्य लक्ष्येषु प्रवृत्तिं निरूपयितुं बहुभिर्व्याकरणैः स्वबुद्धिभेदेन नानोदाहरणानि निरूप्यन्ते परं नैकत्रापि निर्भरः, तथा तत्र न कोऽपि आशङ्कामुद्भावयितुमर्हति किमिति एतदेवोदाहरणं निरूप्यते नोदाहरणान्तरमपि तात्पर्याभावात्, तथैव वस्तुसिद्धौ चिकीर्षितायामपेक्षितानां युक्त्यादीनां शिष्यबुद्धिवैशद्याय प्रवृत्तिं बोधयितुं लक्ष्यस्थलमिव निरूपितमास्तेऽद्वैतदर्शनमविरुद्धं परमाणुनित्यत्वादिकं न तु तत्र तात्पर्यम्।

यदि च असत्कार्यवादादिकं न्यायदर्शनप्रतिपाद्यमेव स्यात्तर्हि किमिति प्रतितन्त्रसिद्धान्तनिरूपणावसरे लक्ष्यं दर्शयता भाष्यकृता 'नासता आत्मलाभो न सत आत्महानं निरतिशयाश्चेतना देहेन्द्रियमनःसु विषयेषु तत्तत्कारणे च विशेष इति साङ्ख्यानां पुरुषकर्मादिनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तेश्च, स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते, उत्पन्नं निरुद्ध्यत इति योगानामित्यत्र योगपदग्रहणं कृतम्, नैयायिकानामित्येव वक्तव्यमासीत्। अत्र योगपदेन वैशेषिका एवाभिप्रेयन्ते इति वक्तव्यं न हि पातञ्जलैः पुरुषस्य सगुणत्वं तददृष्टनिमित्तो भूतसर्गोऽसत्कार्यवादादिकमभ्युपगम्यत इति प्राज्ञेन वक्तुमपि शक्यं तथा सति तदीयग्रन्थविरोधस्यापरिहरणीयत्वापातात्। तथा च नैयायिकानामपि अत्रैव तात्पर्यं चेद् योगपदं निरर्थकमापद्येत। अतो ज्ञायते भाष्यकृतो नेदं स्वकीयं मतं परमतमेवोदाहरणप्रदर्शनायोपन्यस्तमिति न तत्र तात्पर्यम्। कस्यचनापि ग्रन्थस्य यस्मिन् कस्मिन्नप्यर्थे तात्पर्यनिर्णेतव्यं चेद्—

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति वृद्धोक्तसरण्या षड्विधलिङ्गैरेव तन्निर्णयम् ।

तत्र प्राथमिकं लिङ्गमुपक्रमोपसंहारयोरैकरूप्यं शब्दनिष्ठं सर्वतोऽभ्यर्हितम्, एकरूपताया विरहे एकवाक्यताज्ञानविरहेण विशिष्टैकार्थप्रतिपादकत्वमेव दुर्घटं स्यात् तथा च यथा—वेदान्तसूत्रेषु "अथातो ब्रह्मजिज्ञासेति कैवल्यसाधनीभूतब्रह्मबोधाय वेदान्तविचारकर्त्तव्यतामुपक्रम्य तन्निर्वृत्तकैवल्यरूपं फलम् "अनावृत्तिः शब्दादनावृत्तिः शब्दादित्यन्ते उपसंह्रियमाणं दृश्यते तावता चैतच्छास्त्रं ब्रह्मबोधसाधनककैवल्यतात्पर्यकमिति अनुमातुं शक्यते । येनोपक्रम्यते येन चोपसंह्रियते तदेव वाक्यार्थ इति हि शाब्दविदो यथोपांशुयाजवाक्येऽनूचोः पुरोडाशयोर्जामितादोषसंकीर्त्तनपूर्वकोपांशुयाजविधाने तत्प्रतिसमाधनोपसंहारे चापूर्वोपांशुयाजकर्मविधिपरतैकवाक्यता बलादाश्रिता, तथात्रापि अक्षपादप्रणीततर्कतन्त्रस्य कैवल्यप्रतिपादनपरत्वसाधनायोपक्रमोपसंहारयोरेकरूपत्वप्रयुक्तैकवाक्यत्वं हेतु कर्त्तव्यम् । परन्तु तदेवासिद्धं 'हेत्वाभासाश्च यथोक्ताः" इत्यन्तिमसूत्रेण तु उपक्रमानुगुणपदार्थनिरूपणमेवोपसंह्रियते न तु अपवर्गकथा लेशतोऽपि बोध्यते तत्कथं प्रेक्षावद्भिरिदं शास्त्रं कैवल्यनिरूपणपरमित्यधिगन्तव्यमिति सुधिय एव विभावयन्तु ।

एष च न्यायोऽध्वरमीमांसाशास्त्रेऽपि योजनीयो यतस्तत्रापि 'अथातो धर्मजिज्ञासेत्युपक्रम्य "अन्वाहार्ये च दर्शनात्" इत्यन्तस्य धर्मविषयकत्वेनैकरूपार्थकतया धर्मपरत्वमेवानुमातव्यं न तु प्राधान्येन कैवल्यसाधनप्रतिपादनपरत्वम् ।

अत एव भगवद्रामानुजाचार्यैः सुस्पष्टमेवोत्तरमीमांसाशेषत्वं पूर्वमीमांसायाः प्रतिपादितम् । शेषत्वे सन्दिहाना अपि ब्रह्मविदो मीमांसायाः प्राधान्येन कैवल्यसाधनप्रतिपादकत्वं नैवेति कृतसम्मतिका एव प्रतीयन्ते ।

द्वितीयं लिङ्गमभ्यासरूपमपि नात्र समुपलभ्यते । पौनःपुन्येन कथनमभ्यासस्तेन हि प्रेक्षावतामेतादृशी बुद्धिरुत्पन्ना भवति यदत्र प्रतिपादयितुरादरातिशयोऽवद्योतते, तेन चात्रैव तात्पर्यं वक्तुरूह्यम् ।

प्रकृते च निखिलं न्यायशास्त्रं तद्विपरीतमेवावतिष्ठते, यत्र हि यस्य प्रामुख्येन निरूपणं तदेव विस्तरेण निरूपणीयमन्यत् समासतो निरूपणीयमित्यस्ति लौकिकानां तीर्थकराणां च समयः । तथा चात्रापि यस्य तत्त्वज्ञानेन साक्षात्कैवल्यं प्रयोजनं तदेव प्रामुख्येन विहाय इतरनिरूपणं विस्तरेणासकृद् वर्णयितव्यम्, न तथात्रोपलभ्यते ।

तथा हि पञ्चाध्याय्यां हि प्रथमतोऽध्यायद्वयेन उद्देशलक्षणं लक्षितेषु च प्रमाणानां परीक्षणमिति वृत्तद्वयम् । पञ्चमाध्याये च जातिनिग्रहस्थानयोरेव प्रतिपादनं

तृतीयतुरीयाध्यायेरेव प्रमेयपरीक्षाया अवसरः, तत्रापि तृतीयस्य प्रथमाह्निके नव प्रकरणानि तेषु प्रकरणानि चत्वारि देहेन्द्रियमनोव्यतिरेकेणात्मनित्यत्वबोधकानि, अन्यानि पञ्च प्रासङ्गिकानि नात्मतत्त्वज्ञानस्य साक्षादुपकारकाणि। द्वितीयाह्निके च प्रकरणानि सप्त तेषु बुद्धचनित्यत्वात्मगुणत्वक्षणिकत्वशरीराश्रितत्वप्रतिषेधप्रतिपादकानि चत्वारि प्रकरणानि प्रकृतोपयोगीनि भिन्नानि त्रीणि न प्रकृतोपयोगीनि। चतुर्थाध्यायेऽपि द्वित्राण्येव प्रकरणानि आत्मतत्त्वज्ञानोपयोगीनि। एवं सम्मिल्य ८४ चतुरशीतिप्रकरणात्मके न्यायदर्शने अष्टौ नव वा प्रकरणानि आत्मतत्त्वमात्रनिरूपणाय संलग्नानि। एवञ्चैतद् दर्शनं आत्मतत्त्वकथां सङ्क्षेपेण समाप्यान्यद् बाहुल्येनापादयति। अत एतद्-दर्शनं कैवल्यसाधनार्थमेव प्रणीतमिति प्रामाणिकैः कथं विश्वसनीयमिति सुधिय एव तत्र प्रमाणम्।

आन्वीक्षिक्या अध्यात्मविद्यात्वं भवतु नाम तथापि अप्राप्ते शास्त्रमर्थवदिति न्यायाद् यत्प्रमाणान्तरेण यथाकथञ्चिदपि अप्राप्तं तदेव उपदेष्टव्यं शास्त्रेण, न तु यद् हालिकोऽपि वेत्तुं प्रभवति तस्यापि प्रतिपादनम्, ज्ञातत्वेन प्रेक्षावद्‌भिरजिहासितत्वेन तदर्थे तात्पर्यनिर्णायकस्यापूर्वत्वस्य विरहेण प्रामाण्योच्छेदापत्तेः, अज्ञातज्ञापकत्वं हि प्रमाणम् अन्यथा स्मृतीनामपि प्रामाण्यस्य दुर्निवारतापत्तेः। तथा च यादृशमात्मतत्त्वं सुखदुःखादिगुणविशिष्टं ज्ञेयत्वेनोपक्षिप्यते गौतमीयैस्तादृशं सर्वैरनायासेनानुभूतमेवेति तन्निरूपणं पिष्टपेषणोपमम्। क आत्मानं नानासांसारिकदुःखदावानलज्वालापरीतं तत्परीहारोपायमन्वेषमाणं न वेदेति निरर्थकमेवेदं शास्त्रं स्यात् तथा चापूर्वत्वस्य तात्पर्यनिर्णायकमूर्धाभिषिक्तस्य प्रामाण्यशरीरनिर्वाहकस्याभावादपि कैवल्यसाधनप्रतिपादनपरत्वं निरस्तं वेदितव्यम्।

"यो यथावस्थितः पदार्थस्तस्य तथाभाव एव तत्त्वं तस्य ज्ञानं तत्त्वज्ञानमिति न्यायभाष्यकृद् वाक्यं एवञ्चेद् शास्त्रमधीत्य मत्वा ध्यात्वा यः सम्पादनीयः साक्षात्कारः स इदानीमप्यनायासेनैव सर्वैर्लब्ध इति श्रवणमननादिसाधनानां नैरर्थक्यम्। न हीदानीन्तनस्य विशिष्टसाधनाधीनजन्मनो मोक्षावस्थापूर्वभाविनश्च तत्त्वज्ञानस्य लेशतोऽपि विषयकृतं वैलक्षण्यमभ्युपगम्यते तार्किकैः, येन सार्वलौकिकस्यात्मसाक्षात्कारस्यायथार्थत्वान्निर्विचिकित्सापरोक्षज्ञानसम्पादनायास्माभिश्चेष्टितव्यमिति शास्त्रस्यास्य कार्तार्थ्यं सम्भाव्येत।

आत्मनि कर्तृत्वभोक्तृत्वादिधर्माणां तैर्वास्तवत्वाङ्गीकारात्। न ह्यहं सुखी दुःखीत्यादिप्रत्ययादन्यदस्यात्मयाथात्म्यज्ञानमेतच्चेत्सर्वदानुवर्तते किमर्थं तर्हि श्रमाङ्गीकरणम्।

'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥ इत्यादिन्यायात्।

यद्युच्येत आत्मसाक्षात्कारे सिद्धे सर्वमेतदेवं स्यात् नत्वेतदस्ति, एवं सति

प्रपञ्चोच्छेदप्रसङ्गो निवर्तकस्य ज्ञानस्य नितरां सत्त्वात्, तस्मात्साधनपरम्परोपजातः साक्षात्कार एवैषितव्य इति, तन्न तथा सति आत्मनि सुखित्वदुःखित्वादिकं मृषेत्यद्वैतसिद्धान्तापातात्। तस्मात्सर्वजनानुभवसिद्धव्यावहारिकसुखित्वदुःखित्वादि-विशिष्टमात्मानमनूद्याप्राप्तप्रमाणादिपदार्थतत्त्वपरिज्ञानार्थमेवेदं शास्त्रमिति हठादव-गन्तव्यम्, येन सर्वेषां सूत्राणां सार्थक्यं भवेत्।

तार्किकाभिमतं सुखदुःखादिमत्त्वमात्मनो यदि वास्तवं तदा ज्ञानेन कथङ्कारं तन्निवृत्तिः, सत्यं वस्तु ज्ञानाद् विनश्यन्नानुभूयते सत्यस्य आत्मवदनिवृत्तेः। कर्मानुष्ठानेन सत्यमपि वस्तु नाशयितुं शक्यं परं तत्साचिव्यं तु ज्ञानस्य न भवद्भिः स्वीक्रियते समुच्चयवादिवत्।

अत एव चतुर्थाध्यायस्याद्याह्निकसमाप्तौ "ऋणक्लेशप्रवृत्यनुबन्धादपवर्गाभावः" इत्यादिना महत्या आरभट्या कर्मणामात्मज्ञाने सहकारित्वं निराकृतं भाष्यकृता। सूत्रकारेण च तत्त्वज्ञानमात्रान्मिथ्याज्ञानादिविनाशक्रमेणापवर्गमभिदधता कर्मणामत्यन्त-मनुपयोगः कैवल्ये मन्यते, तथा च न कर्मसाध्यत्वम्, न च ज्ञानमात्रविनाश्यत्वं सत्यस्य सम्भवमिति "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति सूत्रसाङ्गत्यापत्तिः, तस्माद् यदि ज्ञानमात्रसाध्यताभ्युपगन्तुमिष्यते कैवल्यस्य तर्हि त्यज्यतां सत्यत्वाभिनिवेशः, अभ्युपगम्यतां चाद्वैतवादस्तथा सति मुमुक्षूणां प्रपञ्च-परित्यागेन ज्ञानार्थितया श्रवणादिसाधने प्रवृत्तिः सार्था। एतावता चैतत्सिद्धं यादृशमात्मतत्त्वं नैयायिकैः प्रतिपाद्यते न तादृशमभिमतं गौतमस्य, अपि तु वैशेषिकादीनामिव।

अतएव शङ्कराचार्याः स्वग्रन्थेषु वैशेषिकं प्रतिपक्षत्वेनाभिमुखीकृत्य खण्डयन्तिस्म पूजयन्तिस्म च महर्षिं गौतमम्। तस्मान्न्यायतन्त्रस्य एतदंशे ताटस्थ्यमिति सिद्धम्। एतेन चतुर्थमपि लिङ्गं फलवत्त्वं तात्पर्यनिर्णायकं पराकृतमिति।

न्यायदर्शने भाष्यकृता आन्वीक्षिकी यथा स्तूयते न तथा आत्मज्ञानमिति पञ्चममर्थवादरूपं लिङ्गमपि पदार्थप्रतिपादनपरत्वसाधनेनैवान्यथासिद्धं नात्मप्रति-पादनपरत्वसाधनायालम्, षष्ठमुपपत्तिशब्दवाच्यमबाधितत्वं यथा द्वैतस्य न सम्भवति तथा सुस्पष्टमेव त्रय्यन्तेष्विति न तद्विषये प्रयासः।

एवं षड्विधतात्पर्यनिर्णायकानां लिङ्गानामभावे तर्कतन्त्रं कैवल्यतात्पर्यकमिति प्रामाणिकाः कथमभ्युपगमिष्यन्ति इति मनीषिणो निष्पक्षपातं विदाङ्कुर्वन्तु।

तदेवं प्रामाणिकैर्वात्स्यायनोद्योतकरवाचस्पतिमिश्रादिभिर्नितरामभ्युपगतेऽ-प्यमुष्मिन्नये आग्रहैकपक्षपाता ये वस्तुभूतमप्यर्थमतथाभूतमेव चिन्वन्ति प्रतिपादयन्ति च एतदेव शास्त्रं निखिलैर्मुमुक्षुभिरादर्तव्यं न तु वेदान्ताः, तत्प्रतिपादितमद्वयतत्त्वं वेति तन्मतनिरासायैव श्रीहर्षस्य विदुषः साग्रहः प्रयासः।

पण्डितराजस्य खण्डनखण्डखाद्यकारस्य श्रीहर्षस्य अयमाशय आन्वीक्षिकी शब्दा-देवैषोऽर्थः प्रतिभाति यद् श्रवणस्यानु पश्चादीक्षणं तद् युक्तायुक्तत्वनिर्णयार्थम् ऊहात्मको व्यापारो युक्तिसहितस्तेनार्थनिर्णयः कार्यः, श्रवणं नाम श्रुतिवाक्यानां क्व तात्पर्यमिति विविदिषायां सत्यां तन्निर्णयानुगुणो व्यापारः स च वेदान्तवाक्यैरेवानुष्ठेयः. तत्र चेद् वादिविप्रतिपत्तिर्भवेत्तर्हि तन्निरासाय आन्वीक्षिकीशब्दोदितं युक्तिजातं तत्रोपसंहर्तव्यं किन्तु न हि "वरविघाताय वधूद्वाहः" इति न्यायेन वेदान्तवाक्यानि अवहेल्य यथेच्छं श्रुतिवाक्यविरोधि च मतमुद्भावनीयं परन्तु तदविरोधितर्कोपन्यासपुरस्सरं श्रुत्यर्थः सम्भावनीयः।

अत एव न्यायभाष्यकारेणोक्तम्—"यत्पुनरनुमानं प्रत्यक्षागमादिविरुद्धं न्यायाभासः सः" इति। इत्थमेव वार्तिकटीकयोरपि लभ्यते। एवञ्च यत्कल्पनीयं तत् श्रुत्यविरोधि कल्प्यतां नतु श्रुतिमवहेल्य। एवं सति आन्वीक्षिकीशब्दस्य स्वारस्यं सङ्गतं तद्विरुद्धार्थकल्पनायां त्ववैदिकत्वमेवैतस्य दर्शनस्य आपतेत्।

ननु पूर्वोत्तरमीमांसयोरिवास्मिन् दर्शने श्रुत्यर्थविचारः प्राप्यते येनैतद्वैदिक-मित्यवगन्तुं शक्यमतो दर्शनस्यास्य न कुत्रापि मते पक्षग्रहणम्। मात्रं यन्निखिल-तीर्थकराणामपेक्षितं युक्तिजातं तदेव प्रकाश्यते। सर्वमेतच्च वस्तुवृत्तमनादृत्य प्रासङ्गिक-मन्यतात्पर्येण च निरूपितमात्मभेदादिकं वस्तुसदित्युपगत्य श्रुतिशतसमधिगम्यमद्वैत तिरस्कर्तुं ये प्रवर्तमानास्तान् प्रतीदमुच्यते आगम्यतां विधीयतां च शास्त्रार्थविमर्शोऽ-द्वैतमेव तत्त्वमाहोस्विद् द्वैतमिति। याभिरुपपत्तिभिर्यैर्वस्तुतत्त्वमभिलष्यते ताभिरेव ता एव युक्तयो तेषां बाधिता जायन्ते नास्माभिरभिनवं किञ्चिदुद्भाव्य युक्तिजालं स्थाप्यते खण्ड्यते वा। यथा—पटघटादीनां सत्यत्वं केन साधनेन निष्पन्नं भवति? प्रत्यक्षेणेति चेत्तर्हि स्वाप्नपदार्थस्य शुक्तिरजतादेश्च सत्त्वापत्तिः प्रत्यक्षेणावभासमानत्वाविशेषाद् अबाधितप्रत्यक्षेणेति चेत्? घटादिप्रत्यक्षस्य बाधो नास्तीति कथं ज्ञातम् अनुपलब्ध्या तत्सिद्धिरिति कथनं न प्रयोजकं यतः स्वाप्नपदार्थानां जाग्रति बाधवद् जाग्रत्कालिका-नामपि स्वप्ने बाधस्य प्राप्तेः, एवञ्च अन्योन्यस्य अन्योन्यावस्थायां बाधितत्वात्कतर-त्सत्यं कतरदबाधितमिति नैव व्यवस्था भवितुमर्हा, यादृशश्च इन्द्रियान्वयव्यतिरेको व्यावहारिकघटादिप्रत्यक्षे प्राप्यते तादृश एव स्वाप्नप्रत्यक्षेऽपि। तत्रेन्द्रियाद्यभावाद् इन्द्रियान्वयव्यतिरेकबोधस्य नेत्रेण करिणं पश्यामि इत्याद्यनुभवस्य च भ्रान्तत्वमिति चेत्? जाग्रद्दशायामपि तादृशस्य प्रत्ययस्य भ्रान्तत्वं नास्तीत्याद्यप्यसिद्धेः। स्वप्ने यथा सर्वमेव तदानीं कल्प्यते न तु प्राक्सिद्धं किञ्चिदस्ति किन्तु किञ्चित्प्राक्सिद्धत्वेन किञ्चित्तु तदानीमेव जायमानत्वेन, तथा क्षणमात्रस्वप्नेऽपि युगाद्यात्मकः कालोऽपि अतिवाहित इति जायते बुद्धिर्न तु युगाद्यात्मककालस्य वस्तुतत्त्वं तद्वदेव जाग्रत्यपि। प्रत्यभिज्ञानुभवादिकं स्वप्नेऽपि तुल्यं दिवसान्तरीयस्वप्नानुभूतस्य दिवसान्तरीयस्वप्नेऽपि प्रतीयमानत्वाविशेषात्। जाग्रत्कालिकानुभवजन्यसंस्कारसहकृतमनोजन्यत्वात् स्वप्न-

दर्शस्य भ्रान्तत्वमिति चेत् ? स्वाप्नानुभवजन्यसंस्कारसहकृतमनोजन्यानुभवविषयत्वं जाग्रत्पदार्थस्येति वैपरीत्यमेव किन्न स्यात् तस्मात्प्रतीत्यविशेषात् स्वाप्नपदार्थेभ्यो न जाग्रत्पदार्थस्य कश्चन विशेष इत्युपपन्नं निखिलस्यानिर्वाच्यत्वम्। न चैवं शून्यवाद एव प्रसक्त इति वाच्यम्, अनृतस्यापि सत्याधिष्ठानकत्वेन सत्याभावेऽनृतस्याप्यनुपपत्त्या तदङ्गीकारात्।

तच्चाधिष्ठानं स्वयम्प्रकाशज्ञानमेव निरपेक्षसिद्धिकं तत्रैव समे पदार्थाः कल्पिता एकस्मिन् निशानाथेऽनुभूयमाने तत्र कल्पितोऽपर निशानाथ इव प्रतिभासन्ते। न हि कैरपि वादिभिर्ज्ञानाद्भिन्नं विषयं तात्त्विकमङ्गीकृत्य तस्य प्रकाशो जनयितुं शक्यते तथा सति अन्यत्वाविशेषाद् घटज्ञाने पटस्य प्रकाशप्रसङ्गः। सहभावात् प्रकाशमानत्वाभ्युपगमेऽपि समानो दोषः।

न च सहभावोऽपि ज्ञानार्थयोः सर्वत्र सम्भवोऽतीतानागतविषयकज्ञानेषु सहभावाभावात्। न च ज्ञानार्थयोर्वास्तवं तदात्म्यमर्थानां विच्छिन्नस्थूलदीर्घत्वेनानुभूयमानत्वात्, प्रकाशस्य चान्तरत्वास्थूलत्वादिरूपेण भासमानत्वात्। तत्पारिशेष्यात् ज्ञाने पदार्थानां कल्पितत्वात् कल्पितस्य चाधिष्ठानात्पृथक्सत्त्वविरहेण कल्पिततादात्म्यवत्त्वात् प्रतीतिरित्येवाङ्गीकर्त्तव्यम्। एतेन यदि निखलमेवासत्यं तथा सति—

**आशामोदकतृप्ता ये ये चोपार्जितमोदकाः।**
**रसवीर्यविपाकादितुल्यं तेषां प्रसज्यते॥**

इत्येतदपि बाधकं पराहतम्, उभयत्रापि बोधवैलक्षण्याद् यत्र हि मोदकलाभज्ञानमनाहार्यं जायते तत्र रसवीर्यविपाकादिकं फलम्, यत्र त्वाहार्यं तज्ज्ञानं तत्र न तादृशं फलम्। फलमपि च न वास्तवमपि तु ज्ञानरूपमेवेति कुत्रचित्तदानीन्तनबाधविषयज्ञानरूपं फलं कुत्रचिद् व्यावहारिकबाधाविषयज्ञानरूपं फलमिति नाव्यवस्थितिः, वर्णेषु ह्रस्वत्वदीर्घत्वादीनां समारोपितत्वाऽविशेषेऽपि नग इत्युच्चारितान् नाग इति गृहीतात् पदात् गजज्ञानमुत्पद्यमानं भ्रान्तिरूपं जायते। न तु नाग इत्युच्चरितात् तथैव श्रोत्रेण गृहीतात् पदात् जायमानं भ्रमात्मकं भवति, तत्कस्य हेतोः ? नायं नियमो यत्सर्वस्मादसत्यात्सर्वस्य सत्यस्यासत्यस्य वोदय इति। परन्तु यतः कुतश्चिदसत्याद् यस्य कस्यचनासत्यस्य सत्यस्य वोदय इति। परमार्थतस्तु न किञ्चित् कुतश्चिज्जायते निरुद्धयते वा, केवलं ज्ञानमात्रमेव तथा भवति व्यवहारश्च। तथा च श्रुतिः—

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥**

सर्वस्यापि पदार्थस्य साध्यसाधनात्मकत्वेन प्रतीयमानतया तत्सिद्धौ मूलं कार्यकारणभाव एव, सिद्धे तस्मिन् कार्यविशेषेण कारणविशेषोऽनुमेयः।

यथा घटादिकार्यं दण्डादिजन्यं तथैव संसारोऽपि कार्यत्वात् केनचित् कारणेनोत्पन्न इति किं तत्कारणमिति विविदिषायां परमाणवो वा अव्यक्तं वा स्वस्वसमयानुसारेण कारणं किमपि आकलयन्ति वादिनस्तद्बलेन च सर्वस्य संसारस्य सत्यत्वमपि साधयितुमीहन्ते—यद्यसदेतज्जगत् स्यान्न कारणान्वयव्यतिरेकौ सिद्धि लभेयाताम्। तथा सति आशामोदकतृप्तानामुपार्जितमोदकानां च रसवीर्यविपाकादितौल्यप्रसङ्गात् असत्यत्वाविशेषादतो यदभावादाशामोदकस्यार्थक्रियाकारित्वं नोपपद्यते चोपार्जितमोदकस्य तत् किञ्चिदेष्टव्यं तत्किमिति चेत्सत्यत्वमेवेत्यभिमानो वादिनाम्, परमसौ विचारसरणीं न सहते—

प्रथमतो दृष्टान्तमेव विमृशन्तु श्रीमन्तो दण्डघटयोरेव कार्यकारणभावस्तात्त्विक आहोस्विद् व्यावहारिक इति न तावदाद्यः कारणत्वस्य निर्वक्तुमशक्यत्वात् तथा हि किं तत्कारणत्वं यदि पूर्ववृत्तित्वं तदा चिरध्वस्तस्यापि कारणत्वापत्तिः। अव्यवहितपूर्वभावित्वं चेद् दण्डत्वस्यापि स्वाश्रयाश्रयत्वसम्बन्धेन नियताव्यवहितपूर्ववृत्तित्वसत्त्वात्कारणत्वप्रसङ्गः। यद्यनन्यथासिद्धत्वविशेषणान्नैष दोष इत्युच्यते तदपि न युक्तं यतः किं तदन्यथासिद्धत्वं येन दण्डत्वादीनां कारणत्वं निवार्येत। अवश्यक्लृप्तनियतपूर्ववृत्तिभिन्नत्वमिति चेत्तर्हि दण्डवद् दण्डत्वस्यापि सम्बन्धविशेषेणावश्यक्लृप्तत्वस्य सत्त्वात् अनन्थासिद्धत्वापत्तिः।

यत्तु अवश्यक्लृप्तत्वं नाम लघुत्वं तथा च लघुनियतपूर्ववर्तिभिन्नत्वमन्यथासिद्धत्वं पर्यवसितं लघुत्वं च शरीरसम्बन्धोपस्थितिकृतं त्रिविधं तथा च दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः सम्बन्धत्वकल्पने गौरवाद् दण्डस्य कारणत्वे सम्बन्धांशे लाघवाच्च तदेव कारणं दण्डत्वं चान्यथासिद्धमिति तन्न परस्पराश्रयेण कारणत्वपदार्थापरिज्ञानप्रसङ्गात्। तथा हि लघुत्वगुरुत्वयोः परस्परप्रतिद्वन्द्वित्वेन परस्परग्रहसापेक्षतया गुरुत्वग्रहे सति लघुत्वग्रहस्तद्ग्रहे च गुरुत्वग्रहस्तथा च तयोरेव निर्वचनासम्भवात्कथं तद्घटितकारणताग्रहसिद्धिः।

किञ्च गुरुभूतस्य सम्बन्धस्य धर्मस्य वा कारणतावच्छेदकत्वे किं नश्छिन्नम्, न हि गौरवज्ञानस्य कारणतावच्छेदकत्वग्रहप्रतिबन्धकत्वं सुशकं वक्तुं तदभावाद्यनवगाहित्वात्। यदि तदभावाद्यनवगाहित्वेऽपि मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वाङ्गीकारस्तर्हि प्रतियोगितावच्छेदकत्वसाध्यतावच्छेदकत्वादिकं गुरुभूतस्य न स्याद् अङ्गीक्रियते च। अत एव दीधितिकारेणापि गुरुरपि धर्मो जायतेऽवच्छेदकः प्रतियोगिताया इत्युक्तम्।

अतः पारिशेष्यादेतदेव वक्तव्यं यद् यत्र यत्र प्रामाणिकानां कारणत्वेन व्यवहारस्तदनन्यथासिद्धं यत्र च न कारणत्वव्यवहारस्तदन्यथासिद्धमिति। लोके च एतादृशोऽनुभवो यद् लघोः कारणत्वसम्भवे न गुरोस्तदङ्गीक्रियत इति चेत्? तत्रैव नियामकं किमिति

पृच्छचते तत्र व्यवहार एव प्रामाणिकानां नियामक इत्युक्तौ घट्टकुटीप्रभातवृत्तान्तापातः, तथा च कारणत्वस्य व्यवहारमात्रत्वसिद्धत्वे व्यवहारस्य वास्तवत्वनिरपेक्षतया देहात्मव्यवहारे क्लृप्ततया तद्वदेव दण्डादावपि वस्तुतः कारणत्वाभावेऽपि भ्रमेणैव व्यवहारसम्भवान्न वास्तवत्वमिति व्यवहारमात्रसिद्धकार्यकारणभावबलेन जगत्सत्यत्वं वादिभिः कथं सूपपादमिति कृतधिय एव जानन्तु। अबाधितव्यवहारबलात्सत्यत्वसिद्धिरिति चेऽग्रे बाधो न भविष्यतीति निश्चेतुमशक्यत्वात् प्रतीतेश्च भ्रान्ताया अपि सम्भवात्। यथा ब्रूते श्रीहर्षः—को ब्रूते सती नाम सा वित्तिः असत्येव कुतो न स्यात्" इति।

तस्मात्केनापि यौक्तिकविमर्शं परित्यज्यानादिपरम्पराप्रसूतव्यवहारमात्रसिद्धान्येव वस्तुजातानि न वास्तवानीत्यकामेनापि क्रोडीकर्त्तव्यम्। एतदेव किल ब्रह्मवादिभिर्व्यावहारिकत्वं नाम निखिलेषु वस्तुषु अङ्गीक्रियते। विमर्शे क्रियमाणे सिकताकूपविशरणवन्न क्वापि पक्षे व्यवतिष्ठन्ते वस्तूनि। व्यावहारिकविषयतां तु नातिक्रमन्तीति यथा श्रीहर्षः कतिपयप्रतिपत्तृकतिपयकाल्तथात्वावगमादेव प्रायेण लौकिको व्यवहारः प्रतीयते तादृशश्चायं सत्त्वावगमः कथाङ्गम् एतत्तदुच्यते व्यावहारिकीं प्रमाणादिसत्तामादाय विचारारम्भ इति।

यथा हि स्वप्नसमये नानाविधा द्रष्टृदृश्यादयः पदार्थास्तदानीमबाधितत्वेन व्यवहारविषया अपि वस्तुसन्त इति वक्तुं न शक्यं जाग्रत्काले तेषामुपलब्ध्यभावात्। तद्वदेव लौकिकपदार्था अपि व्यवहारविषया भविष्यन्ति न च वस्तुसन्तोऽपि, न च व्यवहारविषयतायां वस्तुसत्ता प्रयोजिका, अवस्तुनापि देहात्मत्वादिना लोकयात्राया अबाधितायाः प्रतीयमानत्वात्।

अत एव अद्वयदर्शनस्य न केनापि विरोधो यच्च येन केनापि अभ्युपगम्यते दूष्यते भूष्यते वा सर्वमेव व्यावहारिकमस्माभिरभ्युपेयत एवाविद्याया अघटितघटनापटीयस्त्वात्। ब्रह्मज्ञानोत्तरकालं हि विदुषः सर्वव्यवहाराभावं वदत्येतद्दर्शनं न चान्यैरपि वादिभिर्मुक्तस्य विधिनिषेधात्मकशास्त्रनियम्यत्वं व्यवहारविषयत्वं वाऽभ्युपगम्यते तथा सति कैवल्यानुपपत्तेः। तत्पूर्वन्तु सर्वोऽपि व्यवहारोऽप्रतिबद्ध एव वर्तते चेद् वर्तताम्, यच्च यावद् यत्किञ्चिज्ज्ञानपूर्वकालीनमभ्युपगम्यते तत्र नास्त्यस्माकं विप्रतिपत्तिः। जाग्रद्बोधात् प्राक् स्वाप्नव्यवहारस्येव सर्वेषामपि तीर्थकराणामभिप्रेतकल्पनानुगुणवस्तुसत्त्वस्यास्माभिरप्यङ्गीकारात् केवलं पारमार्थिकत्वांशे विवादः। परं सोंऽशोऽन्यैरपि तीर्थकरैर्न सूपपादो यतो यावत्किञ्चिद्वस्तु विवादविषयस्तत्सर्वं दृश्यं दृश्यञ्च द्रष्ट्रधीनसिद्धिकं न हि घटः स्वसत्तां वेत्ति। यश्च द्रष्टा स "यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह" इति श्रुत्युक्तप्रकारेणाज्ञेय एव, अविषये च कथं विवादः, यो हि विषयो भवति स विवेचयितुं शक्यः, न चात्मा ज्ञानस्य विषयः, विषयत्वे किं स्वविषयत्वं परविषयत्वं वा? स्वविषयत्वे कर्मकर्तृविरोधः परविषयत्वे तस्याप्यन्यविषयत्वमित्यनवस्था दुरवस्था। अत एव विज्ञानवादिनो बौद्धा अपि नात्मतत्त्वपण्डिताः, यतो हि ज्ञानं क्षणिकं तेषां मते।

४

न च स्वस्योत्पादोऽवरोधो वा स्वात्मना शक्यस्तदानीं स्वस्यैव विरहात्। नान्येन अनवस्थादिदोषग्रासात्। न च स्वस्योत्पादादयो न ज्ञायन्ते निखिलानुभूतिसाक्षिकत्वात्। ज्ञायन्ते चेत्परेण ज्ञायन्ते द्रष्टेति सिद्धम्। तस्य चोत्पादसंहारयोर्विरहादेव न द्रष्ट्रन्तरावश्यकता ज्ञेयत्वस्य विरहाच्च। योऽवलोकयिता स अवलोकयितैव न कदाचिदपि अवलोक्यो यो हि अवलोक्यः स स्वातिरिक्तावभास्यो यत्र हि अवलोक्यत्वं न विद्यते सोऽवलोकयितैव तद्विषयग्रहणाकाङ्क्षानुत्पत्तेरेव नानवस्था दोषः। एतदेव वैलक्षण्यं यदात्मा न ज्ञायतेऽथ च न सन्दिग्धो विपर्यस्तो वा। याः काश्चन संशीतयस्ताः सर्वा अपि उपहितविषया अत एवेदृशमात्मत्वं परैर्दुरधिगममित्याकलय्यैव श्रुतिर्ब्रूते "अविज्ञातं विजानतां विज्ञातमविजानताम्" इति। तथा सतीदृशमात्मतत्त्वमाधारीकृत्य विवादोऽपि दुःशकस्तस्य सर्वथा ज्ञानविषयत्वानर्हत्वात्। वादिनां यो यः कोलाहलः स निखिलोऽपि दृश्यवर्गविषयक एव। मिथ्याभूतस्य तस्य चैक्यनियमविरहात् तत्र तत्तद्द्रष्टृबुद्धिभेदेन अनेकाः कल्पना जायन्ते। परं तादृशानेककल्पनयापि तत्सिद्धिर्न केनापि कर्त्तुमर्हा। यथाह खण्डनकारः—

लक्षणाधीना लक्ष्यव्यवस्थितिर्लक्षणानि चानुपपन्नानि परस्पराश्रयादिदोषाद् गन्धवत्त्वादिना लक्षणेन हि ज्ञाते लक्ष्ये पृथिवीस्वरूपेऽधिकरणे प्रतिबन्धबलेन व्यवहाररूपम् इतरभेदरूपं वा साध्यं साधनीयं तत्र लक्षणज्ञानमन्यलक्ष्यसाधारण्येन भवदपि अकिञ्चित्करमितिव्यावृत्ततया तज्ज्ञानमुपेयं तद् यदि लक्षणव्यावृत्तिर्लक्ष्याधीना तदा परस्पराश्रयः, लक्ष्यपरतन्त्रलक्षणान्तराधीनत्वे चक्रकम्, लक्षणे लक्षणान्तरं तत्रापि लक्षणान्तरमित्यपरानवस्था, एवं भवदपि अकिञ्चित्करमिति। एवं जलादिसाधारण्येन ज्ञायतां पृथिव्यामितरभेदसाधनमकिञ्चित्करमिति व्यावृत्तायां तत्साधनं वाच्यं तद्व्यावृत्तिर्यदि प्रकृतलक्षणाधीना तदा परस्पराश्रयः, लक्षणान्तरेण चेत् प्रकृतलक्षणानुपयोगः, इत्यादिदिशा लक्षणव्यवस्था दुर्घटैव।

एतदभिप्रायिका खण्डनस्य कारिका राजते—

शब्दार्थनिर्वचनखण्डनया नयन्तः<br>
सर्वत्र निर्वचनभावमखर्वगर्वान्।<br>
धीरा यथोक्तमपि कीरवदेतदुक्त्वा<br>
लोकेषु दिग्विजयकौतुकमातनुध्वम्॥

इति। एवं नेदं सद् भवितुमर्हति वक्ष्यमाणदूषणगणग्रस्तत्वात्। नाप्यसदेव लौकिकविचारकाणां निखिलव्यवहारोच्छेदापत्तेः। यो वादी निरुक्त्यभिमानं धत्ते स निर्वक्तुं न शक्ष्यति वक्तव्यदोषात्। एवञ्च अन्यदीयरीत्या इदमुच्यतेऽनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति।

परमार्थतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भरमवलम्ब्य चरितार्थाः सुखमास्महे। ये स्वोहितसाधन-दूषणव्यवस्थया विचारमवलम्ब्य निश्चेतुं वाञ्छन्ति तान् ब्रूमो भवतां विमर्शव्यवस्था न साध्वी भवदूहितव्यवस्थयैव व्याहतत्वात्। अनया रीत्या लक्षणलक्ष्यव्यवस्थां तिर-स्कुर्वन्तः केचन पण्डितमानिनः परानाक्षिपन्ति सर्वमनिर्वचनीयं प्रपञ्चजालमिति घोषयन्तो निजीयं सुखस्वापं सूचयन्तो सर्वत्र भ्रान्तिमेव साधयन्तः प्रपञ्चगर्ते पतन्तोऽपि प्रपञ्चस्य मिथ्यात्वं प्रकटयन्तो वाक्चातुर्यलीलामवतारयन्तः शास्त्रार्थप्राङ्गणे खेलन्तो मनोमोदकमावहन्तोऽन्यान् विदुषः प्रतारयन्तो मिथ्यात्वसत्यत्वलक्षणशरणमाप्नुवन्तो वान्तमश्नुवानाः परान्निन्दन्तो राजन्ते चातुर्यकवचच्छादिततनवस्तर्कतनयाः वेदान्त-वज्रप्रक्षेपका उपदेशकुशला मायावादिनो मायिनः संसृतिपारावारे। किन्तु तेषामुक्तं मतं परीक्ष्यमाणमौचित्यं नाञ्चति--यतः सर्वव्यवहारसम्पादकतया अनुमानस्या-वश्यकत्वेऽपि परमप्रयोजनं तस्यापवर्गसाधकत्वमेव। यद्यपि श्रुतेः प्रामाण्ये नास्ति संशीतिस्तथापि तत्र येषां विश्वासः सन्दिग्धस्तेषां कृते श्रुत्या प्रतिपादितेऽर्थे दार्ढ्यायानु-मानं नितरामुपयोगि आवश्यकञ्च। श्रुत्या प्रतिपादितेऽर्थे अनुमानेन दार्ढ्ये सम्पादिते लौकिकानां परीक्षकाणाञ्च निष्कम्पप्रवृत्तिर्नान्यथेति चरमपुरुषार्थापवर्गसाधनायानुमानं नितरामावश्यकम्। अतोऽपवर्गस्य स्वरूपं तत्र प्रमाणं कथं च तस्य पौरुषेयत्वं तत्र चानुमानस्य कथं विनियोग इति नैयायिकः प्रत्यवतिष्ठते। गौतमाभिप्रेतमपवर्गस्य स्वरूपं प्रक्रम्यमाणमिदानीं विहायान्यचिन्तनसरणिं चिन्त्यते। गौतमोक्तप्रमाणनिरूप-णानन्तरं किमर्थं प्रमाणनिरूपणमित्याकाङ्क्षायां समुदितायां प्रमेयजातस्य यथार्थपरिचय एव प्रमाणनिरूपणफलत्वेन निर्देष्टुं शक्यः। ते च प्रमेयाः—आत्मशरीरेन्द्रियार्थ-बुद्धिमनःप्रवृत्तिदोषप्रेत्यभाव-फलदुःखापवर्गास्तु प्रमेयम् न्या. सू. १।१।९ इति गौतमोक्ताः।

**साक्षान्मोक्षजनकज्ञानविषयाः प्रमेयाः प्रमेयपदबोध्याः**

यद्यपि प्रमाणसिद्धत्वेन सर्वे पदार्थाः प्रमेया इति प्रमेयपदबोध्यत्वेन कथमुक्ता एव ? तन्निराकरणायैव साक्षान्मोक्षजनकज्ञानविषयाः प्रमेया एव प्रमेयत्वेन सूत्रकारस्य अभीष्टा न तु सर्वे। तत्रापि प्रमेयवर्गस्थः प्रथम आत्मपदार्थो जीवः। यस्य विषये महर्षिवात्स्यायनो भाष्यकार एवं ब्रूते सर्वद्रष्टा, सर्वभोक्ता, सर्वज्ञः, सर्वानुभावीति, प्रसङ्गेऽत्र सर्वशब्देन सर्वसुखदुःखसाधनानि सर्वाणि सुखानि दुःखानि च तात्पर्यटीकाकारेणाभिहितानि भाष्यकाराभिप्रेतानि सर्वस्य सुखदुःखसाधनस्य द्रष्टा सर्वस्य सुखस्य दुःखस्य च भोक्ता यतः सुखदुःखसाधनं सर्वञ्च सुखदुःखं जानाति अतः सर्वज्ञः। न चाप्राप्तानि एतानि जानातीत्यत आह सर्वानुभावी, अनुभवः प्राप्तिः।

**भाष्यकारस्यायमाशयः—**

प्रमेयवर्गान्तर्गतो जीवात्मा अनादिकालात् सकलस्य सुखदुःखसाधनस्य ज्ञाता सकलसुखदुःखभोक्ता यावन्ति सुखानि दुःखानि च अनुभूयमानानि जगति राजन्ते तेषां परिज्ञाता जीवात्मैव न तु शरीरादीनि जडानि। यतो हि इन्द्रियादीनि नियतविषयाणि अतः सर्वविषयकज्ञातृत्वं न तेषां संघटते किन्तु जीवात्मा सर्वेन्द्रियग्राह्याणां समेषां विषयाणां ज्ञाता अत एव सर्वज्ञत्वेन स एव निर्दिष्टो नान्ये। किन्तु सुखदुःखानां तेषां साधनस्य च प्राप्तिमन्तरा तत्र सर्वज्ञत्वं साधयितुमशक्यत्वेन सर्वानुभावित्वं तत्र प्रकाश्यते। अत्रानुपूर्वकभूधातोरर्थः प्राप्तिः तथा च यो हि पदार्थः सुखदुःखसमस्तसाधनस्य समस्तस्य सुखस्य दुःखस्य च प्रापकत्वेन ज्ञाता भवति स एव भोक्ता भवितुमर्हति इति जीवात्मैव तादृश इति निष्प्रपञ्चं वक्तुं शक्यते किन्तु सुखदुःखसंवलित आत्मा वैराग्याय जायतेऽर्थात् सुखित्वेन दुःखित्वेन च आत्मा हेयः केवलं स्वरूपत्वेन च उपादेय इति सूचयितुमात्मनः पूर्वं स्वरूपमुक्तम्। अन्यानि च जडानि सर्वाणि शरीरादीनि तु हेयान्येव। स्वतन्त्रतामीहन्ते समे। परतन्त्रतां न याचते कश्चनापि। स्वातन्त्र्यमात्मन एव भवितुमर्हति न तु जडवर्गाणां व्यतिरिक्तानाम्। तत्स्वातन्त्र्याय कृतप्रयत्ना राजन्ते समे दर्शनकाराः। भाषाभात्रशैलीनां भेदेऽपि परस्परं दार्शनिकानां परमप्रयोजनचिन्तायां सर्वे कुशलिनः। उपायभेदेऽपि उपेयस्वातन्त्र्यप्राप्तौ न विवादो न वा मतभेदः। आन्वीक्षिकी विद्यानां निखिलानां साधनभूता न साध्यभूतेति वचनं कमठीस्तनायितमेव। यद्यपि व्युत्पत्त्याधायकत्वेन सर्वोपकारकता तत्र सुस्था तथापि तदेव केवलमीहितमान्वीक्षिक्या इति तु न तस्या अपि परमसाध्यस्य साधकत्वात्।

सर्वत्र मिथ्यात्वमीहमाना मायिनस्तत्रैव रममाणाः स्वसिद्धान्ताच्च्युताः परिलक्ष्यन्त इति मनागपि न सन्देहसर्पः। सर्वत्र ब्रह्मभावं पश्यन्तोऽपि अन्यान् कथं चिन्वन्ति इति ते विदन्तु। व्यावहारिकप्रातिभासिकपारमार्थिकसत्ताभेदाद् यदि ते एवं व्यवहरन्ति अन्यान् प्रतारयन्ति च तदा परमार्थं जानन्तोऽपि कथं विरुद्धं चेष्टन्ते। यद्यविद्यायाः प्रभावादेवं तन्वन्ति तदा आविद्यिकत्वादेव पराक्षेपोऽपि व्याहतस्तेषामन्यथा आविद्यिकोऽपि प्रपञ्चपरिवारः कथन्न तथ्यतां भजेत। ब्रह्मातिरिक्तः सर्वोऽपि प्रपञ्चस्तेषां जल्पितो मिथ्येति तेषां राद्धान्तः। तमेव सिद्धान्तं राद्धान्तीकृत्य तज्जल्पितः पराक्षेपोऽपि मिथ्येति कथं न भवितुमर्हति आविद्यिकत्वात्। परमार्थतस्तु ब्रह्मातिरिक्तं सर्वं भावत्कमाविद्यिकत्वान्मिथ्येति तत्र न विचारयामः। किन्तु यदि कश्चन वक्ति मायिनां मते अविद्यां विहाय किमपि न अभिनवं वैचारिककोटिमवगाहते। अविद्याविजृम्भणं निखिलं भावत्कम्, परमार्थस्थितिर्ब्रह्मणो नाम भवतु तेन किम्? प्रपञ्चमात्रं तु आविद्यिकम्। एवं परकीयमतखण्डनं निजीयमतमण्डनं

सर्वमपि आविद्यिकत्वान्मिथ्या हेयञ्चेति । मायिनः कथयन्ति यथा स्वाप्निकपदार्थानां जागरावस्थायां बाधो बाधत्वादेव च तेषां मिथ्यात्वं तथैव जाग्रत्पदार्थानां स्वप्ने बाधो बाधत्वादेव च मिथ्यात्वम् । किन्तूक्तं कथनं तथा प्रतिभासते यथा काशीतः प्रयागं गतो देवदत्तो काशीमनवलोकयन् ब्रूते काश्या बाधो बाधत्वादेव च मिथ्यात्वं तस्या एतावता किं काश्या बाधो बाधत्वादेव वा मिथ्यात्वं तस्या वक्तुं शक्यते ? बालभाषितमेतत् किमन्यन्यन्न । नो चेद् यावन्तः पदार्था इन्द्रियावेद्याः सन्ति तेषां समेषां बाधो बाधत्वादेव च परिगीयतां तत्रत्यं मिथ्यात्वम् ।

किञ्च यन्मतमवलम्ब्य डिण्डिमघोषो मायिनां तन्मतं विलोकयामस्तावद्—प्रख्याताभेदवादिनो ब्रह्मवादिनो वेदान्तरससारसज्ञा विपश्चितोऽखर्वगर्वा भेदवादिनं तार्किकमवहेलयन्तोऽवद्योत्यन्ते किन्तु स्थितिः सर्वथा भिन्नैव द्योतते । भेद एव सर्वत्र भासतेऽभेदस्तु काल्पनिक एव यतो हि—माया अविद्या प्रकृतिरदृष्टं वा प्रख्यातं एतत्साचिव्येन त्रिभुवनमयीं सृष्टिं तन्वानः परमेशो राजते । श्रुतिमयवचोभिः स एवेश्वरो गीयते मुहुर्मुहुः ।

मोक्षाय स्पृहयालवो वेदवाचाम्, ऋजावर्थे श्रद्धालवस्तर्कोदर्कविभावनासु नितरां छद्मना निद्रालवः, छान्दसा भेदे दृक्पथम्प्राप्तेऽपि सहसा तन्द्रालवः, कैवल्यात्पतयालवोऽभेदवादिनः सद्युक्तिं दूरतो विहाय अन्यत्र रममाणा राजन्ते । युक्तिसत्रलामाधारीकृत्य भेदरत्नरक्षका तार्किका एव यामिका अवलोक्यन्ते । आत्मनि देहादेस्तात्त्विकाद् भेदं सत्यमजानतां मुमुक्षूणां कदापि न मोक्षोपलब्धिरिति भेदो निरूपणीयः । कुत्रापि तादृशी बुद्धिर्न भासते यत्र भेदो नावद्योतते । अत एव यद् भेदप्रमापकं न भवति तन्मानं भवितुं नार्हति ।

तद्भेदविस्फोरणाय कश्चन सन्दर्भ उपस्थाप्यते—

"स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखमनामगोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतसंवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नोति कञ्चन न तदश्नोति कश्चनेति" (बृ० उ० ३।८।८) श्रुतावन्योऽन्याभावात्मकभेदस्यैव नञर्थत्वम् ।

अस्थूलमिति स्थौल्यात्यन्ताभाववदित्यर्थ इति चेत् तथापि वैधर्म्यभेदस्य नञर्थत्वं तथा चान्योन्याभाव इत्यर्थः । भेदज्ञप्त्यर्थमेव हि वैधर्म्योक्तिः । इतरथा तद्वैयर्थ्यप्रसङ्गात् । न तदश्नोति कञ्चनेति तद् ब्रह्म कञ्चन आत्मानं नाश्नोति न व्याप्नोति । न कश्चन तदश्नोति-न वा कश्चनात्मा तद् ब्रह्म व्याप्नोति, केनाप्यात्मना क्षेत्रज्ञेन नैतत् सम्बद्ध्यते, विभुनोः संयोगकारणान्यतरकर्मोभयकर्मावियवसंयोगाभावादिति स्वरूपाख्यानम् ।

एवमेव मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति ( बृ० उ० ४।४।१९ कठ० उ० ४।११ ) श्रुतिरपि भेदप्रमापिकैव।

स पुरुषो मृत्योः संसारात् मृत्युं प्राप्नोति पुनः पुनः संसरतीति—य इह नानेव पश्यति—न तु वस्तुगत्या नाना पश्यतीति तात्पर्याद्, इव पदसंदानात् इतरथा नाना पश्यतीत्येव वक्तव्यमासीत्।

स किल एको द्रष्टा अद्वैतो भवतीति श्रुतिरपि भेदमेव प्रतिपादयति। अन्ये तु द्रष्टारः क्षेत्रज्ञा भेदवन्त इत्यर्थस्य स किलेत्यनेन ध्वननात्।

तत्त्वमसि' ( छा० उ० ६।८।४ ) इति श्रुतिरपि भेदमेव वृणुते युष्मच्छब्दस्य गम्यमानस्य भिन्नसम्बोध्यविषयत्वात्। न तु तद् द्वितीयमस्तीति श्रुतिरपि भेदबोधिकैव, तद् ब्रह्म द्वितीयं नास्तीति धर्म्युपरागेण प्रतिषेधकरणात्। इतरथा द्वैतं नास्तीति धर्मोपरागमात्रेण निषेध आवश्यक आसीत्।

तथा च एकमेवाद्वितीयं ब्रह्म' ( छा० उ० ६।२।१ ) इति श्रुतिरपि ब्रह्मातिरिक्तपदार्थनानात्वं स्वीकुरुते ब्रह्मणि ब्रह्मप्रतियोगिकभेदस्यैव प्रतिषेधात्, धर्मिविशेषसमभिव्याहारबलेन तथैव व्युत्पत्तेः। यथा इह भूमौ एक एव राजेति वाक्याद् राजगतनानात्वव्यतिरेकः प्रतिभासते न तु गजतुरगस्यन्दनपदातीनामपि। यथा चात्रारण्ये शाल्मलिद्रुम एक एव न नानेत्यभिधाने शाल्मलिद्रुमगतमेव नानात्वं वार्यते न तु रसालपनसहिन्तालादिगतं नानात्वम्।

एवम् 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः' ( ब्र० वि० १२ ) एकधा बहुधा चैव दृश्यते जलचन्द्रवत्। इत्याद्यपि भेदसमर्थकजन्ममरणप्रबन्धेन बाल्यकौमारप्रौढवृद्धभेदेन वा भिन्नेषु देहेषु एक एव भूतः सत्य आत्मा क्षेत्रज्ञो व्यवस्थितो न तु चैत्रमैत्रशरीरभेदेनात्मभेदवद् जन्ममृत्युप्रबन्धेन शरीरभेदेऽप्यात्मभेद इत्यर्थात्।

यथा एकधा एकप्रकारोऽपि चन्द्रो बहुधा नानाविधो भासते तरङ्गतारल्यसन्निधौ तथा तरङ्गवदतिचपलजन्ममृत्युप्रबन्धभिन्नशरीरावच्छिन्न एक एवात्मा नानाविधो भाति।

यथा कुत्रापि जनौ नृपोऽहं कुत्रापि दरिद्रोऽहं कुत्रापि स्थूलोऽहं कुत्रापि कृशोऽहं श्यामोऽहमित्येकमेवात्मानमविद्यामहिम्ना शरीराच्छरीरे समारोप्य नानाविधं वैचित्र्येणावेदयते।

एवञ्च 'द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च' इति श्रुतेर्भेदबोधनं नास्फुटमपि तु स्फुटतरमेव।

"द्वा सपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ( मु० उ० ३।१।१ ) इति श्रुतिरपि भेदमेव ब्रूते। किञ्च यत्र श्रुतौ प्रकृत्यर्थः प्रत्ययार्थो वा द्विबहुत्वादिः, तत्र भेदाविनाभूतधर्मप्रतिपत्तौ भेदप्रतिपत्तिरनिवार्या।

'यथा विश्वेदेवास आगच्छत' इत्यादौ प्रत्ययार्थः क्वचित्सम्बन्ध एव भेदाविनाभूतो भासते।

यथा 'तद्विष्णोः परमं पदमित्यादौ ( क० उ० ) यथा वा 'अग्नेरपत्यं प्रथमं हिरण्यम्' इत्यादौ। क्वचित्कार्यकारणभाव एव भेदाविनाभूतो विराजते। यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः इत्यादीनां निखिलानां विधिवाक्यानाम्।

एवं श्रुति-निन्दा-स्तुतिपरकृतिपुराकल्पभेदेन भिन्नस्यार्थवादस्यापि भेदो भेदाविनाभूतो वाऽर्थं आवश्यकः। यथा 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते' ( छा. उ. ६।१।३ ) इति स्तुतौ कार्यकारणभावः। एष वाव प्रथमो यज्ञानां ज्योतिष्टोमोऽधानेन हुत्वा योऽन्येन जुहोति सोऽन्धं तमः प्रविशति। इत्यादिनिन्दायाम् एवं परकृतिपुराकल्पयोरपि।

किञ्च मैत्रेयि आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च ( वृ. उ. २।४।५ ) इति प्रश्नोत्तरमुखेनोपनिषदवतारो भेदमन्तरेणानुपपन्नः। न हि ज्ञाते प्रश्नो नाप्यज्ञाते उत्तरम्। अतः प्रष्टुरपेक्षया उत्तरयितुः प्रसिद्ध एव भेदः। श्रवणादिप्रतिपत्तीः परस्परभिन्ना विदधती श्रुतिरपीयं भेदं विनानुपपद्यमाना, नह्यमूषामभेदे विधिचतुष्टयं युज्यते। तथा सति श्रोतव्य इत्येव ब्रूयात्। एवं च न सा श्रुतिर्यत्र शब्दबलादर्थबलाद्वा भेदो न प्रतीयत इति।

किञ्च न सा धीर्यत्र भेदो न विषयतां याति यथा विशिष्टज्ञानानां वैशिष्ट्यविषयतयैव भेदविषयता। वैशिष्टयस्य पदार्थान्तरानुपपत्तौ परिगणितभावपदार्थान्तर्भावेऽतद्व्यावृत्तिरूपान्योऽन्याभावाख्यभेदरूपतैव वक्तव्या।

एवञ्च वैशिष्ट्यविषयकज्ञानानां सिद्धं भेदविषयत्वम्। तदाहुराचार्या गुणकिरणावल्याम्—"अतद्व्यावृत्तिर्वैशिष्ट्यम्। ( गु. कि. पृ. २०२, १३ ) इति निर्विकल्पकानन्तरभाविनो घटोऽयमिति सविकल्पस्य कथमतद्व्यावृत्तिः पूर्वज्ञानाविषयः इति चेन्न वैशिष्ट्यविषयत्वान्यथानुपपत्त्या संज्ञास्मरणस्यैव निर्विकल्पकसमनन्तरकालीनस्यातद्व्यावृत्तिविषयत्वकल्पनात्। सर्वतो ह्यन्यथानुपपत्तिर्बलीयसी। 'एवं सत्यन्यापोहः पदार्थः स्यात्, तथा च जितं बौद्धैरिति चेत्, न गोत्वादीनां पदादनुपस्थितौ वैशिष्टयमपि कस्य भासेत येनापोहभाननैयत्यं स्यात्।

एवञ्च बौद्धपक्षादयमेव भेदो यत् तैरन्यापोह एव पदार्थतावच्छेदको धर्मोऽङ्गीक्रियते अस्माभिस्तु गोत्वादिरिति। निर्विकल्पकधियां यद्यपि न वैशिष्ट्यं विषय इति

अन्योऽन्याभावो भेदो न भासते इति चेद् यत्किञ्चिदेतत् ? तथापि स्वरूपभेदो घटादि-वैधर्म्यञ्च घटत्वादिर्भासते तेनैव भेदविषयता। तदपि भेदत्वेन भासत इति यत्किञ्चि-देतत् तदेवं सर्वमतीनां भेदविषयतायां सिद्धायां सर्वप्रमाणानां भेदप्रमापकत्वमयत्न-सिद्धम्। वेदान्तस्तु मुमुक्षूणां तत्त्वज्ञानविरोध्यर्थोपस्थापकतयानुपादेय एव। यदि तु तैर्थिकप्रवृत्त्यनुरोधात् कथञ्चिदुपादेयता तस्य तदा श्रोतव्य इति विधिविषयत्वेनैव श्रुत्यक्षरार्थव्याख्यानमात्रपरत्वान्न तु मन्तव्य इति विधिविषयत्वेन तर्कवैधुर्येण मननानवगाहनान् मन्तव्यश्चोपपत्तिभिरित्यनेन मननस्योपपत्तिसाध्यत्वावगमात्।

न च भेदश्चेद् युक्तिं न सहते तदा श्रुतिवाक्यानामपि भेदप्रतिपादकत्वेन भवतोपदर्शितानां तात्पर्यान्तरमेवोन्नेयमिति चेद्, युक्तिं न सहते इत्यस्य कोऽर्थः ? किं भेदानुभव एव नास्ति उत सन्नपि न यथार्थः। न प्रथमः पटाद् घटो भिन्न इत्यादि-भेदानुभवानां लौकिकपरीक्षकसाधारणानामपलापासम्भवात्। न चान्तिमः, अयथा-र्थता हि विषयबाधकगम्या, बाधकं च विपरीतप्रमा। सा च प्रकृते प्रात्यक्षिकी तावन्नास्ति पटो घटो न भवतीति प्रत्यक्षानन्तरं पटो घट एवेति विपरीतप्रत्य-क्षस्यासम्भवात्।

ननु नीलं तम इति प्रत्यक्षानन्तरं नेदं नीलं तम इति प्रात्यक्षिकबाधविरहेऽपि यथा तव मते तद्बाध्यत्वम् एवमहं स्थूलो गौरो वेत्याद्यहंप्रत्ययानन्तरं न हि न स्थूलो गौरो वेति प्रात्याक्षिकबाधविरहेऽपि भ्रान्तत्वम् तथा प्रकृतेऽपि स्यात्, यौक्तिकबाधस्योभयत्रापि समानत्वादिति चेन्मैवं भेदबाधकयुक्ते-र्विरहात्।

नन्वस्ति सा तथा हि भेदवत्तया घटादयो भिन्ना इति यदभिधीयते तत्र भेदोऽभिन्ने भिन्ने वा वर्तते।

न प्रथमो विरोधात्। न ह्यभिन्नं भिन्नं भवति। द्वितीये तु तद्भेदभिन्ने तद्भेदवृत्तौ आत्माश्रयः कथन्न ? स्वविशिष्टे स्ववृत्तावंशतः स्ववृत्तेः। भेदान्तरेण भिन्ने-ऽधिकरणे भेदवृत्त्यभ्युपगमे तत्राप्येवमेवाभ्युपगमेन कथं नानवस्थाया अवसरः। एकेन भेदेन भिन्ने द्वितीयस्तेन च भिन्ने प्रथमो भेद इत्यात्माश्रयानवस्थयोः परीहारेऽप्यन्योऽ-न्याश्रयः। बहवो भेदा एककालावच्छेदेन ज्ञायमानं वस्तु परिरमन्त इत्यभ्युपगमेऽपि किं भेदविशिष्टे को भेदो वर्ततामिति तेषामन्योऽन्यकलहो दुःसमाधः। प्रथमेनैव भेदेन भिन्ने द्वितीयादिभेदाभ्युपगमे वैयर्थ्यमुत्तरोत्तरभेदाभ्युपगमे च कृतकरत्वेन पूर्वपूर्वभेदविलोप इति चेन् मैवं वर्तत इति संयोगलक्षणां समवायलक्षणां वा वृत्तिमधिकृत्य यदि प्रश्नस्तदाऽन्योऽ-न्याभावात्मको भेदो न वर्तत इत्येवोत्तरम्, अभावस्य संयोगसमवाययोरनङ्गीकारात्।

अथ स्वरूपलक्षणां वृत्तिमधिकृत्य प्रश्नस्तदा घटः स्वभावनियमान्नित्येनान्यो-ऽन्याभावेनोपरक्तो भासत इत्येवोत्तरम्। उत्पन्नमात्रो घटः कथं भिन्नः स्याद् भेदेन

सम्बन्धाभावादिति चेद् उत्पन्नमात्रं कथं घटो घटत्वेन सम्बन्धाभावादिति समानम् उत्पादक्षण एव घटत्वेन सह घटः सम्बद्धो जातः सम्बद्धश्चेत्येकः काल इति चेद् उत्पादक्षण एव भेदेनापि सम्बद्ध एव जातः सम्बद्धश्चेत्येकः काल इति तुल्यम्। विशेषश्च तत्र समवायः, अत्र स्वरूपसम्बन्धः। स च सम्बन्धान्तरमन्तरेणोपश्लिष्ट-प्रत्ययजननयोग्यत्वमेव, उत्पादात्पूर्वं कीदृगासीद् घट इति चेद् नासीत्। तर्हि तदन्यो-ऽन्याभावोऽपि कथमासीत्? यथा तत्प्रागभावो यथा वा तस्य जातिः। सा तज्जातीयान्तरनिष्ठासीदिति चेत् प्रलये कथमासीत्? एवमेवेति चेदुत्पत्स्यमान-घटान्योऽन्याभावोऽपि तथैवासीत्। घटत्वादावपि विप्रतिपद्यामहे वयमिति चेत्तर्हि बौद्धनिरासवत्तवापि निरासो न दुष्करः। किन्त्वस्माकमिह सिषाधयिषितं भेदमात्र-मिति।

यद्वा तद्भेदभिन्ने घटे स भेदो विद्यत इत्येवोत्तरम्। आत्माश्रयस्तदेति चेन्न तद्भेदे तद्भेदानङ्गीकारात्। तद्विशिष्टे तद्वृत्तावात्माश्रयोंशत इति चेन्न यद्विशेष्यवृत्ति तद्विशेषणवृत्तीति नियमास्वीकारात्। न हि पटे रूपमित्युक्ते पटत्वेऽपि रूपमिति वस्तुस्थितिः प्रत्ययो वा दण्डः पुरुषे दण्डिनीत्युक्ते दण्डेऽपि वा दण्डसंसर्गो भासते। तत्र पटत्वदण्डत्वयोरुपलक्षणत्वं न विशेषणत्वमिति चेद् अत्राप्यापाततस्तथैवास्तु।

परमार्थतस्तु विशेषणत्वेऽपि न दोषः। प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदक-व्यवच्छेदकत्वं स्वकालनियतव्यावृत्तिबोधजनकत्वं वा विशेषणत्वम्। तच्च विशेष्य-वृत्तिधर्मानधिकरणत्वेऽपि सम्भवत्येव। एवञ्च तद्भेदानाश्रितोऽपि तद्भेदस्तद्भेदवदा-श्रितः स्यादिति न कश्चन विरोधः।

तद्भेदसंसर्गात्पूर्वमसंसृष्टः स भेदो विशेषणमपि कथम्। न ह्यसम्बद्धं विशेषणं नामेति चेद् भेदस्यान्योऽन्याभावस्य नित्यतया नित्यसम्बन्धात्तद्भेदसम्बन्धात्पूर्व-मित्येवाङ्गीकुर्महे। 'सम्बन्धिनः पटस्यानित्यतया कथं नित्यः सम्बन्ध इति चेद् अतीतेनानागतेन च प्रतियोगिना विशिष्टप्रत्ययानुभवात्, विशिष्टप्रत्ययस्य सम्बन्धसाध्यत्वात्। अन्यथा पटस्य प्रागभावः पटस्य ध्वंस इति प्रतीतिर्न भवेत्। तत्किमनुत्पन्नस्यापि पटस्योपरक्तप्रत्ययजननयोग्यत्वमस्तीति चेत् का संशीतिर्यावता ज्ञानविषयताया एव योग्यताच्छेदकत्वं तच्चानुत्पन्नस्याप्यस्त्येव। अत्र नियामकं किमिति चेद् वस्तुस्वभाव एव। वस्तुस्वाभाव्याद्वैपरीत्यमेव किन्न स्यादिति चेन्न प्रतीतिनियतत्वात्स्वाभाव्यस्य। न ह्युत्पत्स्यते पटो विनष्टः पट इति त्वया न प्रतीयते।

५

यथा चानुत्पन्नयोरपि सम्बन्धिनोः समवायः पूर्णमासीदेवमनुत्पन्नस्यापि पटस्य भेदसम्बन्धः सार्वदिकः। किन्तु समवायः सम्बन्धिभिन्नोऽयन्तु सम्बन्धात्मको ज्ञानविशेषात्मको वेति न किञ्चिदनुपपन्नम्। समवायेऽपि मम विप्रतिपत्तिरिति चेद् भवतु नाम। तदर्थं नेह यतिष्यामहे।

तथा च सति रूपवति रूप रसवति रसो गवि गोत्वमित्याद्युपलक्षणत्वविशेषणत्वाभ्यामुपपाद्यम्।

यद्वा अभिन्ने भेदोऽस्तीत्येवोत्तरम् पूर्वप्रश्नस्य। न हि स्वस्मादपि पटो नाभिन्नः, घटप्रतियोगिको भेदो घटाभिन्ने पटेऽस्ति घटभिन्ने वेति विशिष्य प्रश्ने जाते सामान्येन नोत्तरं घटते इति चेन्न अनुन्मत्तस्यैतादृशप्रश्नानुपपत्तेः। विरोधितावच्छेदकप्रकारेणोपस्थितस्य धर्मिणो विरुद्धत्वप्रकारावच्छेद्येन प्रश्नस्यादृष्टचरत्वाद् न हि जायते प्रश्नो मृण्मयोऽयं घटस्तेजोमयो न वा ब्राह्मणोऽयं चैत्रः शूद्रो न वेति। अन्यथा विज्ञानात्मकं ब्रह्म जडं न वा सुखात्मकं ब्रह्म दुःखात्मकं न वेति जिज्ञासतो युक्तिशतेनापि त्वया साध्यमाने विज्ञानसुखात्मकत्वपृच्छानिवृत्तिर्न स्यात्।

यदि चाहृदयस्य कदाचिदेवंविधप्रश्नसम्भवस्तदोत्तरं दत्तमेवान्वेष्टव्यम्। भेदः कुत्र वर्तत इति प्रश्ने यत्र प्रतीयते इत्युत्तरम्। कुत्र प्रतीयते इत्यत्र यत्र वर्तते इत्याद्युत्तरवैचित्र्यं वार्तिकानुसारेण द्रष्टव्यम्। दुर्दुरूढवेदान्तिनस्तु खण्डनयुक्त्यैव निरसनीयाः। सा च भेदः प्रतीतो न वा यमधिकृत्य प्रश्न इत्यादिसञ्चारात्मिका। न चैवं सति खण्डनयुक्तीनामेव बलवत्त्वं प्रतिपादितं स्यादिति वाच्यम्, भवतु नाम तथा, तथापि प्रतिभाशोषे मया विजयरूपस्य फलस्य तदानीं तावतैव प्रतिलम्भात् तत्र निर्णयस्त्वनुन्मत्तैरेव वादिभिः सह विधेय इति।

अस्तु वा प्रतिप्रश्नः, अभेदो धर्मो भिन्ने ब्रह्मणि विद्यते अभिन्ने वा। आद्ये तद् ब्रह्म पूर्वं भिन्नं कथं पश्चादभिन्नमिति विरोधः। अन्त्ये तेनैव अभेदेनाभिन्ने अभेदान्तरेण वा? प्रथमे अंशत आत्माश्रयत्वम्। चरमे अनवस्था। अथापि यद्येवमुच्यते एकदैव सर्वे अभेदा ब्रह्मणि तदा किमभेदाभिन्ने कोऽभेदो विद्यत इति तेषामन्योन्यकलहः प्रसज्येत तद्वारणञ्च दुष्करम्। अभेदबाहुल्ये च भेदपर्यवसानम् इत्यतिरिक्तं दूषणम्।

यद्येवमुच्यतेऽभेदो ब्रह्मणि विद्यते इति न स्वीकुर्मः किन्त्वभेदस्वरूपमेव ब्रह्म एवञ्च नैते दोषा इति चेर्त्तर्हि ममाप्यन्योऽन्याभावोऽस्त्रं मनाग् विश्राम्यतु स्वरूपभेदास्त्रमादायैव योत्स्ये।

तथा च घटस्वरूपस्यैव भेदाङ्गीकारे वृत्तिविकल्पमुखमुद्रणमस्तु। अन्यासाकाङ्क्षस्वभावस्य घटस्यैव भेदत्वेऽन्यसाकाङ्क्षस्वाभाव्यं स्यादिति चेद् ब्रह्मणोऽभेदस्वभावत्वे

घटाभिन्न ब्रह्मेत्यन्यसाकाङ्क्षत्वापत्तिः समाना। ब्रह्मत्वेन निरूप्यमाणं ब्रह्म अन्यसाकाङ्क्षम्। अभेदत्वेन तु तन्निरूप्यमाणमन्यसाकाङ्क्षमस्तु को विरोधः। प्रकारभेदमादायाविरोध इति चेत्तर्हि घटत्वेन निरूप्यमाणोऽन्यासाकाङ्क्षोऽस्तु भेदत्वेन तु निरूप्यमाणोऽन्यसाकाङ्क्षोऽस्तु को विरोधः प्रकारभेदमादायाविरोधस्य समानत्वात्। केवलं मम घटत्वप्रकारत्वयोर्भेदोऽस्ति तव सोऽपि दुर्लभ इति विशेषः। अभिन्नं ब्रह्म अभेदो वा ब्रह्मेति कथमन्यमाकाङ्क्षत इति चेद् घटो भिन्नो भेदो वा घट इत्यपि कथमन्यं साकाङ्क्षते इति तुल्यम्। कस्मादयं भेदइति तव पक्षेऽस्त्याकाङ्क्षेति चेद् ब्रह्म केनाभिन्नमित्याकाङ्क्षायास्त्वत्पक्षेऽपि विद्यमानत्वात्। भेदस्वरूपञ्चेद् घटस्तदा भिन्नो घट इति भेदप्रकारिका प्रतीतिः कथमिति चेद् अभिन्नं ब्रह्मेत्यभेदप्रकारिका प्रतीतिस्तवापि कथमिति समानम्।

ननु घटादिस्वरूपञ्चेद् भेदस्तदा तं तमात्मनि निवेशयेत्। न हि निष्प्रतियोगिकं घटादिस्वरूपं भेदः। तथा सति भेद एव तन्न स्याद् निष्प्रतियोगिकस्य भेदस्य त्वयानभ्युपगमाद् अभ्युपगमे परिभाषापत्तेः। तथा च पटप्रतियोगिकं घटस्य स्वरूपं भेद इत्यर्थपर्यवसानेऽपि पटोऽपि घटस्वरूपं स्यात्। अतो भेदावतारा यासोऽभेद साधनपर्यवसायीति महातार्किकत्वम्। एवं च घटरूपस्य स प्रतियोगी पटस्य स्वरूपमित्यत्रानयापि वाचा पटोऽपि घटस्वरूपमग्न एवेत्यभेद इति चेन्मैवम्, पटप्रतियोगिकं घटस्य स्वरूपं भेद इत्युच्यमानेऽपि पटः प्रतियोगी यस्येतिबहुव्रीहिसमासाश्रयणादेव समस्यमानपदार्थीभूतात्पटादन्यपदार्थे घटो भिन्नत्वेन त्वयैवोपदर्शित इति त्वयैवाभेदापादनस्यापहस्तितत्वात्। समस्यमानपदार्थादन्यस्यैव बहुव्रीह्यर्थत्वात्।

न हि चित्रगुश्चैत्र इत्युक्ते चित्रया गवापि चैत्रस्याभेदो भासतेऽपि तु गोः प्रकारमात्रम्। प्रकृतेऽपि घटभेदत्वेन घटस्वरूपे निरूप्यमाणे पटस्य प्रकारमात्रं नाभेदोऽपीति।

एवं घटस्वरूपभेदप्रतियोगी पट इत्युक्ते कथं घटस्य पटात्मत्वं पूर्वयुक्तेः सत्त्वात्। तथा च यद् यद् वचनमुच्चार्य त्वया पटस्वरूपे घटो घटस्वरूपे पटोऽन्तःप्रवेश्यस्तेन तेन त्वद्वचनेनैव तयोर्भेदो व्यवस्थापनीय इति यथा यथा भेदापनयनाय प्रयासस्तथा तथा हठी बाल इव पुरस्ताद् भेदस्य भासो दुर्निवार्यः।

इतरसाकाङ्क्षतापत्तिभीतिरपि गर्भस्रावेण गलितैव। केयमितरसाकाङ्क्षता नाम। घटादयो निष्प्रतियोगिकास्त एव चेद् भेदाः स्युस्तदा सप्रतियोगिकाः स्युः, अभाव इव समवाय इवेति चेद् भवतु नाम निष्प्रतियोगिकाः। न नः किञ्चिद् बाध्यते। न हि स्वभावाभावत्वेन निरूप्यमाणान् घटादीनपि सप्रतियोगिकान् स्वीकुर्महे। तर्हि अभाववदेवेतरनिरूपणाधीननिरूपणाः स्युः सविकल्पमात्रविषयाश्चेति चेत्तर्कि

सप्रतियोगिकपदार्थस्यायं नियमो यदितरनिरूपणेनैव निरूप्यते ? तथा सति प्रमेयत्वा-भिधेयत्वादिनापि निरूप्यमाणा अभावसमवायादय अन्यनिरूपणमपेक्षेरन् । स्वमेवो-पालभस्व येनैवं नियममङ्गीकुरुषे इति चेन्न अभिप्रायनियमविदुषस्तवैवोपालभ्यत्वात् ।

न वय सप्रतियोगिकत्वं निष्प्रतियोगिकत्वं वा वस्तुनः स्वाभाविकमेव स्वीकुर्मः किन्तर्हि यत्प्रकारावच्छेदेन यज्ज्ञानं नियमतो यद्विशिष्टज्ञानमपेक्षते तत्प्रकारावच्छेदेन तद्वस्तु सप्रतियोगिकमिति कथयामः । यथा च स एव घटो घटत्वेन ज्ञायमानो नियमतो नास्य विशिष्टज्ञानमपेक्ष्य अवगम्यते । ततो घटत्वावच्छेदेन निष्प्रतियोगिक इत्युच्यते । स्वाभावाभावत्वेन ज्ञायमानो नियमतोऽभावज्ञानमपेक्ष्यैव अवबुध्यते इति तेन सप्रकारेण सप्रतियोगिक एव ।

यद्यपि अग्नित्वेन अग्निज्ञानमपि कदाचिद् धूमज्ञानमपेक्षतेऽनुमारूपमतोऽग्नित्वे-नाग्निः सप्रतियोगिक एव स्यादित्युक्तं नियमत इति । न हि प्रात्यक्षिकमपि अग्नित्व-प्रकारकज्ञानं धूमज्ञा-नापेक्षि येन धूमोऽग्नेः प्रतियोगी भवेत् । यद्यपि अग्नित्वनिर्विकल्पकम् अग्नित्वविशिष्टज्ञानं नियमतोऽपेक्षते इति अग्नित्वमपि अग्नेः प्रतियोगि स्यात्, तथापि न तद्विशिष्टज्ञानमित्यपेक्षणीयज्ञाने वैशिष्ट्यं विशेषणमुपात्तम् । अन्यत्र गोत्वाश्वत्वादौ सहानवस्थितिरूपविरोधे कृत एव प्रतियोगित्वव्यवहारः क्वचिद्वध्यघातकत्वादिकृत इति । यद्येवं तर्हि घटादयो निष्पतियोगिका घटाभावादयश्च सप्रतियोगिका इत्यत्र किंकृतो व्यवहारभेद इति चेन्न यत्पदार्थस्य यदसाधारणं वाचकपदं तत्र यत्प्रवृत्तिनिमित्तं तत्प्रकारकज्ञानस्येतरविशिष्टज्ञानसापेक्षत्वनिरपेक्षत्वकृत इति गृह्यताम् ।

यद्यपि संयोगस्य प्रमेयपदं वाचकं तत्र च प्रमेयत्वं प्रवृत्तिनिमित्तं तेन प्रकारेण संयोगज्ञानं न सम्बन्धिज्ञानमपेक्षत इति निष्प्रतियोगिकत्वापत्तिः, तथापि प्रमेयपदं संयोगस्यासाधारणं न वर्तत इत्यदोषः ।

तत्सिद्धमेतद्घटादय एव स्वरूपसिद्धभेदास्तत्त्वेन ज्ञायमानाः सप्रतियोगिका इति शब्देन न व्यवह्रियेत इति चेन्न स्वरूपभेदपदस्य स्वरूपत्वेन प्रवृत्तिनिमित्तेन उपलक्षणेन वा प्रवर्तमानस्य स्वरूपत्वावच्छिन्नाशेषव्यक्तिपरस्य प्रकरणसमभिव्याहा-रादिवशात्तत्र घटादिव्यक्त्युपस्थापकत्वात् ।

स्वरूपत्वञ्च—स्वनिष्ठधर्मात्यन्ताभावासमानाधिकरणधर्मवत्त्वमेव । स्वनिष्ठो यो धर्मस्तस्य योऽत्यन्ताभावस्तदसमानाधिकरणधर्मवत्त्वमिति फलितम् । अत एव घटस्वरूपं न पटस्तस्य घटनिष्ठधर्मात्यन्ताभावसमानाधिकरणधर्मवत्त्वात् । न वा घटान्तरस्वरूपं घटान्तरं तत्राप्येकतरधर्मस्य अपरजात्यन्ताभावनैयत्यात् ।

न च घटनिष्ठसंयोगात्यन्ताभावसामानाधिकरण्यात्तद्घटत्वस्य तद्घटोऽपि तद्घटस्वरूपं न स्यादिति वाच्यम्, अत्यन्ताभावपदेन प्रतियोग्यसमानाधिकरणात्यन्ता-

भावस्य विवक्षितत्वात्। अभावस्यापि यया कयाचिद् वृत्त्या स्वनिष्ठधर्मात्यन्ताभावासमानाधिकरणधर्मवत्त्वस्य विद्यमानत्वेन स्वरूपशब्दवाच्यत्वम्। अत एव स्वरूपमित्युक्ते सकलस्वरूपोपस्थितौ विशेषप्रतिपादनाय घटस्वरूपं पटस्वरूपमिति तत्तत्समभिव्याहाराय यत्नः। अयमेव च धर्मो घटस्वरूपस्य भेदत्वम्। एतत्प्रकारावच्छेदेन ज्ञायमानो घट इतरनिरूपणाधीननिरूपणः। ननु असंहितोपाधेरुपहितप्रत्ययायोगाद्भिद्यत इति योगं पुरस्कृत्य अन्योऽन्याभावस्वरूपभेदवत्तया घटादिर्भेदः। भेदस्तु भेदनत्वादन्योन्याभाव एवेत्यभिधाने अभावानामन्योन्याभावविरहिणां भेदवत्त्वाभावाद्भिद्यत इति योगविरहिणां भेदो न भवेदित्यस्माकं स्वरूपभेदोपपादनप्रयास इति।

ननु स्वरूपञ्चेद् भेदस्तदा शुक्तिस्वरूपमेव रजताद् भेदो गृहीत इत्यभेदारोपो न स्यात् न स्याच्च दूरादभिव्यक्तहस्तचरणादिपुरुषस्वरूपे दृष्टे स्थाणुर्वा पुरुषो वेति संशीतिरिति चेन्मैवम्—न हि भेदः संशयविपर्ययविरोधी, किं नामारोप्यारोपविषयगतधर्मयोरन्योन्यस्मिन्नभावदर्शनम्, आरोप्यधर्मस्य आरोप्यविषयगतव्यतिरेकावलोकनं वा आरोप्यधर्माधिकरणारोपविषययोरन्योन्याभावावलोकनं वा तथैवानुभूयमानत्वात्। एवञ्च स्वरूपभेद एव ग्रहे संशीतिविपर्ययौ न भवत इति व्यर्थं वचः।

न च यदि प्रतियोगिना निरूपितो घट एव भेदस्तदा केनापि प्रकारेण निरूपितं नीलमपि पीतमापद्येतेति वाच्यम् आपादकविरहात्। अविरुद्धयोर्घटत्वभेदत्वयोः समावेश इव नीलपीतत्वयोरपि समावेशोऽनिवार्य इति जात्युत्तरत्वाद् व्याप्त्यमूलकत्वात्। एवञ्च नीलपीतयोर्नीलत्वपीतत्वयोर्वा परस्परपरीहारकता नियमेनास्माभिः स्वीक्रियते। यदा घटत्वभेदत्वयोश्चेत्त्वया स्वीक्रियते तदा तावतैवोपपन्ने भेदकलह एवावयोः पर्यवस्येत्।

यच्च चोदितं भेदोल्लेखस्याभेदोल्लेखनान्तरीयकतया अभेदोल्लेख एव ज्ञानस्य प्रामाण्यं न तु भेदोल्लेखांशेऽपीति तद्विपरीतम् अभेदप्रतीतेर्भेदविषयतानैयत्यात्। न हि भेदमनुल्लिख्याभेदप्रत्ययः सम्भवति प्रतियोगित्वेन भेदभानस्यापलपितुमशक्यत्वात्। भेदे च प्रतीते अभेदभानमनिवार्यम्। न हि भेदपदाद् भेदे गृहीतेऽभेदप्रथा तस्यापदार्थत्वात्। सर्वधियां च भेदविषयता वैशिष्ट्यविषयत्वेन पूर्वमेव दर्शिता तस्माद् अभेदं नोल्लिखन्ती मतिर्न भेदोल्लेखनक्षमेति चित्तरथमात्रमेव।

नाभिन्नौ घटपटाविति प्रत्यये पारमार्थिकभेदनिषेधोऽपारमार्थिकभेदनिषेधो वा। उभयथापि भेदप्रसक्तिरपरिहार्या। पारमार्थिकस्य हि भेदस्य निषेधे तादृशप्रतियोगिनो नित्यवदन्वयः। अपारमार्थिकनिषेधे च मदभ्युगम्यमानपारमार्थिकभेदेन निषेधानन्वयादेवाभेदासिद्धिः। अभेदज्ञाने प्रतियोगिप्रमा नापेक्षिता परन्तु ज्ञानमात्रमिति चेत्तर्हि अभेद इत्यप्रमितभेदाभाव इत्येवार्थः पर्यवसन्नः। एवञ्च किं नश्छिन्नम्।

नन्वभेद इति भेदं न निषेधामः किं नाम धर्मान्तरमेव कथयाम इति चेन्न तद् यदि भेदविरोधि तदा विरोधनिरूपकत्वेनैव भेदसिद्धिः। यदा भेदाविरोधि तदा घटपटयोरभेदनामकं धर्मान्तरं द्रव्यत्वपृथिवीत्वादिवद् यदि प्रत्ययपथमवतरेत् तन्निषेधाय को यतेत। प्रतीयत एव प्रतिश्रुनित इति चेन्न श्रुतीनां भेदविषयत्वेनोपपादनात्।

श्रुतीनां यदद्वैतं प्रतिपाद्यते तत्किं घटादिनिष्ठम् उत ब्रह्मनिष्ठम् वा स्वरूपम्। प्रथमे भेदविरोधि न वा उभयथापि भेदसिद्धेः, एकत्र भेदनिरूपकत्वेनान्यत्र श्रुतिप्रतिपन्नाद्वैतविरोधादेव। अथ ब्रह्मनिष्ठमेवाद्वैतं धर्मान्तरं तदपि न भेदविरोधि विरोधित्वाविरोधित्वाभ्यां प्रकाराभ्यां भेदसिद्धेः।

अथ ब्रह्मप्रपञ्चोभयनिष्ठमद्वैतं धर्मः श्रुतिप्रतिपाद्यस्तत्रापि भेदविरोधे भेदसिद्धिस्तदविरोधे तदसिद्धिः। यथा चोभयमद्वैतं मनुषे तथात्वमपि उभयगतमस्तु।

अथ ब्रह्मस्वरूपमेवाद्वैतं श्रुतिप्रतिपाद्यं तदा न नः कलहः श्रुत्या भेदस्याप्रतिक्षेपात्। अद्वैतं न प्रतिपाद्यते परन्तु द्वैतं प्रतिषिध्यत इति चेद् द्वैतनिषेधो ब्रह्मभिन्नो न वा, प्रथमे कथं द्वैतनिषेधः श्रुत्या ब्रह्मण एव विधेः।

ननु स्वरूपं भेदस्तदा स्याद् यदि नानास्वरूपं स्यात्। नानात्वञ्चान्योन्याभाववस्तुभेदो नितरामनुपपन्नः। तथा हि अन्योन्याभावस्तादात्म्याभावः। तस्य च तादात्म्यं घटपटयोः प्रतियोगिवाच्यं तस्य च सिद्धमद्वैतम्। असिद्धावत्यन्तासतो न प्रकारत्वम्, नाप्युपलक्षणं सम्भवतीति तद्विशिष्टस्तदुपलक्षितो वा भावप्रत्ययो न स्यात्, अभावप्रत्यये उपलक्षणत्वेन विशेषणत्वेन वा प्रतियोगी वा तवाभ्युपगमात्। न च वाच्यं घटे पटत्वं पटे घटत्वं निषिध्यते तथा च स एव परस्पराभावात्मा भेद इत्यभिधीयत इति, एवञ्च सति कः संसर्गाभावादस्य भेदः, तथा चाभावचातुर्विध्यव्यवस्थापनबालधन्धस्य त्वयैव स्फुटीकरणात्।

न च घटः पटे पटो घटे घटत्वपटत्वाभ्यामवच्छिद्य प्रतिषिध्यत इति वाच्यम् एवञ्च सति घटत्वपटत्वयोरवच्छेदकधर्माभावात् तयोरन्योन्यस्मिन्निषेधानुपपत्तेः। अन्योन्याभावाभावादन्योन्यधर्मवत्त्वमन्योन्यस्मिन्नितिघटपटयोरभेद एव पर्यवसन्न इति चेन्मैवम् अभिप्रायानवबोधात्। न ह्यन्योन्यतादात्म्यं प्रतियोगि ब्रूमोऽन्योन्याभावे येन प्रतियोग्यप्रसिद्धिनिबन्धनं तद्विशिष्टतदुपलक्षितप्रत्ययानुदयप्रसङ्गः। न वा घटत्वपटत्वयोरेव प्रतियोगित्वमाचक्ष्महे येन संसर्गाभावप्रवेशप्रसङ्गः, न वा घटपटयोरन्योन्यस्मिन्निषेधात्तादात्म्याभावो व्यवहारात्मा, येन घटत्वपटत्वयोः स्वगतावच्छेदकधर्मविरहस्तयोरन्योन्याभावविरहः स्यात्, किं नाम घटमेव प्रतियोगिनं कथयामः। स च यदि संसर्गावच्छिन्नो निषिध्यते तदा संसर्गाभावप्रत्ययः। तादात्म्यावच्छिन्नश्चेन्निषिध्यते तदा तदन्योन्याभावप्रत्यय इतिविशेषः।

ननु तादात्म्यस्य प्रतियोगितावच्छेदकत्वेऽपि अप्रतीतत्वं तदवस्थमेवेति चेन्न तादात्म्यस्याप्रतियोगित्वात्। घटतादात्म्यं पटे नास्तीति प्रत्यये तादात्म्यमेव प्रतियोगित्वेन परिस्फुरति इति चेन्न तत्र पटतादात्म्यसंसर्गस्यैव प्रतिषेध्यत्वात्। संसर्गाभावाङ्गीकाराद् यत्र घटः पटो न भवतीति नञर्थे घटेन योऽन्वयस्तत्र तादात्म्यावच्छिन्नो घट एव प्रतियोगीति संसर्गाभाववैलक्षण्यात् प्रत्ययवैलक्षण्यादेव प्रत्येतव्यवैलक्षण्योपपत्तेः, न हि घटः पटो भवतीति घटः पटो नास्तीति प्रत्यययोर्वैलक्षण्यं त्वया मया वा न स्वीक्रियते।

किञ्च भूतलनिष्ठस्यापि घटस्य घटो भूतलं न भवतीति भूतलेऽभावः प्रतीयते। स च न संसर्गाभावः, भूतले घटसंसर्गस्य प्रत्यक्षत्वात्। तथा च घटः पटो नास्तीति न तादात्म्याभावः, घटतादात्म्यस्य घटे त्वयाप्यङ्गीकारात्। तस्मादस्त्यनयोरभावयोर्भेदः। स च प्रतियोग्यभेदेऽपि प्रतियोगितावच्छेदकधर्मभेदप्रयुक्त एवेति युक्तमवलोकयामः।

ननु यदि प्रतियोग्यभेदेऽपि प्रतियोगितावच्छेदकधर्मभेदादभावभेदः स्यात्तदा नेह घटः पृथिवीत्वावच्छिन्नो घटत्वावच्छिन्नप्रतियोगिकश्चान्यो घटस्यैवाभावः स्यादिति चेद् अस्त्येवात्राभावद्वयम्। किन्तूभयत्रापि संसर्गस्य प्रतियोगितावच्छेदकतया संसर्गाभावव्यपदेशः।

नन्वत्र घटत्वपृथिवीत्वाभ्यामेव प्रतियोगिताऽवच्छिद्यते न तु संसर्गेणापि। एवं घटः पटो नेत्यत्र घटत्वमेव प्रतियोगितावच्छेदकं न तु तत्तादात्म्यम्।

तथा च केयं वञ्चना यत्प्रतियोगित्वेन प्रतियोगितावच्छेदकत्वेनाप्रतीयमानावेव तादात्म्यसंसर्गौ तादात्म्याभावयोः सीमाकलहे नियामकौ इति चेन्न मैवं नेह घट इत्यस्य प्रत्ययस्य घटसंसर्गो भूतले नास्तीति नेह घटो वर्तते इत्यादिना विवरणात्। एवञ्च विवरणविव्रियमाणयोरविशेषात्कथं न संसर्गाभावतादात्म्याभावयोः प्रतीतिः। असति चास्मिन् भेदे अग्निहोत्रं जुहुयात्स्वर्गकाम इति श्रुतिपक्षधारिण त्वया हेतुफलभावोऽपि कथमुपपादयितव्यः। इतरथा समासादितदण्डो घटाय न प्रवर्तेत, दण्डात्मनो घटस्यापि तेनासादितत्वात्। दण्डस्य सत्त्वेऽपि घटासत्त्वञ्चेत्तदा तदानीन्तनविरुद्धधर्माध्यासादेव भेदसिद्धिः। सिद्धस्य कारणत्वादसिद्धस्य कार्यत्वात्। असति च भेदे घटमानयेत्युक्ते पटमप्यानयेत्, घटार्थं प्रवृत्तस्तन्तूनप्युपाददीत तन्तुमत्त्वान्मृदमपि नोपाददीत। वाजपेयस्वर्गार्थं कलञ्जमपि अद्यात्, वाजपेयकलञ्जयोरभेदाद् वाजपेयजन्यस्वर्गकलञ्जभक्षणजन्यनिरययोरप्यभेदात्। गां दद्यादितिविधेः रासभमपि दद्यात्। गोगदर्भयोरभेदात्। सुरां न पिबेदितिविधेः दुग्धमपि न पिबेत्, इत्यादिश्रौतस्मृतिलौकिकबहुवित्तव्ययायाससाध्यसकलव्यवहारोच्छेदविप्लव आपतेत्। आगमे यदि श्रद्धा

कर्मपरे तदागमप्रतिपाद्यस्वर्गापूर्वादिपारमार्थिकत्वे कथं विद्वेषः। कथं वा उपनिषदुपदेशप्रतिपाद्यब्रह्माद्वैतेऽनुरागसन्दोहः कर्मपरश्रुतिभिर्भेदो न प्रतिपाद्यते येनाभेदप्रतिपादकश्रुतीनां पारिपान्थ्यं भवेदिति चेत् स्वर्गापूर्वादयश्चेत्प्रतिपाद्यत्वेन पारमार्थिकास्तावतैवाद्वैतपारिपान्थ्यम्।

अथ स्वर्गप्रभृतयः पारमार्थिका एव तदा ब्रह्माद्वैतपारमार्थिकत्वे कस्तव प्रतिभूः। अथ स्वर्गादयः श्रुतिप्रतिपाद्यत्वात्पारमार्थिका भेदस्त्वमीषां श्रुत्यप्रतिपाद्यत्वादपारमार्थिक इति चेत्स्वर्गप्रभृतयः पारमार्थिकाः श्रुतिप्रतिपाद्यत्वात्। हेतुहेतुमद्भावोऽप्यमीषां पारमार्थिक इत्येतावदेवास्माकमपेक्षितमापाततः। क्रमेण तु चेद्धेतुहेतुमद्भावोऽपारमार्थिकत्वरक्षायै भेदोऽप्यपेक्षिष्यते तदा क्रन्दन्तमपि अनादृत्य भवन्तं भेदः सेत्स्यति।

परमार्थतस्तु भेदस्यैव प्रतिपाद्यत्वं न तु भवदभिमताभेदस्यापीति पूर्वं दर्शितत्वात्। ननु क इत्थमाह सदभेदो नास्तीति परन्तु सकललौकिकव्यवहारकुशलिनां व्यावहारिकभेदोऽस्त्येव न हि मिथ्यासत्ययोर्भेदोऽपि नास्माभिरङ्गीक्रियते इति उच्यते।

किमिदं व्यावहारिकत्वं यस्य ब्रह्मणि विरहो भेदे च सत्त्वम्। ज्ञानरूपव्यवहारविषयकत्वमिति चेन्न अभिप्रेतत्वात्, ब्रह्मणि अस्य विद्यमानत्वाच्च। ब्रह्मणि विज्ञानविषयत्वं नास्तीति वाक्ये यदि ज्ञानं जननीयं तदा ज्ञानविषयतापवर्जनीया। अथ व्यवहारोऽभिलापस्तद्विषयत्वं तदिति चेन्न ज्ञानविषयत्वपक्षोक्तदोषप्रसङ्गात्। नयनानयनादिरूपव्यवहारविषयत्वमेव तत्त्वमिति चेन्न अन्योऽन्याभावरूपे भेदे तदभावात्।

ननु ज्ञानेच्छाप्रयत्नादिविषयत्वं यद्यपि व्यावहारिकत्वं प्रकृते नोपपाद्यते तथापि वाच्यत्वमेव व्यावहारिकत्वं पारिभाषिकमिति केचन। बाधो विपरीतप्रमा तद्विषयत्वमेव बाध्यत्वमिति यदा तदा भवतैव प्रमाविषयत्वेन प्रामाणिकत्वमुपपादितम्।

अथ भ्रमविषयत्वं बाध्यत्वं तदा भेदः पारमार्थिक इति बोधे भवता भ्रमत्वेन स्वीक्रियमाणे पारमार्थिकत्वांशेऽबाधनाद् भेदस्याबाध्यत्वम्। धर्मिणि सर्वमभ्रान्तं प्रकारे तु विपर्यय इत्यभ्युपगमात्। तथा च भदत्वेन भेदो न बाध्यते इति सिद्धम्।

अन्यथा ब्रह्मापारमार्थिकमित्यपारमार्थिकत्वे बाधे ब्रह्मणोऽपि बाध्यत्वं स्यात्। अथ घटो भिन्न इति ज्ञानं भ्रान्तं तत्र च प्रकारो भेद एव अतस्तस्य बाध्यत्वमिति चेन्न घटपटौ भिन्नाविति ज्ञाने प्रात्यक्षिकश्रौतोपपत्तिकबाधानां निरासाद् निरसिष्यमाणत्वाच्च क्वचन काले क्वचन विषये भेदस्य बाध्यत्वेऽपि सर्वत्राबाध्यत्वात्। न हि

सार्वत्रिको बाधस्त्वया शक्योपपत्तिकः। अबाध्यत्वेनाशक्यव्यवस्थापनत्वमेव व्यावहारिकत्वमिति चेन्न तस्य ब्रह्मण्यपि तुल्यत्वात्। तस्य श्रुतिप्रतिपाद्यत्वादेव बाध्यत्वव्यवस्थितेरिति चेन्न भेदस्यापि श्रुतिप्रतिपाद्यत्वोपपादनात्। भेदग्रहे केषामपि कदापि कुत्रापि बाधो नास्तीति कथं भवता ज्ञायते येन भेदस्य बाध्यत्वं मन्यस इति चेत्त्वद्व्यवस्थाप्यमानबाध्यत्वव्यवस्थाविरहादेवाबाध्यत्वोपपत्तिः। कथायामस्यां भवानेव व्यावहारिकोपपादकतायामारूढोऽस्ति यत्र तु बाधविरहोऽस्माभिर्व्यवस्थापनीयस्तत्र येन प्रकारेण ब्रह्मसाक्षात्कारस्य बाधविरहस्त्वयोपपाद्यः स एव चेदस्माभिरुपपादयितुं शक्य एतावतैवास्माकं जयित्वे व्यवहरिष्यसि।

ननु ब्रह्माभिन्नत्वमेव व्यावहारिकत्वमिति चेन्न एतादृशव्यावहारिकत्वस्यास्मदपेक्षितत्वात्। तदभिन्नत्वेन ब्रह्मणोऽपि व्यावहारिकत्वस्य सुवचत्वाद् ब्रह्माभिन्नत्वस्य भवताभ्युपगम्यमानस्य पारमार्थिकत्वेन सिद्धत्वाच्च। असत्यांशे व्यावहारिकमिति चेद् असत्यत्वमिति बाध्यत्वं चेत्तदा दत्तोत्तरम्। अप्रामाणिकत्वञ्च प्रमाणगोचरत्वोपपादनेनैव निरस्तम्। असत्त्वं व्यावहारिकत्वमिति चेत् तद् यदि सत्तायोगित्वं तदा न स्वीकुर्महे अन्योऽन्याभावस्य सत्तायोगित्वानङ्गीकारात्। स्वभावत्वमेव सिद्धमिति चेन्न इष्टत्वात्। भावप्रतियोगित्वमिति चेन्न इष्टत्वादेव। मिथ्यात्वमेव व्यावहारिकत्वमिति चेद् मिथ्यात्वं प्रामाणिकत्वं यदि तदा उक्तम्। मिथ्यापदाभिधेयत्वञ्चेत् तद् असंकेतेनैव संकेतेन वा ? न प्रथमस्तस्य ब्रह्मण्यपि सत्त्वात्। न चान्तिमस्तत्संकेतग्राहककोषव्याकरणादौ भेदपदपर्यायत्वेन मिथ्यालीकादिपदानामननुशासनात्। अमोक्षात्मकत्वमेव व्यावहारिकत्वमिति चेन्न इष्टत्वात्, आत्यन्तिकदुःखाभावस्य मोक्षतया अन्योभावभिन्नत्वात्। मोक्षोपायज्ञानाविषयत्वं व्यावहारिकत्वमिति चेन्न श्रवणमननिदिध्यासनादीनां मोक्षोपायज्ञानानां शरीरात्मभेदविषयत्वात्। भेदज्ञानार्थमेव हि श्रवणादीनामुपयोगिता। सप्रतियोगित्वमेव व्यावहारिकत्वमिति चेन्न इष्टत्वात्। अद्वैतविरोधित्वमेव व्यावहारिकत्वमिति चेन्न इष्टत्वाद् वैपरीत्यस्यापि सुवचत्वात्। प्रपञ्चान्तर्गतत्वं चेद् व्यावहारिकत्वं तदा प्रपञ्चबहिर्गतत्वेन ब्रह्मण एव किं न व्यावहारिकत्वं भवेत् प्रपञ्चत्वस्याप्येवं विकल्प्य कदर्थनीयत्वाच्च। अविद्यादशावेद्यत्वञ्चेद् व्यावहारिकत्वं तदा किञ्चिदनिष्टं वैपरीत्यञ्च सुतराम्। अविद्याविषयत्वं व्यावहारिकत्वमिति चेन्न किञ्चित् तथात्वेऽप्यपारमार्थिकत्वाक्षतेः। जडत्वं व्यावहारिकत्वमिति चेत् तद् यदि ज्ञानभिन्नत्वं तदनुजानीमः। अथात्मभिन्नत्वं तथापि नानिष्टम्। युक्तेनावेद्यत्वमेव व्यावहारिकत्वमिति चेन्न इष्टत्वात्।

अभेदस्य वास्तविकत्वे युक्तिदशायां कथं न वेद्यत्वमिति चेन्न वेदनाभावादेव। ब्रह्मणस्तदा कथं वेद्यत्वमिति चेद् इतरस्माद् व्यावहारिको भेद इति तव स्वीकारो न किञ्चनानिष्टमाकलयति। मात्रपारमार्थिकत्वं व्यावहारिकत्वमिति ब्रह्मप्रपञ्चयोर्धर्मद्वयी प्राङ्भिर्वृद्धमायिभिः शरमुष्टिन्यायेन बोधिता। अर्वाचीना अपि मायिनो व्यामुग्धा एव वर्तन्ते। परमार्थतः प्रमाणनिष्पन्नतया ब्रह्मप्रपञ्चयोर्विशेषो नास्त्येव।

व्यावहारिकत्वादेव प्रपञ्चस्य पारमार्थिकत्वम्। तथा हि भेदः पारमार्थिको व्यावहारिकत्वात्। यन्न पारमार्थिकं तन्न व्यावहारिकं यथा ब्रह्माद्वैतं न चायं न व्यावहारिकस्तस्मात् पारमार्थिक इति व्यतिरेक्यनुमानम्। यद्वा पारमार्थिकत्वापारमार्थिकत्वाभ्यां विवादास्पदं भेदः पारमार्थिको व्यावहारिकत्वात्। यद् यद् व्यावहारिकं तत्तत्पारमार्थिकं यथा ब्रह्म, पारमार्थिकत्वव्याप्यव्यावहारिकत्ववाँश्चायं तस्मात्पारमार्थिकः साधनविकलो दृष्टान्त इति चेन्न ब्रह्मणोऽपि व्यावहारिकत्वस्य प्रमाणनिष्पन्नत्वात्। व्यावहारिकत्वं हि व्यवहारगोचरत्वं तच्च ब्रह्मण्यस्ति ब्रह्मेत्यभिलापरूपव्यवहारसत्त्वाद् ज्ञानरूपव्यवहारसत्त्वाच्च। भवन्मते घटाद्यात्मनो ब्रह्मणो नयनादिरूपव्यवहारसत्त्वाच्च। ब्रह्म न व्यावहारिकमित्यन्ततो निषेधरूपव्यवहारस्यापि भवताभ्युपगमात्, व्यावहारिकत्वानिषेधे व्यावहारिकत्वानयने सिद्धमेव। यथा यथा व्यावहारिकत्वनिषेधो ब्रह्मणि तथा तथा व्यावहारिकत्वमनिरोधव्यमेव। अव्यावहारिकं कथं व्यावहारिकं भवेदिति चेद् आत्मानमुपालभस्व येन स्फुटतरं व्यवहारं ब्रह्मणि अवलोकयन्नपि अव्यावहारिकत्वं स्वीकुरुषे।

एकमेवाद्वितीयं ब्रह्मेति श्रुतिरपि अद्वितीयत्वादिना रूपेण ब्रह्म व्यवहरणीयमित्येतत्परम्। तथा च दृष्टान्ते साध्यवैकल्यं प्रथमानुमाने गतम्। तर्हि व्यतिरेकव्याप्त्यभावादिति चेन्न भवन्मतेन तत्र व्यतिरेकसत्त्वात्। यद्वा भेदः पारमार्थिको वेद्यत्वात्, यद् यद् वेद्यं तत्तत्पारमार्थिकं यथा ब्रह्म तथा चायं तस्मात्तथा। शुक्तिनिष्ठत्वेन ज्ञाने रजतत्वे व्यभिचार इति चेन्न रजतत्वस्य प्रमाविषयत्वात्। रजतत्ववैशिष्ट्यं शुक्तौ भासते तच्च न पारमार्थिकमिति चेन्न रजतत्ववैशिष्ट्यस्य रजते पारमार्थिकत्वात् तर्हि रजतज्ञानं शुक्तौ कथं भ्रम इति चेन्न व्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगितया विशेष्यावृत्तिप्रकारतया विशेष्यनिष्ठात्यन्ताभावप्रतियोगिधर्मप्रकारविषयताप्रतियोगिज्ञानतया न सद्विषयता वणिग्वीथ्याद्यर्थभूतरजतत्वस्य स्मरणे सति शुक्ताविन्द्रियसन्निकृष्टायां शुक्तिरजतयोर्भेदग्रहाभावे सामग्रीवशात्तादृशारोपसम्भवात् तथा च नैयायिकानां ज्ञेयत्वप्रमेयत्वयोरविनाभाव एवेति न व्यभिचारः।

ननु रजततादात्म्यं शुक्तौ नास्ति तथा च असदेव वैशिष्ट्यं भासते इत्यङ्गीकरिष्यस इति चेत् तत् किं रजततादात्म्यस्य क्वचिदभावोऽस्तीत्येव तस्यापारमार्थिकत्वम्। एवञ्च तादृशमपारमार्थिकत्वं घटपटादीनां समेषामपि स्वीकुर्म इति दुर्मतेस्तव अलम् पीडया। कः खलु घटादीनां नाभावाप्रतियोगित्वं स्वीकुरुते।

एतेन स्वप्नदृष्टाद्भुतानां तरङ्गप्रसङ्गानुभूतचन्द्रभेदादीनामपारमार्थिकत्वमभ्युपगच्छता तद्दृष्टान्तावष्टम्भेन जागरावस्थानुभूयमानानां घटपटभेदानामपारमार्थिकत्वानुमानं न किञ्चिदनिष्ठमापादयतीत्यवधातव्यम्। स्वप्नदृष्टमसदपि भासत इति पक्षोऽस्माभिर्नाङ्गीक्रियत एव येन दृष्टान्तावकाशस्तव भवेदिति।

घटः पटनिष्ठान्योन्याभावात्यन्ताभावरहितः पटत्वप्रतियोगिकात्यन्ताभाववत्त्वात्, यन्न घटत्वप्रतियोगिकान्योन्याभावात्यन्ताभावरहितो न तत् पटत्वप्रतियोगिकात्यन्ताभाववद् यथा पटः, न च नायं पटत्वप्रतियोगिकात्यन्ताभाववान्, तस्मात् पटत्वप्रतियोगिकात्यन्ताभाववत्त्वादयं न पटनिष्ठान्योन्याभावात्यन्ताभावरहितः। घटः पटनिष्ठान्योन्याभावप्रतियोगी, पटत्वप्रतियोगिकात्यन्ताभाववत्त्वात्, यथा पटः। न चायं पटत्वप्रतियोगिकात्यन्ताभाववान्, तस्मात्पटत्वप्रतियोगिके ये अन्योऽन्यधर्मात्यन्ताभाववती ते अन्योऽन्यभदेवती यथा विद्याविद्ये, अन्योऽन्यभेदवत्त्वव्याप्यान्योऽन्यधर्मात्यन्ताभाववन्तौ चेमौ तस्मादन्यौ भेदवन्तौ।

घटत्वं पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणम् पटत्वसमानाधिकरणधर्मत्वात्, यन्न पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणं नासौ पटत्वासमानाधिकरणधर्मो यथा पटत्वम्, न चैतन्न पटत्वासमानाधिकरणधर्मस्तस्मात् पटतादात्म्यावच्छिन्नप्रतियोगिताकाभावसमानाधिकरणमिति व्यतिरेकी।

घटवद् भूतलं घटप्रतियोगिकाभावाधिकरणं घटत्वप्रतियोगकाभावाधिकरणत्वात्, यद् घटत्वप्रतियोगिकाभावाधिकरणं तद्घटत्वप्रतियोगिकाभावाधिकरणम्, यथा घटः, घटत्वप्रतियोगिकाभावाधिकरणं चैतत् तस्माद् घटप्रतियोगिकाभावाधिकरणम्। अतः पक्षविशेषणसामर्थ्यात् संसर्गाभावबाधेऽन्योन्याभावसिद्धिः। एवं घटवत्कपालं पक्षीकृत्य एतदेव साध्यम्। रूपं स्वसमानकालीनस्वप्रतियोगिकाभावसमानाधिकरणं गुणत्वात् संयोगवत्। रसादीनामपि पक्षसमत्वान्न व्यभिचारः।

एवं संयोगमेव दृष्टान्तीकृत्य वृत्तिमत्पदार्थपक्षकमनुमानं प्रयोक्तव्यम्। व्यभिचारस्तु पक्षसमोक्त्या निरसनीयः।

प्रपञ्चः सत्यो दृश्यत्वात्, यन्न सत्यं तन्न दृश्यं यथा ब्रह्माद्वैतं न चायं दृश्यस्तस्मात्सत्यः। शुक्तौ रजततादात्म्यं दृश्यमपि न सत्यमिति व्यभिचार इति चेन्न तस्यापि सत्यत्वात्। साधितञ्च तत्सत्यत्वम्।

प्रपञ्चः पारमार्थिकोऽभिधेयत्वात्, यद् यद् अभिधेयं तत्तत्पारमार्थिकं यथा ब्रह्म, पारमार्थिकत्वव्याप्याभिधेयत्ववांश्चायम्, तस्मात्पारमार्थिकः। स्वप्नानुभूतप्रपञ्चोऽपि सत्य एवेत्यवधेयम्।

भेदादिज्ञानं सद्विषयकं ज्ञानत्वाद् यद्यज्ज्ञानं तत्तत्सद्विषयकं यथा ब्रह्मज्ञानम् सविषयकत्वव्याप्यज्ञानत्ववच्च विवादविषयभेदादिज्ञानं तस्मात्सद्विषयकम्।

ननु स्वशिरश्छेदादित्यादिगिलनाकाशप्लवनोर्वश्याद्यप्सरस्सम्भोगसमुद्रतरणमहेन्द्रादिविजयसुमेरुशृङ्गसमारोहणैरावतारोहणादिकमपि निद्राविद्रावितेन्द्रियगणः

पुरुषः पश्यति तदपि भवता परमार्थिकमेष्टव्यम् । एवञ्चेन्नूनं तर्ककर्कशशेमुषीकोऽसि येन तदानीन्तनजागरानन्तरभाविबाधव्यतिरेके सत्यपि नान्यथा मन्यस इति चेत् कः सन्देहः । परं तात्कालिकबाधेन स्वशिरश्छेदादीनां तज्जन्मनि परमभावमवधारयामः । न तु जन्मान्तरेऽपि भवदुदाहृतं सर्वं नासीदिति स्वीकुर्मः । तत्कालेऽपि वा पुरुषान्तरस्य नास्तीति निश्चिनुमः । अत एव तत्तदाकर्ण्य निद्राणस्तथाऽनुभवति । अतो ज्ञायमान-पारमार्थिकयोः समनियमवादिनो नैयायिकाः स्वप्नविषयान् व्यभिचारस्थलत्वेनोदा-ह्रियमाणानपि भवता गजनिमीलिकयाऽवधीरयन्तो मनागपि बिभ्यतीति ।

ननु यथा ब्रह्म तथा प्रपञ्चोपि रासभादिः । तथा चैवं मन्यमानस्य भवतो नास्तिकेभ्यो न विशेषो निश्चनुम इति चेद् यो रासभादिभिन्नं ब्रह्म मन्यते यश्च सत्त्वाभिधेयत्वप्रमेयत्वादिना रासभतुल्यं ब्रह्माङ्गीक्रियते तयोः कतरो नास्तिक इति भवानेव परिभावयतु । प्रपञ्चाद्भिन्नत्वेन ब्रह्म जानातु इत्येतदर्थमेव ममैष प्रयासः । तर्हि पप्रञ्चाद् ब्रह्म कथमभ्यर्हितं येनोपनिषदां ब्रह्म ब्रह्मेति घोषणेति चेद् ब्रह्मसाक्षात्कारः साक्षादेव दुःखोच्छित्तिरूपपरमपुरुषार्थोपयोगी न तु प्रपञ्चसाक्षात्कार इति चिन्तयितुम् । न तु ब्रह्मैव साक्षात्प्रपञ्च इति बोधयितुमित्यलमभिनिवेशेन ।

ननु यदि श्रुतेस्तथैव तात्पर्यं तदा व्यासः कथमेवं नाज्ञासीद् यथाऽसूत्रयदिति चेद् ब्रह्मस्तुतित्वेन । न हि ब्रह्मप्रशंसायामपि मम विद्वेषः । प्रपञ्चमिथ्यात्वसाधनं परं न सहामहे ।

पूर्वानुमानादि अद्वैतप्रतिपादकागमबाधात् कथं द्वैतप्रमां जनयिष्यतीति चेद् आगमबाधो हि आगमवाक्यजन्या साध्यविपरीतप्रतीतिः । सा च सत्या न वा ? प्रथमे कथं बाधस्तयैव सत्यया द्वैतप्रमासम्भवात् । न हि साध्यविपरीतप्रतीतिमात्रं बाधः किन्तर्हि साध्यप्रमा, सा चेदस्ति द्वितीया कथं साऽद्वैताभावप्रमारूपो बाधः । आगमजनिताऽप्यद्वैतबुद्धिर्न सत्या तर्हि स्वतः पारमार्थिकत्वस्यैव साध्यत्वात् । अथ विरोधोऽस्तु वेद्यत्वादीनां हेतूनां पारमार्थिकत्वाभावव्याप्यत्वादिति चेन्मैवं, वेद्यत्वस्य ब्रह्मणि पारमार्थिकेऽपि गतत्वात् । तत्र वेद्यत्वं न वर्तते परन्तु स्वयमेव तद् वेद-नात्मकमिति चेद् ब्रह्मणि वेद्यत्वं नास्तीत्यत्र ब्रह्मपदेन ब्रह्मोपस्थाप्यते न वा ? आद्ये त्वेकत्वेनैव वेद्यत्वम् । चरमे ब्रह्मणि वेद्यत्वनिषेधो भवता कर्तुं न शक्यो वेद्यत्व-प्रतिषेधकेन वाक्येन ब्रह्मणोऽनुपस्थानात् । ब्रह्मवेदनत्वान्न वेद्यमित्यनुमानपक्षेऽपि पक्षोपस्थितौ वेद्यत्वमपवर्जनीयम् । पक्षानुपस्थितौ वेद्यत्वमवर्जनीयं प्रतिषेधाभावात् ।

नन्वस्तु सत्प्रपिक्षः । तथा हि प्रपञ्चो मिथ्या वेद्यत्वात् शुक्तिरजततादात्म्यवत् । भेदो न पारमार्थिको व्यावहारिकत्वात् तरङ्गप्रसङ्गानुभूतचन्द्रभेदवत् । पटादयो न पारमार्थिका जडत्वात्, शशशृङ्गवदिति चेन्मैवं प्रथमानुमानस्य ब्रह्मणि व्यभिचारित्वात्, दृष्टान्तस्य साध्यविकलत्वात् । साध्यञ्च यदि अपारमार्थिकत्वं तदा साध्याप्रसिद्धिः ।

अथ व्यावहारिकत्वमेव तदा सिद्धसाधनं कदाचित् कस्यांचिद् भ्रमविषयत्व-स्वीकारात्। न हि भ्रमविषयत्वं प्रमाविषयत्वविरोधि एकत्रैव रजतत्वे उभयावलोकनात्। अथ प्रमाभूतज्ञानाविषयत्वमेव मिथ्यात्वं तर्हि साध्याप्रसिद्धिः। अथ सदसद्भ्यामनिर्वचनीयत्वमेव मिथ्यात्वं तर्हि नायं पदार्थदोषोऽपि तु भवतो निर्वचनाशक्तिरिति। यदि निर्वचनं समीहसे तदास्मदाराधनाय यतताम्। भवतापि निर्वक्तुं शक्यत इति चेत् तवोन्मत्तस्य पुरस्तादेवमेव। अथ सत्त्वासत्त्वपक्षे दोषदर्शनादनिर्वचनीयत्वमेव प्रपञ्चस्य निश्चितुम इति चेद् अनिर्वचनीयत्वेऽपि दोषं पश्यति भवान्न वा। प्रथमे बाधं निश्चितवान्। न चेत् तदाऽनिर्वचनीयत्वेनैव वास्तवेन धर्मेण व्यवस्थितः प्रपञ्चो ब्रह्मभिन्नत्वेन व्यवस्थाप्यत इत्यद्वैतपक्षाय भवतैव दत्तो जलाञ्जलिः। अथानिर्वचनीयत्वमप्यपारमार्थिकमेव तदा मदभिप्रेतं निर्वचनीयत्वमेव भवता प्रपञ्चस्य सम्पादितमिति न विवादः। अथ निर्वचनीयत्वमनिर्वचनीयत्वमित्युभयाभाववत्त्वमेव प्रपञ्च इति सिद्धो भेदः।

अथ प्रातिकूल्यादेवमपि न स्वीकुर्वे निर्वचनीयत्वानिर्वचनीयत्वयोः परस्पराभावव्यापकत्वेन परस्परविरहात्मत्वेन वाऽन्यतरस्यावश्यकत्वादिति चेत्तर्हि तेनैव प्रकारेण व्यवस्थितः प्रपञ्च इति सर्व एव पक्षा अभिप्रेता इति।

ननु नाप्यसत्त्वं न सत्त्वं न सदसत्त्वं नानिर्वचनीयत्वं नोभयाभाववत्त्वं नान्यतरवत्त्वम्। अत एव प्रपञ्चोक्तिरिति चेत्तर्हि दुष्टत्वमेव पारमार्थिकम्। एतावतैव अदुष्टा ब्रह्मणो भेदसिद्धिः। दुष्टत्वमिति न पारमार्थिकमिति चेद् अदुष्टत्वं तर्हि पारमार्थिकत्वमित्यायातम्। अत एव प्रपञ्चस्य ब्रह्माभेदं स्वीकुर्महे। अदुष्टत्वेनैकत्वादिति चेन्न केवलमदुष्टत्वेनैक्यं किन्तर्हि? सत्त्वेनाभिधेयत्वेन प्रमेयत्वेन ज्ञेयत्वेन धर्मत्वेन च रूपेण प्रपञ्चब्रह्मणोर्भेदो नास्तीति ममाप्यभ्युपगम इति मुण्डो भवतु। तर्हि भेदः कथमिति चेद् अवान्तरतद्धर्मवत्तया गृह्यताम्।

अथ मिथ्यात्वं धर्ममेव किञ्चित् प्रमेयत्वादितः पारमार्थिकं साधयतु सत्प्रतिपक्षेण तर्हि मत्साध्यभेदाविरुद्धत्वेन सत्प्रतिपक्षस्तावदयं न भवतीत्यलं कोलाहलेन।

ननु विपक्षबाधकतर्कशून्यत्वात् सन्तु व्याप्यत्वासिद्धाः सर्वे हेतव इति चेन्न लौकिकवैदिकव्यवहारविप्लवरूपविपक्षबाधकः तर्कस्य प्रागेव दर्शितत्वात्। भवतु वा व्यवहारविप्लवः किं नश्छिन्नमिति चेद् एवमिष्टानिष्टकोटौ निवेशयतः परपराजयादप्यबिभ्यतो निर्लज्जस्य स्वक्रियास्ववचनादिव्याघातादयोऽपि दोषाः शेमुषीशोभाय नालङ्ग्रामीणा इति सचेतसामुपेक्षैवेत्यलमनेन।

नन्वस्तूपाधिरेव कश्चिदिहानुपलभ्यमानोऽपि शङ्क्यमान एतावताऽपि हेतवः सन्दिग्धव्यापकाः साधनाय न पर्याप्ताः । तथा चोक्तम्—

**यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते,**
**विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥**

इति चेन्मैवम् । तवोपाध्युद्भावनं यद्यसाधकत्वसाधनाय तदा तत्रापि शङ्क्यमानो भ्रष्टतया स्वकार्य्याक्षमत्वेनोपाधिरुपन्यस्यमानस्तथैव साध्यं साधयिष्यति । यद्येदमसाधकं शङ्कितोपाधिग्रस्तत्वादित्यहेतुः शङ्क्यमानोपाधिरप्यसाधकत्वं साधयतीति मतं तर्हि भेदस्थापनानुमानमपि तथैव साध्यं साधयष्यतीति न हि मां प्रत्येव दोषा दोषाः ।

ननु मित्रभावेन पृच्छामि-शङ्कितोपाधिः कथ नानुमामाकुलयति । यदि वाद्युपन्यस्तसाध्यव्यापकत्वेनानिर्णीतः साधनव्यापकत्वेन सन्दिग्धः साधनव्यापकत्वेन वा निर्णीतः साधनव्यापकत्वेन सन्दिग्धः कश्चिद्धर्मः प्रतीतिपथमवतरति तदा सन्दिग्धोपाधिर्दोषो भवत्येव । तन्निराकरणाय चानुकूलस्तर्क एव सामर्थ्यं भजमानो भ्राजते । यत्र तु सहचारदर्शनव्यभिचारादर्शनानुकूलतर्कैर्व्याप्तिः परिच्छिन्ना तत्रापि शङ्क्यमानोपाधेर्दोषत्वे धूमादिना वह्न्याद्यनुमितिरपि तव न स्यात्तथा चेष्टसाधनतानुमितिरपि न स्यादिति निवृत्तिप्रत्ययानुदये निरीहं जगज्जायेतेति कण्टकनिस्तरणम् ।

किञ्चाद्वैते श्रुतिः प्रमाणं प्रमाणान्तरमपि वा वर्तते । यदि श्रुतिः प्रमाणं तदा तस्यापारमार्थिकत्वमभ्युपेयम् । न ह्यपारमार्थिकात्पारमार्थिकं ज्ञानमुपेतुमर्हति । अपारमार्थिकात् स्वप्नकामिनीसंसर्गाच्चरमधातुविसर्गः पारमार्थिकोऽस्तीति चेत् स्वप्नानुभूतकामिनीतत्संसर्गयोस्तदा बाधेऽपि पारमार्थिकस्योपपादितत्वात् । असन्निकृष्टकामिनीतत्संसर्गयोरभावे तज्ज्ञानाददृष्टाददृष्टसंस्कारादिसहकृतादुत्पद्यमानश्चरमधातुविसर्गः पारमार्थिकहेतुक एवेति । कामिन्यसत्त्वात्तद्विषयकं ज्ञानमपि कथं सदिति चेत् तद्विषयकज्ञानसत्त्वात् कामिन्या एव कथमसत्त्वमिति तुल्यम् । कामिन्यास्तत्र स्फुट एव बाध इति चेद् बाधाच्चेदसत्त्वं तदा स्वप्नकामिनी नोपलब्धेत्यपि तव विपरीतज्ञानमुत्पद्यते येनानुभवस्यापि तथैवासत्त्वमवधारितवान् । यद्यपातत: कामिनीज्ञानबाधस्तदा विशेषणस्य कामिन्या बाधे तद्विशिष्टानुभवोऽपि बाधित एवेति चेद् एवं सति भावि सन्ततिज्ञानमपि तत्काले पुत्रासत्त्वेनासत् स्यात् तत्र भावित्वेनैवोपलभ्यते । तच्च तथैव कथं स्यात् । असन्निकृष्टां कामिनीं सन्निकृष्टत्वेन गृह्णन्ननुभवः कथं सन्नित्यङ्गीकर्तुं शक्येतेति चेद् एतावतैवापराधेन भ्रान्त इत्युच्यते यत्किलातद्देशामतत्कालामपि कामिनीं परमार्थसतीं तद्देशस्थत्वेन तत्कालत्वेन गृह्णाति न त्वलीकविषयत्वेन तथा चासत्या श्रुत्या परमार्थसद् ज्ञानं जननीयमित्यप्रम।

श्रुतिरद्वैते। यच्च श्रुत्या जननीयं तत्सदसद्वा ? प्रथमे द्वैतमेव। चरमे चासत्त्वेन घटादिभेदज्ञानेन समं श्रुतिज्ञानस्याविशेषाद् द्वैतमपारमार्थिकम् अद्वैतञ्च पारमार्थिकमित्यनुरागप्रयुक्त एव भेदः।

प्रपञ्चस्यापारमार्थिकत्वं यद् भवता स्वीक्रियते तत्र पारमार्थिकत्वापारमार्थिकत्वयोर्धर्मयोर्भेदमभ्युपैषि न वा प्रथमे भेदः सिद्ध एव। चरमे पारमार्थिकत्वापारमार्थिकत्वयोरन्यतरब्रह्मप्रपञ्चयोरन्यतरस्मिन्विधीयमानं कथं नोभयोरुभयधर्मवत्त्वमापादयिष्यति एवञ्च प्रपञ्चपारमार्थिको ब्रह्मपारमार्थिक इत्यनिष्टमुभयत्रापाद्यते।

पारमार्थिकत्वापारमार्थिकत्वयोर्व्यावहारिको भेदो वर्तत इति चेद् अत एव पारमार्थिकाभेदप्रसङ्गनिबन्धनो दोषः। तदा प्रपञ्चस्यापारमार्थिकत्वं यत्तदेवापारमार्थिकत्वं तस्य ब्रह्मणो वा यत्पारमार्थिकत्वं तदेव प्रपञ्चस्यापारमार्थिकत्वमिति मुधा तत्साधनाय प्रयासो मायिनाम्।

भेदाभेदयोर्भेदोऽस्ति न वा ? प्रथमे सिद्धो भेदः। चरमे यद् भवतो दर्शने भेदविदारणं यच्चाभेदमण्डनं तदभेदसाधनं मदानुगुण्यं भवतैवोपस्कृतम्। द्वैतपारमार्थिकमित्ययमेव द्वैताद्वैतयोः पारमार्थिकत्वापारमार्थिकत्वे धर्मौ यदि परमार्थसन्तौ अभविष्यातां तदा सिद्ध एव भेदः। प्रतियोग्यनुवृत्तिधर्मयोर्भवतैव पारमार्थिकत्वप्रतिपादनात्।

अपि च भेदाभेदयोर्भेदोऽस्ति न वा प्रथमे सिद्धो भेदः। चरमे तयोर्निवर्त्यनिवर्त्तकभावानुपपत्तिः। विद्ययाविद्याया निवृत्तौ अपवर्ग इति भवतो मतं तच्चाऽभेदे नोपपपन्नम्। व्यावहारिकस्तु भेदो निरस्त एव।

अपि च जीवपरमात्मनो भेदो वर्तते न वा ? प्रथमे सिद्धो भेदः। चरमे चिदानन्दमयस्य परमात्मनो दुःखमयत्वात् सर्वज्ञत्वशरीरित्वविरोधः। उपाधिभेदादेवं स्यादिति चेद् उपाधिभेदस्य पारमार्थिकत्वस्य भवतानभ्युपगमात्। अभ्युपगमे वा किमपराद्धमुपधेयभेदेन। उपधेयभेदो हि पारमार्थिको न वर्तते व्यावहारिक इति चेत् किमुपाधिभेदः पारमार्थिकः सोऽपि व्यावहारिक एवेति चेत् तत्किं ब्रह्मणो जीवस्य च परमार्थतो भेदे क्षेत्रादिसम्बन्धस्तस्य पारमार्थिक एव क्षेत्रादिसम्बन्ध एव न वर्तते। पारमार्थिकः सन् किं ब्रह्मणि तदभेद आपाद्यते चेत् तर्हि मुक्त्यर्थं ब्रह्मचर्य्यादिखेदमनुभवतो भवतः किं निवारणाय यत्नः। अपारमार्थिकक्षेत्रज्ञादिसम्बन्धनिरासायेति चेत् शशशृङ्गादिनिर्विशेषस्य क्षेत्रादिसम्बन्धस्यानुकूल्यप्रातिकूल्ययोरसमर्थस्य निरासे यत्नानर्थक्यात्। निवृत्तिरपि क्षेत्रादीनामपारमार्थिक्येव यदि तदा सुतरामायासवैफल्यम्। क्षेत्रज्ञादिसम्बन्धापारमार्थिकत्वज्ञानमेव तत्त्वज्ञानं तदुत्पादाय च योगा-

भ्यासनैरर्थक्यमिति चेद् एवं सति सत्यज्ञानविषयतया क्षेत्रादिसम्बन्धबाधाभावः। असत्येन ज्ञानेन बाधायोगात्।

अथ येषां मते श्रुतिबुद्धिः सत्या भवतु सत्यत्वात्स्यादेव बाधात्मिकेति चेन्मम मते सत्याद्वैतबुद्धिर्न वर्तत एव। तर्हि एकमेवाद्वितीयं ब्रह्मेतिवाक्यं ज्ञानं न जनयत्येव। क एवमाह-न जनयत्यपि तु ब्रह्मणि ब्रह्मप्रतियोगिको भेदो न वर्तत इत्येतादृशं ज्ञानं न जनयेदेतद् घटपटादिसाधने बाधकं न भवति भिन्नविषयत्वात्। सर्वाद्वैतं ज्ञानं ममोत्पन्नं यच्च भवतो ब्रह्मणि ब्रह्माभेदविषयकं ज्ञानमुत्पन्नमनयोः कतरत्प्रमेति सन्देहोऽस्ति इति चेत्तर्हि सुतरां बाधः। न हि सन्दिग्धप्रामाण्यमपि ज्ञानं बाधकं किन्तु सन्देह एव न विद्यते ऽदभ्युपगम्यमानतादृशश्रौतज्ञानस्य भवतापि प्रामाण्याङ्गीकारात्। भवतः प्रतीतिस्तु यदि प्रमा तदा नाद्वैतप्रमा, अथाप्रमा तथाऽपि नाद्वैतप्रमेति कूट-फक्किकयैव बाधनिरासः।

नन्वस्तु साध्याविशेषः। हेतुसाध्ययोर्भेदाभावात्तत्र यदि साध्यं सिद्ध साधनं वा सिद्धं तदा तदात्मनो हेतोरप्यसिद्धया स्वरूपासिद्धिरिति चेन्मैवं व्यावहारिकभेदेन भवताभ्युपगम्यमानेन हेतुना सकलाभासनिरासः। तेन भेदः सिध्यन् पारमार्थिको भूत्वा सेत्स्यतीत्यदोषात्।

ननु हेतूनामसत्त्वादेव स्वरूपासिद्धिस्तु न हि हेतूनतो वयं स्वीकुर्म इति चेत् तर्ह्यसिद्धिरप्यसती कथमनुमानमपहस्तयिष्यति। सती चासिद्धिस्त्वया मर्म्मपीडयाऽपि नाङ्गीकर्त्तव्या। असत्याप्यसिद्धया असाधकत्वं वास्तवं सेत्स्यतीति चेत् तर्ह्यसताऽपि हेतुना साध्यं वास्तवं सेत्स्यतीति न दोषः। मया च दुःखसिद्धिर्दोषत्वेन मन्यते सा नास्त्येव प्रकृते येन मद्दिशापि दोषोऽनवकाशमासादयेत्। एतेनाश्रयासिद्धिर्हेतुसाध्ययोर्भेदे सति व्याप्तिः स्यात्। सा च व्याप्त्यैव साधनीय इति दुर्घटमिति चेन्मैवम् आपाततस्तदभ्युपगम्यमानव्यावहारिकभेदमादायैव व्याप्तिसिद्धेः। वस्तुगत्या भेदज्ञानं व्याप्तिजनकं व्याप्तिज्ञानजनकं वा ? न प्रथमो व्याप्तेर्भेदज्ञानजन्यत्वानभ्युपगमात्। न चरमः। साधनवन्निष्ठात्यन्ताभावाप्रतियोगिसाध्यवत्कत्वज्ञानस्य भेदज्ञानानुपजीवकत्वात्। अभ्युपेत्य ब्रूमो यो यो धूमवान् स स वह्निमानित्याकारेण गृह्यमाणाया व्याप्तेरभेदज्ञानस्यैवोपयोगात्। अतएव साधनसमानाधिकरणान्योन्याभावप्रतियोगिसाध्यवत्कत्वमित्येवाभेदगर्भां व्याप्तिं वर्णयन्ति।

नन्वस्तु सिद्धसाधनं व्यावहारिकस्य भेदस्य सिद्धत्वादिति चेन्न भेदम्पक्षीकृत्य पारमार्थिकापारमार्थिकश्च ज्ञानं तद्विषयः पारमार्थिक इत्यायातम्। तथा चाद्वैतं नानुपपन्नमिति चेन्न श्रुत्या जनितज्ञानानां ब्रह्मणो नित्यानित्यविकल्पकवलात् परित्यागात्। तस्मान्मायिनां मुमुक्षाऽप्यसतीति प्रवृत्तिरप्यसती मोक्षज्ञानमप्यसद् विद्याऽप्यसतो

योगाभ्यासोऽप्यसन्नभेदोऽप्यसन् न वेति साधु तीर्थिकत्वाभिमानः। स्वर्गापूर्वादीनान्तु सत्त्वसङ्कथाऽपि न वर्तते। ब्रह्मभिन्नप्रमाणस्यासत्त्वेन ब्रह्माप्यप्रामाणिकमेवेति भवन्तु मायिनः स्वस्थाः।

अद्वैते किं प्रमाणमित्यत्राद्वैतं प्रतीतं न वा ? प्रथमे प्रश्नानुपपत्तिः। न ह्यप्रतीतदेवदत्तो देवदत्तः श्यामो गौरो वा पृच्छति। चरमे सा प्रतीतिः प्रमा न वा यत्तां प्रति करणन्तदेवाह द्वैते प्रमाणमित्यवेहि। चरमे अद्वैतप्रमां प्रति किं प्रमाणमिति प्रश्नार्थः। तथा च विरोधे पराघातादेव खण्डनमनुपपन्नम्। अद्वैते पृच्छतो नैयायिकस्याद्वैतं प्रतीतमेव न हि घटाद्वैतं घटे न वर्तते ब्रह्माद्वैतं ब्रह्मणि न वा कथन्तर्हि घटाद्वैतं पटवृत्ति न वा स्यादिति मदिष्टस्यैव भवता ज्ञापितत्वात्—सम्पादितत्वादिति भेदाभेदाभ्यां तृतीयः प्रकारो न सम्भवत्येव परस्परविरोधेन न प्रकारान्तरस्थितिरिति भवतैव व्यवस्थापनात्। तस्माद् भेदो न वर्तत इति चेन् मैवं न भिन्नत्वेन प्रतियोगिग्रहो नाप्यभिन्नत्वेन किं तर्हि घटादिना। एवमधिकरणस्यापि परस्परविरोधश्च न प्रतीतौ किन्तर्हि वस्तुस्वाभाव्ये वस्तुनो भिन्नत्वमभिन्नत्वं वेत्यतः प्रकारान्तरं न सम्भवतीति ब्रूमः। प्रतीतिस्तु न सामग्रीवशात् कदाचिद्भिन्नत्वेन कदाचित् पृथिवीत्वेन द्रव्यत्वेन सत्त्वेन वेति न किञ्चिदनुपपन्नम्। अथ यदि प्रतियोगिप्रतीतावपि भेदाभेदयोरेकतरप्रकारोऽन्तर्भवतीति तव ग्रहस्तदा अभेदेन प्रतीतः प्रतियोगिभेदे निरूपक इति गृह्यताम्। आरोप्य निषिध्यत इत्यस्माकं सिद्धान्तरहस्यात्। इदं रजतमित्यारोपानन्तरं नेदं रजतमिति भेदाग्रहात् तत्र स्वरसबाह्यारोपोऽन्यत्र त्वाहार्य्य इति विशेषः। घटः पटो न भवतीति हि प्रतीतिस्तथा च घटः पट इत्यारोप्यत्वे प्रमात्वे वेति निषेधप्रत्ययः। यद्येवं तदाभेदांशस्यारोपत्वं निषेधभागस्य प्रमात्वं कथं यावता वैपरीत्यस्यापि सम्भवादिति चेन्न प्रवृत्तिसंवादिना भेदग्रहस्य प्रामाण्यावधारणात्। घटभिन्नत्वेन गृहीतस्य घटस्य जलाहरणादीनां पटकार्यविलक्षणकार्य्याणामवधारणात्। रजताभिन्नत्वेन गृहीतायाश्च शुक्ते रजतकार्य्यकटकमुकुटादीनामदर्शनादभेदग्रहस्याप्रामाण्यावधारणात्। तस्माद् घटत्वादिना प्रकारेण गृहीते प्रतियोगिनि स्मृते वा पटत्वादिना प्रकारेण गृहीतेऽधिकरणभेदेन अभेदात्मना संयुक्तविशेषणतायामिन्द्रियप्रत्यासत्तौ सत्यां भेदप्रतीतिरिति युक्तमवलोकयामः।

किञ्च भेदप्रतीतौ न भवतोऽपि विप्रतिपत्तिर्येन भवतस्तत्सामग्रीवैकल्योद्भावनं घटते किन्तु सा प्रतीतिरप्रमेति भवतोऽभ्युपगमः। प्रमेत्यस्माकम्। एवञ्च भेदग्रहसामग्रीवैकल्योद्भावनस्य स्वोत्पत्तिसामग्रीवैकल्यविभावनस्यैव भवत उपहासजनकमिति।

ननु भेदग्रहपूर्वकं वा वस्तुग्रहणं वस्तुग्रहपूर्वकं वा भेदग्रहणं भेदवस्तुनोर्वा युगपदेव ग्रहणम् ? प्रथमे प्रतियोगिग्रहाधीनो भेदग्रह इति सिद्धान्तहानिः। भेदस्य निष्प्रतियोगिकस्य ग्रहणाशक्यतया विशेषणतया प्रत्यासत्त्या ग्राह्यो भेदस्तथा च

वस्तुनो ग्रहे किं विशेषणीभूतो भेदो भासते। द्वितीये तु प्रथमम् अभिन्नत्वेन सद्वस्तु-गृहीतं तत्पश्चात् कथमिव भिन्नतया गृह्येत। चरमे तु वस्तुग्रहणं भेदग्रहणं प्रति कारणमिति भवतोऽभ्युपगमः। स च भेदवस्तुनोर्युगपद्ग्रहे व्याहन्येत तत्कार्य्यकारणयो-र्यौगपद्यायोगाद् यौगपद्ये तु वा सव्येतरविषाणवत् कार्य्यकारणभावानुपपत्तिः। तस्माद् भेदग्रहो न वर्तत एवेति चेन्मैवं घटत्वपटत्वादिना प्रकारेण प्रतियोग्यनुयोगिनो-र्ग्रहणानन्तरं भेदप्रमेत्युक्तत्वात्। अकुटिलवचनैरेव भवतः सन्तोषस्तदा स्वतः कृत-विकल्पाश्रयाभ्युपगम एव भेदग्रहधारावाहिकस्थले भेदपूर्वकमेव वस्तुग्रहणम्। वस्तु-ग्रहपूर्वकञ्च पूर्वोत्तरज्ञानयोरुभयविषयत्वादुभयग्रहस्योभयग्रहानन्तर्य्यात्। अन्यत्रापि यत्र भेदवस्तुनोर्युगपदेव ग्रहणं निर्विकल्पकेनापि विशकलितयोर्युगपदेव न हि भेदग्रहः क्वचिदपि वस्तुविषयोऽवच्छेदकध्रौव्यात्। परन्तु भेदग्रहस्य पूर्ववस्तुग्रहः केवलोऽप्यस्ती-त्यन्यदेतत्। कारणत्वन्तु तस्यैव पूर्ववर्त्तित्वादित्यन्योन्याभावभेदग्रहे स्वरूपभेदे तु विकल्प एव नावतरति तस्य वस्तुस्वरूपत्वात्। वैधर्म्ये तु सविकल्पकेन ग्रहे युगपदेव ग्रहणं निर्विकल्पकेनापि विशकलितयोर्युगपदेव ग्रहणमुपाधिरूपवैधर्म्यग्रहे तु तत्सामग्रीं-समावेशवशाद् यथायोगं त्रयमपीत्यलं भूतविकल्पेभ्यूत्तरोत्तरवैलक्षण्येनेति व्यावहारिक-भेदग्रहे यादृशी तव सामग्री सैव पारमार्थिकभेदग्रहेऽप्यस्माकमित्येवोत्तरं सर्वत्र भेदग्रहसामग्रीवैकल्योद्भावनावसरे विधेयमुत्तरोत्तरयुक्तिप्रतिसन्धानरहितानां समक्षम्।

ननु वैधर्म्यभेदो न भवति। तथा हि घटपटयोर्घटत्वपटत्वरूपस्य वैधर्म्यस्या-पाततोऽङ्गीकारेऽपि तयोस्तादृशधर्मान्तराभावाद् भेदानुपपत्तौ अभेदपर्यवसाने तदालिङ्गितयोर्घटपटयोरप्यभेदपर्य्यवसानात्। घटत्वपटत्वयोरपि तादृशधर्मान्तर-स्वीकारेऽनवस्थापात इति चेन्न घटत्वेन पटत्वेन स्वत एव विलक्षणेन घटपटयोर्भेदसिद्धौ घटपटरूपाश्रयात्मकवैधर्म्येण घटत्वपटत्वयोरपि भेदात्। एवं सत्यन्योन्याश्रय इति चेन्न घटपटयोर्भेदग्रहावसरे घटत्वपटत्वयोऽरपि भेदग्रहणस्यानावश्यकत्वात्। न हि घटत्वा-वच्छेदेन गृह्यमाणं घटत्वं प्रतियोगितावच्छेदकं घटत्वाद् भेदेन गृह्यमाणं घटत्वं वाऽधिकरणतावच्छेदकमित्यभ्युपगम्यतेऽस्माभिः। किन्तर्हि स्वरूपत एव गृह्यमाणे घटत्व-पटत्वे वास्तवभेदवतां प्रतियोगिनमधिकरणञ्चावच्छिन्त इति ब्रूमः।

मायिनामयमुपहासो यन्न्यायविद्या नाध्यात्मविद्येतिदुराग्रहमात्रं यतो हि षोडश-पदार्थतत्त्वज्ञानस्य अपवर्गाधिगमहेतुत्वं कथं? वेदप्रामाण्यसम्पादनार्थं चान्वीक्षिकीति तावन्मात्रमेव व्याक्रियतां किं षोडशपदार्थकन्थाग्रन्थिग्रन्थनेनेति जिज्ञासायां सत्यां तार्किकाणामिदमेवोत्तरं यद् आत्मापवर्गपर्यन्तद्वादशविधप्रमेयज्ञानं शास्त्रानुसार-मन्यज्ञानानौपयिकमेव साक्षादपवर्गसाधनमेवात एवोद्देशवचनप्रणयनानन्तरं 'दुःखजन्म-प्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति द्वितीयं वचनं प्रणिनाय महर्षिगौतमः।

अयमभिप्रायः--मिथ्याज्ञानादेव दोषोद्भवो दोषादेव च नाना प्रवृत्तयः प्रवृत्तिभ्य एव नाना योनौ जन्मानि जन्मभ्य एव च दुःखानि तैराक्रान्तो मानवो भृशं व्यथितः सुखमीहमानोऽपवर्गाय यततेऽपवर्गो हि सुखस्य पराकाष्ठा दुःखध्वंसोऽशेषविशेषगुणोच्छेदो वा। यदा च सम्यक्पदार्थतत्त्वज्ञानं तदा मिथ्याज्ञानानां नाशो मिथ्याज्ञाननाशे च दोषापायो दोषापाये प्रवृत्त्यपायः प्रवृत्त्यपाये च जन्मापायो जन्मापाये च दुःखापायस्ततोऽपवर्गः। एवञ्च तत्त्वज्ञानान्मिथ्याज्ञाननिराकरणे तन्मूलः संसारो निवर्तत इति प्रमेयमवश्यमुपदेष्टव्यम् प्रमेयस्य तस्यात्मादेरपवर्गसाधनत्वावगतिः शास्त्रैकनिबन्धना। न्यायश्च निगमप्रामाण्यप्रतिष्ठापनपूर्वकतया पुरुषार्थोपयोगितां भजते। अनया रीत्या षोडशपदार्थनिबन्धनेन निःश्रेयसस्य मार्गो मुनिना गौतमेन निर्दिष्टः। अपवर्गमार्गोपयोगाभावादिह पदार्थगणोऽन्यः सन्नपि नोपदिष्टः।

न्यायमञ्जरीकारेणापि द्वादशप्रमेयावश्यकत्वं वदता अन्यप्रमेयानावश्यकत्वं निःश्रेयसार्थमिति प्रमेयप्रतिपादकसूत्रं व्याकुर्वताभिहितम्। तथाहि--चैत्रमैत्रजैत्रा भोज्यन्तामित्यत्र एव शब्दविरहेऽपि शब्दसामर्थ्याद् भोजनक्रियान्वयिनस्त एवावबुध्यन्ते नापरे तद्वदिहात्मप्रभृतयः प्रमेयमित्युक्ते तद्भिन्नप्रमेयानावश्यकत्वमवधार्यते।

यद्येवं कश्चन ब्रूते कथं द्वादशविधानामेव प्रमेयत्वमुपपद्यते समानतन्त्रे कणाददर्शने पृथिव्यादीनि नव द्रव्याणि, रूपप्रभृतयश्चतुर्विंशतिर्गुणा उत्क्षेपणादीनि पञ्च कर्माणि परापरभेदेन सामान्यं द्विविधं नित्यद्रव्यवृत्तयोऽन्त्या विशेषा एकः समवाय इति षट्पदार्थीमुपक्रम्य तदवान्तरविशेषैरानन्त्यं प्रमेयाणामाख्यातमिति ? अत्रोच्यते किं पुनरिह प्रमेयं विवक्षितमिति तत्सामान्यलक्षणं परीक्ष्यताम् ? आह सूक्तमदः कस्यापि 'कर्णे पृष्टः कटिं चालयतीति द्वादशविधत्वमाक्षिप्तं न प्रतिसमाधत्ते भवान् प्रमेयस्य सामान्यलक्षणं तु परीक्षत एव, अलं केलिना, अद एवात्र प्रतिसमाधानं यन्न हि प्रमाणविषयज्ञाते सति तद्विषयोऽर्थं प्रमेयमिति ज्ञायत एव किं लक्षितेन तेन ततो विशिष्टमिह प्रमेयमुपन्यस्यते। यत् सम्यग् ज्ञातं प्रमेयं निःश्रेयसाय असम्यग् ज्ञातं प्रमेयं भवाय तत्प्रमेयमत्राभीष्टं न तु प्रमाणार्थमात्रकं प्रमेयमपेक्षितम्। तच्च द्वादशतामेव भजते न न्यूनमधिकं वेति समाहितम्, इत्थं वर्तते विभागाक्षेपः कुतः पुनरेष प्रमेयविशेषो लभ्यते निःश्रेयसार्थत्वाच्छास्त्रस्य प्रमेयज्ञानस्य प्रमाणज्ञानवदन्यज्ञानोपयोगितामन्तरेण स्वत एव मिथ्याज्ञाने निवृत्त्यादिक्रमेणापवर्गे हेतुत्वप्रतिज्ञानात् तथाविधस्य चापवर्गोपायत्वस्य आत्मादिप्रमेयेष्वेव सत्त्वात्।

भवत्येवम्, सूत्रस्य तु कथमीदृशप्रमेयविशेषसमर्थने सामर्थ्यं विशेषात्तुशब्दप्रयोगसामर्थ्याच्च ? सत्यमाकाशकालदिगादिप्रमाणविषयत्वात् प्रमेयं भवति तत्तु न सप्रयोजनम्, आत्मशरीरेन्द्रियार्थमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं

निःश्रेयसहेतुत्वादित्याशयः. तदित्थमेतत्तु वचो निःश्रेयसाङ्गभूतप्रमेयान्तरपरीहारद्वारेण विशिष्टमात्माद्प्रमेयमिह सूचयति ।

प्रमेयाणां द्वादशविधत्वेऽपि हेयोपादेयभेदाद् द्वैविध्यं मुमुक्षूणां ध्यानसिद्धये बोध्यम् । तत्रापि देहादिदुःखान्तं हेयमेव । अपवर्गस्तूपादेयः । आत्मनोऽपि द्वैविध्यं सुखदुःखादिभोक्तृस्वभावभोगादिव्यवहारपराङ्मुखस्वभावभेदात् । तत्र सुखदुःखादिभोक्तृस्वभावो हेयः । भोगादिव्यवहारपराङ्मुखस्वभाव उपादेयः ।

आत्मनो हि भोगाधिष्ठानं शरीरम्, भोगसाधनानीन्द्रियाणि, भोक्तव्या इन्द्रियार्थाः भोगो बुद्धिः, आन्तरं हि भोगकारणं मनः, प्रवृत्तिः पुण्यपापात्मिका, रागादयश्च दोषाः शरीरादिजन्महेतवः, एतत्कृतश्च शरीरादियोगाध्यासः प्रेत्यभावः एतत्कृतमेव च संसारे सुखदुःखरूपं हि फलम्, तच्च द्विधं विवेकवतः सर्वं दुःखमेवेति, एवं शरीरादि-दुःखान्तं हेयत्वेन भावनीयम्, एतदनुषक्तश्चात्मापि हेय एव एतद्वियुक्तस्त्वात्मा एवापवर्गोऽभिधीयते, स चोपादेयत्वेन भावयितव्यः, इत्यत एवात्मपदसंगृहीतस्याप्यस्य पुनर्निर्देशः स हि परमः पुरुषार्थं इति, इत्थमिदं द्वादशभेदं प्रमेयं हेयोपादेयत्वेन तत्त्वज्ञानेन भावयन्नभ्यासात् तद्विषयविपरीतग्रहात्मकं मिथ्याज्ञानं क्षिणोति ।

तत्त्वज्ञानेनात्मनो मिथ्याज्ञाने बाधिते रागद्वेषादयो दोषास्तन्मूलाः क्षयं यन्ति क्षीणदोषस्य पुण्यपापात्मिका प्रवृत्तिर्नोदेति तदभावान्न तत्कार्यं शरीरादि जायते । अशरीरश्चात्मा दुःखकदम्बैर्न स्पृश्यते । अशेषदुःखोपरम एवापवर्गो व्यपदिश्यते । तदित्थमेव द्वादशविधं प्रमेयमतिगहनसंसारमारवस्थलं प्रभवतं त्रसन्तापनिर्वापणमहाह्रद-तामुपयातीति तदेवादेशार्हमिति आन्वीक्षिक्या नाध्यात्मविद्यात्वमितिवचः कीदृगिति विभावयन्तु सुधियः । समासेन एवमुच्यते—

**सम्यग्ज्ञाततयैव मोक्षफलका दिष्टाः प्रमेया नये**
**सिद्धा मोहकपाटभेदनविधौ न प्रातिकूल्यं गताः ।**
**संख्या द्वादशतैव रम्यगगने न्यायागमे भास्वती**
**येषां तेऽत्र विचक्षणा भवयमा नैव प्रमेयाः समे ॥ १ ॥**

**नासम्यग्विदिताः प्रमेयनिवहा मोक्षप्रदा मोहदा**
**दुःखायैव भवाय ते कुशलिना चोक्तास्तथा नेष्टदाः ।**
**अज्ञानाय कदर्थिता मतिमता नाशाय सञ्जल्पिता-**
**स्तस्मादात्मनदी प्रमैव महिता कैवल्यकूला कला ॥ २ ॥**

**अध्यात्मागममस्ति गौतमवचो मोक्षोपदेशान्वितं**

नृणां मोक्षविधैव राजतितरां नाभीष्टमन्यत्फलम् ।
यस्या न्यायमतेः सुधेव सततं सान्वीक्षिकी शेमुषी
तर्कणैव कला हृताऽमतिमतां वेदान्तिनां मायिकी ।। ३ ।।

उद्देशानुगतां बिभर्त्ति वचनं मान्यापवर्गार्गलं
तद्वैयर्थ्यकथान्यथा कृतिमतो रोध्या न भीतिप्रदा ।
साध्यो न्यायमतेऽपवर्गविभवो रम्यो न मार्गोऽपरः
काणादञ्च वचोऽपि तत्र रमते नान्या सुधा तत्समा ।। ४ ।।

अत एवार्थशास्त्रोक्तमदो वचनमपि साधु संगच्छते—

त्रयी वार्त्ता दण्डनीतिश्चेति मानवाः, त्रयी विशेषो हि आन्वीक्षिकीति
( अ० शा० १।१।२ )

प्रबन्धेन एतावतैवान्वीक्षिक्या अध्यात्मविद्यात्वस्य दिङ्निर्दिष्टेतोऽधिकं सूरिभिरनया भिन्नया वा दिशोह्यमित्यलं पल्लवितेन। अध्यात्मविद्यामात्रमियं न अपि त्वपरविद्याप्रकाशिकापीयमिति विशेषः।

मुख्यापवर्गचयनाय भवान्तकाय
न्यायागमस्य विषया विविधा विभान्ति ।
अध्यात्मबोधसहकारितयैव तेषां
चिन्ताक्षपादविहिता न परोऽपि हेतुः ।। १ ।।

संक्षिप्य तां मतिमतामपवर्गकीर्त्ति
संसूचये च कृतिनां विदुषां कतीनाम् ।
न्यायैकलोचनवतां हितचिन्तकानां
वृत्तं मनोमलहृतां परबोधभाजाम् ।। २ ।।

तर्कार्कविज्ञमतयो यतयः सयत्ना
न्यायागमं मतिदृशो नयनं वितेनुः ।
तेषां गिरा परिचयं ददतो न कस्य
मोदं बिभर्त्ति हृदयं कृतिवैभवस्य ।। ३ ।।

याचे ततो तिमतो धिषणैकगर्वा ं
स्सारं समेत्य कलुषं वचसां विहाय ।
चिन्वन्तु ते परिचयं विदुषां मुनीनां
न्यायागमस्य महितं दुरितापहरम् ॥ ४ ॥
नैयायिकाङ्कितकथा कमलामला न
कुत्रापि भाति सुखदा विमलप्रमाणा ।
प्राचां धिया कृतिमतां निगमैकभाजां
कष्टं कथं धृतिमतां वितनोमि वृत्तम् ॥ ५ ॥

## न्यायसूत्रकारो महर्षिगौतमः

भाष्यकारवात्स्यायनोद्योतकरवाचस्पतिमिश्रप्रभृतिभिरनेकैराचार्यैर्महर्षिगोतमोऽक्षपादनाम्नैव निर्दिष्टः। न्यायसूत्रं तस्यैव महर्षेः कृतिरिति सर्वे विपश्चिदो विदन्ति। इदं तथ्यमस्ति यदक्षपादनाम्नि न्यायसूत्रकारस्य विवादो नास्ति तथापि गोतमनाम्नि गौतमनाम्नि च अद्यापि संशीती राजते। अहिल्यापतेर्गौतमस्य नामान्तरमक्षपादपदेनोद्घोषितं 'स्कन्दपुराणे'

अक्षपादो महायोगी गौतमाख्योऽभवन्मुनिः ।
गोदावरी समानेता अहिल्यायाः पतिप्रभुः ॥
( माहेश्वर ख० अ० ५५ श्लो० ५ )

रामायणमहाभारतादिप्रसिद्धेषु ग्रन्थेषु अहिल्यापतेर्गौतमस्य चर्चा भूरिशोऽवाप्यते। किन्तु महाकविना श्रीहर्षेण नैषधीयचरिते निजनिर्मितमहाकाव्ये देवराजस्य समक्षं चार्वाककथावर्णनावसरे गोतमनाम्नैव न्यायशास्त्रवेत्ता निर्दिष्टः:—

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः ॥
( नै० च० १७ स० ९५ श्लो० )

किन्तु तत्र गोतमशब्दो गोश्रेष्ठमहावृषभार्थत्वाद् हास्यास्पदमेव प्रतीयते। भारतीयवाङ्मये गौतमो मिथिलावास्तव्यत्वेन प्रख्यातो विद्यते। विहारप्रान्ते दरभङ्गनगरस्य 'कमतौलनामकरेलवेस्टेशनस्थानात्' चतुर्णां क्रोशानां पारङ्गमे गौतमस्य आश्रमोऽद्यापि विद्योतते। तत्रत्यविद्वद्गोष्ठयां प्रसिद्धिरस्ति यदस्मिन्नाश्रमे एव गौतमेन गौतमी गङ्गा पुरा आनीता। तत्र वर्तमानो देवदत्तसंज्ञकः कूपोऽपि भासते। आभाणकं प्रसिद्धं तद्विषये यद् गौतमः पिपासापीडितो जलार्थं देवान् प्रार्थयामास, देवैश्च गौतमालङ्कृतदेशे पिपासापनोदाय कूपः प्रेरितः। गौतमाश्रमाद् दूरं क्रोशद्वयानन्तरं

'अहिया' नामकं स्थानम् अहिल्यायाः शोभतेऽधुनापि। अद्यापि छपराभूमण्डलेऽपि गङ्गातटे अहिल्यायाः पत्युर्गौतमस्य आश्रमोऽवस्थितो गौतमं स्मारयति। मिथिलायामेव प्रथमं न्यायसूत्राणां चर्चा जातेति मैथिलवार्त्ता ख्यापयति। ऋग्वेदसंहितापि ऋर्षेगौतमस्य कूपप्राप्तिकथां बोधयति

जिह्मं नुनुद्रेऽवतं तया दिशाह-
सिञ्चन्नूत्सं गोतमाय तृष्णजे।
आगच्छन्तीमवसा चित्रभानवः
कामं विप्रस्य तर्पयन्त धामभिः ॥

ऋ० म० १ अ० १४ सू० ८५

रहुगणगोतमोऽस्य सूत्रस्य ऋर्षिर्वर्तते। न्यायकन्दलीभूमिकायां महामहोपाध्यायो 'विन्ध्येश्वरी प्रसाद द्विवेदी' मत्स्यपुराणस्य अष्टचत्वारिंशेऽध्याये वर्णितं कूसिजमहर्षिपुत्रं दीर्घतमानामकमन्धं गौतमं न्यायसूत्रकारं मनुते। किन्तु न्यायवार्तिकभूमिकायां महामहोपाध्यायाङ्गीकृतमन्धं गौतमं निरस्य रहुगणगौतममेव न्यायसूत्रकारमङ्गीकृतवान्।

दीर्घतमा गौतमस्य अन्धस्य अयमेव गौतमो विदेहराजस्य पुरोहित आसीत्। चर्चेयं ब्राह्मणेऽवलोक्यते—

विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार।
तस्य गोतमो रहुगण ऋषिः पुरोहित आस ॥

श० अ० ४ ब्रा० १

अहिल्यायाः पुत्रः शतानन्दो जनकस्य राज्ञः पुरोहित आसीदिति वाल्मीकिरामायणं ब्रूते। अतः स गोतमो नैव गौतमः।

प्रसङ्गेऽत्र एतावदेव पर्याप्तं यदेष गोतमो गौतमश्च वक्तुं शक्यः। तारानाथतर्कवाचस्पतिरपि गौतममेव न्यायसूत्रकारं मनुते। गौतमस्य अक्षपादसंज्ञाविषये कथैका प्रसिद्धा श्रूयते—

कृष्णद्वैपायनो व्यासो यो गौतमस्य शिष्य आसीत् तेन च गौतमस्य मतं खण्डितम् क्षुब्धो गौतमः प्रतिज्ञातवान् चक्षुषानेन एनन्न द्रक्ष्यामि। अनन्तरं वेदव्यासस्य तपश्चर्यया सन्तुष्टो गौतमो योगबलेन चरणे निजीये चक्षुः संसृज्य तमवलोकितवान्। वेदव्यासेन अक्षपादनाम्न उल्लेख कृतः। देवीपुराणस्य 'शुम्भनिशुम्भमथनपादे' अक्षपादं गौतमं न्यायदर्शनस्य रचयितारं वर्णितवान्।

गवा वाचा गमयति वेदयतीति गौतमोऽनया व्युत्पत्त्या अक्षपादो गौतमोऽङ्गीकृतः।

गोर्वाक् तथैव तमयन् परान् गोतम उच्यते ।
गोतमान्वयजन्मेति गौतमोऽपि स चाक्षपात् ।।
दे० भा० अ० १३

तदानीं नास्तिकमतं व्याप्तमासीद् यन्महिम्ना यागादयः प्रायो विलुप्ता आसन् । देवैः शिव आराधितः । शिवाज्ञया सर्वे ते गौतमशरणमवापुः । गौतमो नास्तिकमतं विनाशयितुं पदयात्रां प्रारब्धवान् । निजेच्छया भवानीशः शिवः शिशुत्वं बभार । तदनन्तरं स एव शिशुः शिवो नास्तिकमतं सम्यगुपस्थापितवान् । शिवगौतमयोः मतद्वयं नास्तिकास्तिकरूपमवलम्ब्य शास्त्रार्थः समजनि । सप्ताहानन्तरमपि विवादे कोऽपि पराजितो न बभूव । सचिन्तो गोतमो मौनमवलम्ब्य तस्थौ । उपहासं कुर्वता शिवेन गौतमोऽभ्यधायि । वेदधर्मज्ञ मेधाविन् मुने बुद्ध इव क्षुद्रनास्तिकबालोऽप्यहं भवता न पराजितः । कथं भवान् मौनमवलम्बितवान् । प्रबुद्धस्य बुद्धस्य नास्तिकस्य पराजयः कथं सम्भवः । त्वयि तादृशं सामर्थ्यं न पश्यामि । तवैव पराजयो न भवेदिति शीघ्रमन्यत्र व्रज । बालवाणीमिमामाकर्ण्य विस्मितेन गौतमेन शिशुः शिवः संस्तुतो वृषवाहनत्वेनोपस्थाय शिवो गौतमाय वरं ददौ । तर्कगौतमस्तर्ककौशलमधिगच्छ । वादाहवे त्वामृते कोऽन्यस्तर्ककौशलेन मां सन्तोषयिष्यति । तर्कनैपुण्येन तवाऽहमत्यन्तं तुष्टः । अहं तवाभिधां धारयिष्यामि । त्वं त्रिनेत्रो भविष्यसि । वरदानानन्तरमेव शिववाहनेन वृषभेण प्रमाणादीनां षोडशपदार्थानां सम्यगुपस्थापनं चक्रे । शिवानुकम्पानुसारं गौतमः षोडशपदार्थानियेष । अत एव ते पदार्था आन्वीक्षिकी सञ्ज्ञां लेभिरे । शिवाज्ञया नास्तिकमतनिराकर्त्रीमिमां विद्यां दिनदशकेनैव शिष्याय वेदव्यासाय ददौ । देवीपुराणशुम्भनिशुम्भमथनपादे षोडशेऽध्याये निर्दिष्टोऽस्याः कथाया द्रष्टव्यः । ततः परं कतिपयदिनानन्तरं गुरोर्गौतमस्याज्ञामादाय निजीयं समावर्त्तनं सम्पाद्य आन्वीक्षिक्यां प्रौढत्वमधिगत्य ब्रह्मसूत्रे तर्कविद्यां निन्दितवान् । तर्कविद्याया निन्दामाकर्ण्य भृशं कुपितो गौतमः प्रतिज्ञातवान् यदनेन चक्षुषा त्वां न द्रक्ष्यामि । गुरुगौतमपादयोर्निपत्य गुरुं प्रार्थितवान् वेदव्यासो यन्मया कुतर्कस्य निन्दा विहिता न तु तर्कस्य अथापि चेदपराधः क्षम्यताम् । प्रसन्नो गौतमो निजीयां प्रतिज्ञां संस्मृत्याक्षपादो भूत्वा वेदव्यासमवलोकितवान् । तद्दिनादेव ऋषेर्गौतमस्याक्षपादाभिधा प्रख्यातिङ्गता । चर्चैषापि देवीपुराणशुम्भनिशुम्भमथनपादे षोडशेऽध्याये द्योतते । तार्किको जयन्तभट्टोऽपि शिवप्रसादं गौतमस्याक्षपादत्वञ्च समर्थयन्नवद्योतते .....

न्यायोद्गारगभीरनिर्मलगिरा गौरीपतिस्तोषितो
वादे येन किरीटिनेव समरे देवः किराताकृतिः ।
प्राप्तोदारवरस्ततः स जयति ज्ञानामृतप्रार्थना
नाम्नाऽनेकमहर्षिमस्तकवलत्पादोऽक्षपादो मुनिः ।।
न्या० म० पृ० २०८

ब्रह्माण्डपुराणेऽपि शिववाक्ये चर्चेयमुपलभ्यते। सप्तविंशतितमे द्वापरे जातुकर्णस्तपोधनो व्यासो भविता। तदानीं प्रभासतीर्थमागत्य लोकविश्रुतो योगर्द्धिसम्पन्नो द्विजश्रेष्ठः सोमशर्म्माभिधोऽवतीर्णो भविष्यामि। अवतारे तस्मिन् अक्षपादकुमारोल्लुकवत्ससंज्ञकाश्चत्वारो मम पुत्रा जायेरन्। ब्रह्माण्डपुराणानुसङ्गपादस्य त्रयोविंशेऽध्याये घटनेयं वर्णिता अवलोकनीया। वायुपुराणे ब्रह्माण्डपुराणे च पुत्रत्वेन शिष्य एवावाप्यते। लिङ्गपुराणस्य चतुर्विंशेऽध्याये च सोमशर्मणः शिष्योऽक्षपादो वर्णितः। कूर्मपुराणे स्कन्दपुराणे च शिवस्यावतारो गौतमोऽहिल्यापतिश्चर्चितः। महाभारते अहिल्यापतेर्गौतमस्य सहस्राधिकशिष्याणां कथा संशोभते। यत्किञ्चिदपि भवेत् तत्र तु नास्ति संशीतिलेशो यत् कृष्णद्वैपायनात्पूर्वं न्यायसूत्रं चकाराक्षपाद इति।

## भाष्यकारो वात्स्यायनो वार्तिककारश्चोद्योतकरः।

न्यायदर्शनस्य भाष्यकर्त्ता वात्स्यायनः प्रथितः। योगवासिष्ठरामायणवैराग्यप्रकरणान्ते नाना मुनीनां प्रसङ्गोऽवाप्यते येषु अन्यतमो वात्स्यायनो मुनिरपि चर्चितः। वाचस्पतिमिश्रवरदराजमल्लिनाथप्रभृतयो वात्स्यायनस्यापरं नाम पक्षिल इति मन्वते।

**अक्षचरणपक्षिलमुनिप्रभृतयो वर्णयन्तः।**
**अक्षचरणपक्षिलौ सूत्रभाष्यकारौ मल्लिनाथाः॥**

उद्योतकरेण न्यायाचार्येण न्यायवार्तिके स्वकीये ग्रन्थे वात्स्यायनोऽक्षपादप्रतिमशव्देनाभिहितः।

**अक्षपादप्रतिमो भाष्यं वात्स्यायनो जगौ।**
**अकारि महतस्तस्य भारद्वजेन वार्तिकम्॥**
(न्या० द० द्वि० ख० पृ० १२००)

न्यायवार्तिकटीकायाम् उपमानसूत्रभाष्यव्याख्यानावसरे तथा वरदराजस्तार्किकरक्षायां निजीयव्याख्यासमर्थनाय भाष्यकृतो वात्स्यायनस्य नाम गृहीतवान्। इत्थं मल्लिनाथो भाष्यकारस्य प्रामाण्यं सूचयन् कथितवान् यद् यद्यपि अक्षपादेऽयं विषयो न चर्चितस्तथापि भाष्यकारेणोपस्थापितः। अतः सूत्रकारस्यापि अभिप्रेतोऽयम्। अनया रीत्या वात्स्यायनोऽक्षपादप्रतिमो भगवान् पक्षिलमुनिः पक्षिलस्वामी चानर्थान्तरम्। उद्योतकरकुमारिलभट्टप्रभृतिभिर्वात्स्यायनो भगवान् उक्तः। इत्थमेव आचार्यशङ्करादिनापि भगवान् वात्स्यायनो निर्दिष्टः। किन्तु वाचस्पतिमिश्रेण नायं भगवानभिहितः। कतिपये आचार्या अर्थशास्त्राचार्यकौटिल्यमेव न्यायदर्शनभाष्यकारं मन्वते। अस्यैवापरं नाम पक्षिलस्वामी वात्स्यायनश्चेति मन्वते। हेमचन्द्रसूरिणा अभिधानचिन्ता-

मणिग्रन्थे वात्स्यायनस्याष्टौ नामानि उल्लिखितानि। तेषु कौटिल्यश्चणकात्मजः, पक्षिलस्वामी विष्णुगुप्तश्चोक्तः। अतः प्रतीयते यद् वात्स्यायनः पक्षिलस्वामी चैक एव। वाचस्पतिरपि भाष्यकारं पक्षिलस्वामिनं ब्रूते—

**वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः।**

**जामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गलश्च सः॥**

(अ० चि० मर्त्यकाण्ड ५१८)

कौटिल्यः स्वकीयस्य अर्थशास्त्रस्य विद्यासमुद्देशप्रकरणे आन्वीक्षिकीं विद्यां प्रशंसन् यत्पद्यं लिखितवान् तस्य पादत्रयं न्यायदर्शनभाष्येऽपि समानम्—

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**

**आश्रयः सर्वधर्माणाम्।**

पादश्चतुर्थश्च वात्स्यायनेन (विद्योद्देशे परिकीर्तिता) शश्वदान्वीक्षिकी मता इत्यस्य स्थाने लिखितः।

एतेनेदमपि सुस्पष्टं प्रतीयते यत् कौटिल्य एव न्यायभाष्ये कथयति यदहमेव अस्य विश्लेषणं कौटिल्यार्थशास्त्रे कृतवान्। कौटिल्येनार्थशास्त्रान्तेऽभाणि यन्मया शास्त्रोद्धारः कृतः अतोऽवगम्यते यत्तेनैव न्यायसूत्रस्य भाष्यं निर्मायास्योद्धारश्चक्रे।

**येन शास्त्रञ्च शस्त्रञ्च नन्दराजगता चमूः।**

(अर्थ० शा० अन्तिमः)

अस्मिन् विषये वक्तुमिदमपि शक्यते यन्नाम्नामैक्यं व्यक्तेरैक्ये अनिवार्यहेतुर्न। न्यायभाष्यकार इव कौटिल्यस्यापि नाम वात्स्यायनो वा पक्षिलस्वामीति संभवम्।

पक्षिलस्वामी इति नामापि संभवं न्यायकन्दलीप्रारम्भे 'पक्षिलशबरस्वामिनौ' एतद्द्वारापि पक्षिलनाम संभवम् उपनाम स्वामीति संभवम्। फलतः स्वाम्याद्युपनाम सम्मेल्य पक्षिलस्वामीति शब्दप्रयोगः सुशक इति अवगम्यते। इदन्तु तथ्यं यद् वाचस्पतिप्रभृतीनां मते न्यायभाष्यकारस्य नाम पक्षिलस्वाम्यपि आसीत्।

वस्तुतो 'विद्योद्देशे परिकीर्तिता' इतिकथनेन अर्थशास्त्रातिरिक्ते चतुर्विधानां विद्यानां गणनाप्रसङ्गे प्रथमत आन्वीक्षिक्या नाम निर्दिष्टम्। आन्वीक्षिकी विद्यैव चतुर्विधानां विद्यानां गणनाप्रसङ्गे चतुर्थी विद्या विद्यते इत्यपि अवगतं भवति। जयन्तभट्टोऽपि अत्र सम्मतः। भट्टेन लिखितं यद् 'विद्योद्देशे परिकीर्तिता' अस्य भाष्यस्याशयोऽयमस्ति शास्त्रेषु चतुर्विधानां विद्यानां परिगणनावसरे आन्वीक्षिकी विद्या परीक्षिता। अर्थान्न्यायविद्यैव चतुर्थज्ञानरूपा आन्वीक्षिकी विद्या विद्यते।

चाणक्यस्य शास्त्रोद्धारद्वारैव राजनीतिशास्त्रस्योद्धारः सार्थको भवितुमर्हति। कौटिल्यस्य मुख्यं नाम विष्णुगुप्त आसीत्। एतच्च विशाखदत्तस्य मुद्राराक्षसनाटकात्सिद्धम्। यदि कौटिल्य एव वात्स्यायनो भवेत्तदा अवश्यमेव उद्योतकरेण वाचस्पतिमिश्रेण वा अस्य चर्चा कृता भवेत्। वात्स्यायनेन भाष्यान्ते लिखितम् :—

योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरः।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत्॥ पृ. १२००

कामसूत्रेऽपि वात्स्यायनस्य नाम ग्रन्थकारपरिचयप्रसङ्गेऽवाप्यते किन्तु टीकाकारेणालेखि वात्स्यायन इति नाम गोत्रनिमित्तकं वर्तते। तस्य वास्तविकं नाम मल्लनाग आसीत्। यशोधरः कामसूत्रकारं विष्णुगुप्तं न मनुते अपि तु मल्लनागमेव ब्रूते। तत्र पक्षिलस्वामी नोल्लिखितः। कामसूत्रस्य स्वमतप्रसङ्गे वात्स्यायननाम्न उल्लेखोऽवाप्यते कामसूत्रन्यायभाष्ययोर्भाषा भिन्ना विद्यते। कामसूत्रारम्भे मङ्गलाचरणमपि च विद्यते। यद्यपीदं सन्दिग्धं यद् वस्तुत एतौ भिन्नौ अभिन्नौ वा ग्रन्थकारौ। किन्तु इतिहासविशेषज्ञा अनयोर्भेद एव स्वीकुर्वन्ति।

## वात्स्यायनस्य कालः—

वात्स्यायनस्य कालः चतुर्थी पञ्चमी वा शताब्दी विद्यते। इतिहासकाराणां दृष्टौ चाणक्यवात्स्यायनयोरैक्यस्य प्रश्न एव जायते। किन्तु संस्कृतविद्वद्भिर्वात्स्यायन ख्रीष्टपूर्वः कथ्यते। लङ्कावतारमाध्यमिकसूत्रयो रचनानन्तरं वात्स्यायनेन रचना कृता एतस्मिन् विषये किमपि प्रमाणन्न विद्यते यत उद्योतकरस्य वार्तिकग्रन्थेऽपि बौद्धिकग्रन्थनामुल्लेखो नावाप्यते। बौद्धमतानां पूर्वपक्षभूतानां चर्चा तु परम्परातः परिगृहीतैव। ग्रन्थाध्ययनेन एतत्तु अवश्यं प्रतीयते यद् भाष्यरचनावसरे बौद्धानामभ्युदयः प्रायः जात एव। वाचस्पतिमिश्रेण प्रथमाध्यायस्य द्वितीयाह्निकस्य नवमसूत्रव्याख्यानावसरेऽभाणि यद् भाष्यपूर्वं न्यायसूत्रस्य व्याख्यानमभवत्। वाचस्पतिमिश्रेण उद्योतकरस्य वार्तिकरचनाप्रयोजनप्रतिपादनप्रसङ्गे चोक्तं यदिदं सत्यं भाष्यकारात्पूर्वमपि न्यायसूत्राणां व्याख्यानमभवत्। तात्पर्यटीकाप्रारम्भे च मिश्रेणोक्तमुद्योतकरस्य वार्तिकरचनाप्रयोजनं प्रतिपादयता यद् भाष्यकारो न्यायशास्त्रस्यावगतिं कारयति किन्तु एष एव वाचस्पतिमिश्रः कथयति यत् तात्पर्यटीकारम्भे उद्योतकरो वार्तिकरचनाप्रयोजनं प्रतिपादयन् प्रतिपादयति यद् यद्यपि भाष्यकृता न्यायशास्त्रावगतिर्बोधिता तथापि दिङ्नागप्रभृतिकुतर्कैः न्यायशास्त्रं सर्वथाच्छन्नं जातम्। तत्त्वनिर्णये सर्वथेदं समर्थं न। एतत्तमोऽपसारयितुमेव वार्तिककारेण वार्तिकस्य रचना कृता। नैयायिकानां मते यथा प्राङ्न्यसम्प्रदाये समयस्य व्यवधानन्तथैव बौद्धसम्प्रदायेऽपि बौद्धाचार्यद्वारा प्रमाणकाण्डीयचर्चा कृतास्ति। वाचस्पत्यनुकूलमर्वाचीनबौद्धदिङ्नागादिकारणादेव न्यायवार्तिकस्य रचना सार्था। अतः प्रतीयते यद् वात्स्यायनो दिङ्नागात्पूर्ववर्त्तीति। वात्स्यायेन पाणिनिसूत्राणि उद्धृतानि।

द्वितीयपञ्चमदशमसूत्रभाष्ये वात्स्यायेन महाभाष्यस्य वाक्यानि उद्धर्तुं चर्चा कृता। किन्तु नैतन्निश्चयरूपेण मन्तव्यम्। यतः समानानि वाक्यानि दृष्टान्तस्वरूपेण नाना ग्रन्थेषु उपलभ्यन्ते। अतः प्रथमो वक्ता क इति निश्चयो न सम्भवः। इदन्तु सत्यं यद् बौद्धनैयायिकेन दिङ्नागेन प्रमाणसमुच्चये वात्स्यायनस्य खण्डनं कृतम्। दिङ्नागस्य कालो विश्वकोषे द्वितीयशताब्दी तृतीयशताब्दी वा निर्धारिता। सतीशचन्द्र-विद्याभूषणेन च कालिदासवत् पञ्चमशताब्दी दिङ्नागस्य काल इति कथ्यते। उद्योतकरेण न्यायवार्तिके धर्मकीर्त्तेर्विनीतदेवस्य च ग्रन्थ उद्धृतः। उद्योतकरस्य कालः सप्तमशताब्दी मन्यते। जैकोबीमहाशयेन वात्स्यायनस्य कालश्चतुर्थी शताब्दी उद्योतकरस्य वार्तिकग्रन्थः प्राचीनग्रन्थत्वेन ख्यात आसीत्। अत एव तत्र 'अतिजरती-नाम्' इदमुक्तम्। उदयनेनापि उद्योतकरस्य रचना प्राचीनेति भण्यते। तेनोक्तं 'ननु चिरन्तनेऽस्मिन् निबन्धे महाजनपरिगृहीते बहवो निबन्धाः सन्तीति कृतमनेनेत्यत आह इच्छामि इति, ननु यदि ग्रन्थकारसम्प्रदायाविच्छेदेन ते निबन्धाः कथं कुनिबन्धाः? अथ सम्प्रदायो विच्छिन्नः? कथं तवापि विच्छन्नसम्प्रदाया तत्पर्यटीका सुनिबन्धः इत्यत आह 'अतिजरतीनाम्' उद्योतकरसम्प्रदायो ह्यमृषाम् यौवनं तच्च कालवशाद् गलितमिव किन्नामात्र त्रिलोचनगुरोः सकाशादुपदेशरसायनमासादितममृषां पुनर्न नवीभावाय दीयत इति युज्यते।[१]

अस्य ग्रन्थस्य अनेकाः टीका अभवन् इति प्रतीयते किन्तु कालक्रमाद् उद्योतकरस्य सम्प्रदायस्य लुप्तत्वादेताः टीकास्तथा निबन्धाः परिणतिमवाप्ताः कुनिबन्धा जाताः। वाचस्पतिमिश्रो निजगुरोः त्रिलोचनसकाशादधीत्य उद्योतकरस्य रहस्यं ज्ञात्वा न्यायवार्तिकस्य तात्पर्यटीकां कृतवान्। वाचस्पतिमिश्रः स्वयं लिखति यदहं त्रिलोचनगुरोरुपदेशरसायनं सम्प्राप्य अस्यास्तात्पर्यटीकाया नवीकरणे प्रवृत्तः। मिश्रस्य न्यायसूचीग्रन्थस्य चरमश्लोकद्वारा अष्टपञ्चाशदुत्त-राष्टशतवर्षाणां विद्यते इति भासते। शतवर्षस्वीकारे षट्सप्तत्युत्तरनवशतवर्षीया प्रतीयते। कृतिन एषा रचना अन्तिमा भाति। उदयनो निजीयसमयं षडुत्तरनवति-वर्षं मनुते। वाचस्पतिमिश्रः उदयनाचार्यश्च खण्डनखण्डकाराद् श्रीहर्षात्प्राचीनौ विद्येते। एतत्तयोर्ग्रन्थान्निश्चीयते। अनया रीत्या उद्योतकरस्य कालो यदि सप्तमशताब्दी स्वीक्रियेत तदा न किञ्चिदप्यनौचित्यं पदं धत्ते। बलदेवोपाध्यायेन उद्योतकरस्य कालः षष्ठशताब्दी वाचस्पतिमिश्रस्य नवमशताब्दी उदयनस्य च दशमशताब्दी स्वीक्रियते। न्यायवार्तिके भर्तृहरेः कुमारिलस्य वा मतस्य आलोचना नावाप्यते। उद्योतकरद्वाराप्रस्तावितमीमांसकमतं तात्पर्यटीकाकारो वाचस्पतिमिश्रो जरन्मी मांसकस्य मतं ब्रूते। श्लोकवार्तिकस्यानुमानप्रमाणस्य प्रमेयविषये उद्योतकरेण समर्थितं मतं निर्दिष्टम्। उद्योतकरो दिङ्नागमतं खण्डयित्वा अस्य नवस्य मतस्य

---

१. तात्पर्य परिशुद्धि पृ. १।

स्थापनां कृतवानिति प्रतीयते। सुबन्धुना वासवदत्ताग्रन्थे उद्योतकरस्य नाम निर्दिष्टम्। सुबन्धोः पूर्वं न्यायमतस्य प्रतिष्ठापनायाः प्रसिद्धिर्जातेति उक्तदिशा मन्तुं शक्यते। यत्किमपि भवतु उदयनवाचस्पतिदृष्ट्या उद्योतकरस्य वार्तिकग्रन्थः षष्ठ-शताब्दीतः प्राक्कालिकोऽपि सम्भवः। उद्योतकरेण वादविधेर्वादविधानटीकाया उल्लेखोऽकारि। किन्तु इयं धर्मकीतेर्वादन्यायस्य तथा विनीतदेवस्य वादन्यायस्य व्याख्यैवोल्लिखितेति स्पष्टं न प्रतीयते। इयमपि संभावना यद् उद्योतकरो धर्मकीर्तिश्च समकालिकौ। बौद्धग्रन्था प्रायो विलुप्ता अत एते ग्रन्था पूर्वमपि संभवाः। वाच-स्पतिप्रतिपादनानुसारम् उद्योतकरेण दिङ्नागस्य सुबन्धोश्च विशेषोल्लेखः प्रतिपादनञ्च कृतमिति अवगम्यते। धर्मकीर्तिना न्यायविन्दौ उद्योतकरकथनस्य प्रतिपादनं विहितम्। 'सर्वाभिसमय' सूत्रनामकप्राचीनबौद्धग्रन्थस्य चर्चा उद्योतकरेण कृता विद्यते। अनया दिशा उद्योतकरं सप्तमशताव्दीतः पूर्वं वात्स्यायनञ्च ईसापूर्वं कतिपय आचार्या मन्वते। वात्स्यायनस्य जन्मस्थानं कुत्रेति वक्तव्यमसन्दिग्धं दुष्करम्। उद्योतकरवाचस्पतिभ्यां पश्चाद् जयन्तभट्टस्य स्थानं वक्तुं शक्यते।

## जयन्तभट्टस्य स्थानं कालवंशपरिचयश्च।

महामहोपाध्यायोमेशमिश्रो निजीये 'हिष्ट्री आफ इण्डियन फिलासफी' नामक ग्रन्थे जयन्तभट्टस्य कालं नवमशताब्दीं मनुते। जयन्तभट्टस्य आस्तिकनैयायिकेषु दार्शनिकेषु मुख्यतमं स्थानं विद्यते। नव्यन्यायाचार्यो गङ्गेशोपाध्यायो जयन्तभट्टं जरन्नैयायिकमङ्गीकुरुते। द्वादशशताब्द्या न्यायलीलावतीकारवल्लभस्यापि चर्चा गङ्गेशोपाध्यायग्रन्थे उपलभ्यते। त्रयोदशशताब्द्या गङ्गेशोपाध्यायस्य ग्रन्थे जयन्त-भट्टस्यापि चर्चाया उपलब्ध्या इदं सर्वथा निश्चितं यद् जयन्तभट्टस्य स्थितिर्गङ्गे-शतश्चिरपूर्वमासीत्। धर्मकीर्तेः पश्चान्न्यायस्य नानोद्धरणानि अवाप्तानि। जयन्तभट्टो वाचस्पतिमिश्रमाचार्यं ब्रूते। तदपि परिहृतमाचार्यैरित्यादिवचनात्।

किन्तु कविराजो मतमिदन्न समर्थयति। जयन्तभट्टो गङ्गेशवाचस्पत्यो-र्मध्यकालवर्तीति तन्मतम्। न्यायमञ्जर्या अध्ययनात्प्रतीयते यज्जयन्तभट्टेन भासर्वज्ञ-परम्परानुसृता। अयं काश्मीरस्यासीत्। एतदाश्चर्यं यत्प्रसिद्धबौद्धदार्शनिकैर्जयन्तभट्टस्य न्यायमञ्जरीग्रन्थस्य कुत्रापि चर्चा न कृता किन्तु उद्योतकरस्य वाचस्पतेश्च चर्चा तेषां ग्रन्थेषु उपलभ्यते। अतः प्रतीयते यद् जयन्तभट्टस्य काल एकादशशताब्द्या मध्यभाग एव आसीत्। ज्ञानश्रीरत्नकीर्त्योरनन्तरमेव जयन्तस्य कालो मन्तव्य इति समी-चीनं प्रतीयते। अनयोरनन्तरमेव जयन्तभट्टेन निजीयग्रन्थोऽलेखि। ज्ञानश्रीरत्न-कीर्तिभ्यामस्य ग्रन्थो नोपलब्ध इत्यस्वीकारे एव अयं नवमशताब्द्यां जात इति स्वीकर्त्तव्यं भवति। यादृशो महामहोपाध्यायगोपीनाथकविराजेन स्वीकृतः।

कादम्बरीकथासारस्य रचयितास्य पुत्रोऽभिनन्दो लिखति यदयं जयन्तभट्टः शक्तिकुलस्य विद्यते। काश्मीरस्य एकस्मिन् भागे दाराभिमार एवायं न्यवसत्। भारद्वाजगोत्रीयश्चासीदयम्।

एकत्र स्थले शङ्करवर्मणो राज्ञो नाम लिखितं जयन्तभट्टेन। येन राज्ञा धर्मतत्त्वज्ञे नीलाम्बरव्रतस्य समर्थनं कृतम्। सम्भवतो भट्टजेकोवकविराजगोपीनाथाभ्यां भट्टस्य पूर्वपुरुषः शक्तिः मुक्तापीडस्य सचिवोऽमन्यत। भट्टस्य पिता चन्द्र आसीत्। न्यायमञ्जर्यां जयन्तभट्टेन उपसंहारभागे स्पष्टीकृतमिदमपि यज्जयन्तनाम न हि अपि तु शास्त्रचर्चायां विजयित्वात् स जयन्तभट्ट इत्याख्यां लब्धवान्। न्यायमञ्जर्या निर्माणानन्तरमस्य सिद्धान्तो विचारणीयत्वेन विद्वद्भिर्गृहीतः। अत एव तद्विषये इत्थमाख्यातम्--

यस्य—नववृत्तिकारः (नवीनभाष्यकारः) अयमिति ख्यातिरस्य सूचयति यद् यस्य न्यायमञ्जरीग्रन्थस्योल्लेखो वाचस्पतिना कृतो विद्यते ततः पूर्वमपि न्यायसूत्रवृत्ति-सदृशा काचन टिप्पणी अवश्यमासीत्। यस्यास्तदानीन्तनेषु विद्वत्सु सर्वोपरिस्थानं लब्धमासीत्। तथ्यस्यास्य समर्थनं तच्छब्दैरेव जायते—

अन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः। जयन्तभट्टो न्यायमञ्जरी-ग्रन्थं निजीयमेभिः शब्दैः प्रशंसितवान्। सा च प्रशंसा विनयान्विता स्पृहणीया च—

**न्यायौषधिवनेभ्योऽयमाहृतः परमो रसः।**
**इदमान्विक्षिकीक्षीरान्नवनीतमिवोद्धृतम् ॥**

न्यायम. ७

अर्थाद् मीमांसैषा न्यायाटव्या ओषधिभिरुद्धृता सुस्वादुतमरसस्वरूपा अहोस्विद् न्यायगोपयसो निःसारितं नवनीतं राजते।

जयन्तभट्टवद् मानवानां कृते नव्यविषयाणां नव्यविचाराणां च विषये कल्पना सर्वेषां कथं सुलभा अतोऽभिनवरसाधायकवाक्यानामभिनवानामभिनवाशाधायकानां काचन नूतनाशा कर्त्तव्या जनैः। यद्यपि तैरेव पुष्पैर्निर्मिता माला पूर्वमपि शिरसि धारिता तथापि अभिनवविधया ग्रथिता सती मनांसि सहृदयानां मोहयत्येव।

जयन्तभट्टस्य तत्कार्यं तदीयेष्टजनैस्तथा पर्याप्तं न प्रशंसितं तत एव स कथयति—

असंख्यैरपि नात्मीयैरन्यैरपि परस्थितैः
गुणैः सन्तः प्रहृष्यन्ति चित्रमेषां विचेष्टितम् ॥

आश्चर्यं सज्जना निजीयैर्गुणैः प्रसन्ना न भवन्ति किन्तु तद्गुणापेक्षया यदि कतिपयेऽपि न्यूना गुणा अन्यत्रावाप्यन्ते तदा तेऽतीवसन्तुष्टाः प्रसन्नाश्च भवन्ति ।

ग्रन्थे कतिपयानां महत्त्वपूर्णानां मनोरञ्जकतथ्यानां चयनमपेक्षितं भवति । साधारणतया सर्वंप्रथमं ऋग्वेदस्योल्लेखः कर्त्तव्यो भवति किन्तु जयन्तोऽथर्ववेदत आरभते । जयन्तेनाथर्ववेदाय प्रथमं स्थानं दत्तम् । किं काश्मीरस्य एष प्रभावः ? तस्येदं वक्तव्यं यत्सर्वेषां परमं प्रयोजनं परमपुरुषार्थो मोक्ष एव प्राप्तव्यः । तद्भिन्नं लक्ष्यं तस्यापि किमपि न विद्यते । सर्वो हि शास्त्रार्थः पुरुषार्थपर्यवसायी, न स्वरूपनिष्ठ इति न्यायमञ्जर्याः शैली ध्यातव्या । प्रतीयते यद् वाचस्पतिमिश्ररचनाभिः प्रभाविता सा । तदुक्तिर्नितान्तं विनोदपूर्णा सती अतितीक्ष्णा सूक्ष्मा मर्मबेधिनी च । विशेषतः चार्वाकार्हतबौद्धमीमांसकानां कृते निष्करुणा वज्रपातिनी च । परान् वाक्चातुर्येऽपि न मुञ्चति । सुदृढो नैयायिको न तत्र मनागपि सन्देहः । अत एव ईश्वरीयसत्तामङ्गी-कुर्वाणो ब्रूते—

ये त्वीश्वरं निरपवाददृढप्रमाण-
सिद्धस्वरूपमपि नाभ्युपयन्ति मूढाः ।
पापाय तैः सह कथापि वितन्यमाना
जायेत नूनमिति युक्तमतो विरन्तुम् ॥

ब्रवीति पुनः—

भो भगवन्तः सभ्याः क्वेदं दृष्टं क्व वा श्रुतं लोके ।
यद् वाक्येषु पदानां रचना नैसर्गिकी भवति ॥
यदि स्वाभाविकी वेदे पदानां रचना भवेत् ।
पटे हि हन्त तन्तूनां कथं नैसर्गिकी न सा ॥
शन्नो देवीरभिष्टये, नारायणं नमस्कृत्य,

अस्त्युत्तरस्यां दिशि देवतात्मा इति तुल्ये रचनात्वे क्वचित् कर्तृपूर्वकत्वमपरत्र तद्विपर्यय इति महान् व्यामोहः । एवं धूमोऽपि कश्चिदग्निमान् कश्चिदनग्निक इत्यपि स्यात् । किमिदानीं कुमारसम्भवतुल्योऽसौ वेदः सम्पन्नः । अतो सर्वास्तिकधूर्येण वेद-प्रामाण्यं साधितं नैयायिकेन । अलमुपहासेन रचनामात्रमेव तुल्यं वेदस्य कुमार-सम्भवेन नान्यत् । न चेयतोपहसितुं युक्तम् । ( न्याय म० पृ० २१६ )

पुनर्विलक्षणसत्तेश्वरद्वारा वेदस्य रचनोल्लेखं कुर्वता भट्टेनोच्यते—

तेनाध्येतृगणाः सर्वे रूपाद्वेदमकृत्रिमम् ।
मन्यन्ते एव लोके तु पीतं मीमांसकैर्यशः ॥
वेदा न पठिता यैस्तु त्वादृशैः कुण्ठबुद्धिभिः ।
कार्यत्वं ब्रुवते तेऽस्य रचनासाम्यमोहिताः ॥
(न्याय म० पृ० २१६)

एतद्विषये जयन्तो ब्रूते—उच्यते-मीमांसकैर्यज्ञः बुद्धिजाड्यापनयनाय ब्राह्मीघृतं वा वेदस्तु पुरुषप्रणीत एव नात्र भ्रान्तिः।

उपरितनैरुदाहरणैः सुस्पष्टं यज्जयन्तोऽत्यन्तं सरलस्तथा विनोदप्रियो निजोक्त्यभिव्यक्तौ औचित्यान्वितोऽपि विद्यते। स आत्मानं नैयायिकं वेत्ति यद्यपि याज्ञिकपरिवारैः सह सम्बद्धस्तथा यज्ञानुष्ठाने पूर्णं विश्वसिति च तथापि मीमांसको न विश्वेशाराधकत्वात्। एकस्मिन् न्यायग्रन्थेऽपि विद्यते यज्जयन्तः मनोरमसाहित्यिकशैली-सरलप्रवाहं प्रवाहयन् काव्यस्य साहित्यस्य च पारङ्गमः। अभिनन्देन तत्पुत्रेण कादम्बरीकथासारे सत्यमुक्तम्—

सरसाः सदलङ्काराः प्रसादमधुरागिरः ।
कान्ताः तातजयन्तस्य जयन्ति जगतां गुरोः ॥ (१, २)

मम पितुर्जगद्गुरोर्जयन्तस्य सरसालङ्कारा आकर्षिका मधुरा वाक् प्रतिष्ठिता भवतीति नात्र संशीतिलेशः।

जयन्तस्य न्यायकलिका नाम्नी लघ्वी अपरैका रचना राजते। यत्र न्याय-सूत्रस्य केवलं प्रथमसूत्रस्य विवेचनं विद्यते। ग्रन्थानां नाम एतस्य कलिकातो मञ्जरी-तस्तथा सुस्पष्टं तत एव च स कीदृशः सरस इत्यप्यवगम्यते। आभ्यां ग्रन्थाभ्यामिदं संकेत्यते यत् कलिका लघ्वी अपि मञ्जरीरूपेण पल्लविता भवति। जयन्तस्यापि वक्तव्यमित्थमेव—

अजातरसनिस्यन्दमनोऽभिव्यक्तसौरभम् ।
न्यायस्य कलिकामात्रं जयन्तः पर्यदीदृशत् ॥

मूलतः शैवो जयन्तः। न्यायमञ्जर्याः प्रारम्भेऽन्ते च शिवस्स्तुतस्तेन। मञ्जर्या मध्यभागेऽपि पर्याप्तं प्रमाणमस्ति यच्छिवस्तस्य सर्वप्रियो देव इति। अत्र हेतुः सम्भवतः काश्मीरित्वमेव। किन्तु तथाविधस्य प्रमाणस्य नोपलब्धिर्भवति यतो निश्चीयेत यत् काश्मीरिशैवसम्प्रदायविशेषस्य कस्यायमनुयायीति।

एतस्य एषोऽपि हेतुर्भवितुमर्हति यच्छिवो नैयायिकानां सर्वप्रियो देव इति। परमार्थतो ये ज्ञानद्वारा मुक्तिमभिलषन्ति तेषां समेषां विश्वासो दृढो भवति यच्छिवे शाश्वतचरमानन्दः शाश्वतशुद्धज्ञानश्चावतिष्ठते ( नित्यानन्दात्मके शिवे ) ( नित्य-निर्मल-ज्ञाने महेश्वरे ) ब्रूते जयन्तो यदीश्वरस्य सर्वे गुणा ज्ञानवद् शाश्वन्नित्याःसन्ति। यतो हि तेषामस्तित्वाय मनो नापेक्षितं भवति। सर्वेषां पदार्थानां ज्ञानं तस्य नित्यं प्रत्यक्षञ्च प्रमाणान्तरं नापेक्षते। जयन्तो ब्रवीति यदीश्वरे ज्ञानसुखेच्छाधर्मप्रयत्नाः पञ्चगुणाः सन्ति आत्मनि च नव सन्ति गुणाः। यद्यपि ईश्वरात्मनोर्भेदो न वर्तते तयोः स्वतन्त्रं पार्थक्यं न विद्यते। तदीश्वरो योगसूत्रस्य ईश्वरसाम्यं भजते। अत एव तत्समर्थनात्र पातञ्जलग्रन्थोदाहृणं दिशति। केवलयोर्द्वयोरेव ग्रन्थयोर्लेखको जयन्तो वर्तते न्यायकलिकाया न्यायमञ्जर्याश्चेति। पूर्वमेवाभिहितं यद् न्यायकलिका अक्षपाद-न्यायसूत्रस्य प्रथमस्य एकाऽतीवसंक्षिता टीका विद्यते। एषा च सरस्वतीभवन-टेक्ससीरीजनामकसंस्थातः प्रकाशिता विद्यते न्यायमञ्जरी च द्वितीया सम्पूर्णन्याय-दर्शनमधिकृत्य स्वतन्त्रा विस्तृता बोधगम्या च रचना विद्योतते।

अस्माभिस्तु लक्षणसूत्राण्येव व्याख्यास्यन्ते। सम्पूर्णो ग्रन्थो द्वादशसु आह्निकेषु विभाजितः प्रकाशितश्च विद्यते।

धर्मकीर्त्तिमोहोल्लेखस्तत्र स्थले विद्यते यत्र जयन्तो वादन्यायस्योद्धरणं प्रस्तौति। वाणस्य वार्तिककारस्य तदीयश्लोकवार्तिकस्य भर्तृहरेश्चोल्लेखो विद्यते। एभ्यो भिन्नस्य कस्यापि राज्ञोऽपि उल्लेखोऽस्ति। 'यत्तु राजा व्याख्यातवान् उल्लेखोऽयं प्रत्यक्षविषयमधिकृत्य सांख्यकारिकाव्याख्यासम्बन्धे विद्यते। कस्येयं रचनेतिनिर्णेतु-मशक्नुवानेनापि इदमवश्यं निश्चीयते यत् स सांख्यस्य एकः शिक्षक आसीत्। ईश्वर-कृष्णरचितसांख्यकारिकायाः टीकाकारोऽप्यासीत्। वाचस्पतिमिश्रकृतसांख्यतत्त्व-कौमुद्यां द्वासप्ततितमकारिकान्तर्गतचर्चितराजवार्त्तिकग्रन्थस्तस्य रचना किम्? इदमपि ध्यातव्यमस्ति यद् यद्यपि जयन्तेन बौद्धानां पौनःपुन्येन आलोचना कृता तथापि स स्वीकुरुते यत्ते महान्तश्चिन्तकाः तार्किकाश्चासन्। 'बौद्धास्तु यद्यपि अनुमान-मार्गावगाहननैपुण्याभिमानधुरां कन्धरामुद्वहन्ति' आदि।

जैनमञ्जर्यां जैनकृता काप्येका टीका विद्यते यत्पाण्डुलिपिः कुत्रचिद् जैनभण्डारे अस्ति। पाण्डुलिपिरियं मन्ये अपूर्णेव राजते। अधुना तदीयः कियानंशः अहमदाबाद-नगरीतः प्रकाशित इति श्रूयते।

**मिश्रो वाचस्पतिः—**

मातः सरस्वति पुनः पुनरेष नत्वा
बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि ।
वाक्चेतसोर्मम तथा भव सावधाना
वाचस्पतेर्वचसि न स्खलतो यथैते ॥

ता० प० पृ० १,

अप्रतीमस्य प्रख्यातदिगन्तकीर्त्तेर्महानैयायिकस्य तर्काब्धेरुदयनाचार्यस्याभ्यर्थनयानया वाचस्पतेर्महावैदुष्यं प्रस्फुटित नितरामनितरसाधारणं निजीयामपूर्वां छटां तनुते। तस्यासाधारणपाण्डित्यप्रकर्षकर्षः कस्य शेमुषीमतो मनो नाकर्षतीति विदाङ्कुर्वन्ति सारस्वतह्रदावगाहिनो मनीषिणो हंसायमानाः क्षीरनीरविवेचका गीर्वाणवागोतप्रोतहृदयाः सहृदयाः। तज्जन्मादिविषये सत्यास्पदं किमपि गवेषणमतिदुरूहतां भजमानं निरीक्ष्य नोत्सहते हृदयं किमपि साधिकारं वक्तुं लेखितुं वा यथोदयनेन तदर्थं वागधिष्ठात्री सादरमभ्यर्थितेति पद्येनोक्तेन निश्चीयतेऽतो मयापि शब्दार्थोभयजगन्मूलपराशक्तिः सैव समाश्रीयते यतो मे स्खलनं तद्विषये स्तोकमपि न जायेत ।

तापाग्निनाशनविधौ महनीयकीर्त्ते
मातः सरस्वति सुधास्पदतामवाप्ते ।
कारुण्यजालजलदेन शिवेन सिञ्च
वाचस्पतेरनलतान्तकतां व्रजेन्न ॥

विदुषां न तिरोहितं यन्निगमानेहस एव विद्यावनी मिथिलावनिरन्यतमा व्यद्योतिष्टेति। गोतमो रहूगणो वामदेवोऽपरे च वेदमन्त्रद्रष्टारोऽनेके मेधाविनो बभूवुः। जनकयाज्ञवल्क्यादीनां पुरस्ताद् दविष्ठदेशेभ्यः कुरुपाञ्चालादिभ्यो ज्ञानपिपासवो विशेषत आध्यात्मिकविद्योपादानार्थं समाजग्मुरिति ब्राह्मणेषूपनिषत्सु च बहुर्चचितमस्ति। गार्गीमैत्रेयीप्रभृतयस्तत्त्वबुभुत्सवो जनकस्यैव मिथिलेशस्य परिषदमेत्य याज्ञवल्क्यादिभिः सार्धमाध्यात्मिकतत्त्वालोचनं चक्रुरिति विपश्चितो विदन्ति। पुराणेतिहासेष्वपि विशिष्टाखण्डपण्डितमण्डलशेमुषीमण्डिता मिथिला बभ्राजे सुस्पष्टमेतदपि नाविदितं विदुषाम्। अनन्तरं न्यायकारोऽक्षपादो गोतमोऽनेकेषां मते न्यायभाष्यकारो वात्स्यायनः पक्षिलस्वामी न्यायभाष्यटीकाकृद् भर्गो वार्तिककारो भारद्वाजोद्योतकरः शङ्करस्वामिप्रीतिचन्द्रप्रभृतयोऽनेके तार्किका नैयायिका मिथिलावनिमेवालञ्चक्रुरिति। एतादृशे बोधानलपूते महीमण्डनायमाने स्वच्छस्फटिकायमाने दिङ्मण्डले मिथिलेशपण्डितमिथिलामण्डले आचार्यानुशासनमवाप्यापि तद्भाष्यव्याकृतौ कथमप्यसमर्थः

सुरेश्वराचार्य एव वृद्धवाचस्पतिमिश्रो जन्मान्तरमुपेत्य पूर्वजन्मकृतसंकल्पसिद्धये भूयोऽपि जन्मना मिथिलावनिमलञ्चकारेति चेच्चित्रं किमत्र ?

## मिश्रस्य जन्मावनिः

मिथिलामण्डले विद्वज्जनमण्डिते ठाढीतिप्रख्याते ग्रामे वाचस्पतिमिश्रस्य जनिर्बभूव। तत्र तन्निवाससन्निकटे जीर्णतमा पुष्करिणी अधुनापि भ्राजत इति लोकमतिः। निजीयग्राम एवाध्ययनं सम्पाद्य उपेतविद्वज्जनसन्मानो विरचितानेकग्रन्थो मिश्रः श्रीनृगनरपतेः पार्श्वं गतः। तत्रैव भामती विरचिता यथा स्वयमेवोक्तवान् मिश्र :—

नृपान्तराणां मनसाप्यगम्यां
भ्रूक्षेपमात्रेण चकार कीर्त्तिम्।
कार्तस्वरासारसुपूरितार्थ-
सार्थः स्वयं शास्त्रविचक्षणश्च॥

नरेश्वरा यच्चरितानुकार-
मिच्छन्ति कर्त्तुं न च पारयन्ति।
तस्मिन् महीपे महनीयकीर्त्तौ
श्रीमन्नृगेऽकारि मया निबन्धः॥

भामत्याश्चरमा वर्णास्तथैव भ्राजन्ते—

प्रागपि भामत्यां भणितम्—

नचाद्यपि न दृश्यन्ते लीलामात्रविनिर्मितानि महाप्रासादप्रमदवनानि श्रीमन्नृगनरेन्द्राणामन्येषां मनसापि दुष्कराणि नरेश्वराणाम् ( भा० २-२-३३ )

यदा हि नगरयोषितः कुतूहलात् प्रणिहितमनसो विकसितनिःस्पन्दनयनोत्पलाः सौधमालागवाक्षकैरवनिपतिं सबलवाहनमतिचिरप्रोषितपरावृत्तं गोपुरेण निविशमानमालोकयन्तीति मिश्राणां नृपाश्रितत्वे प्रमाणान्तरमिति ( ता० पृ० ११५ )

परन्तु यत्नेऽनुष्ठितेऽपि नृगनरेशः कोऽयम्? राज्यकालश्चास्य कः? कुत्र वा नृपस्य राजधानीत्यधुनापि निश्चेतुं न शक्यते। कर्णाटाधिपान्नान्यदेवात्पूर्वमेव सिमराँवगढप्रान्ते नृपस्यास्यासीद्राजधानीति केचन मन्यन्ते। अत्र विषये महामहोपाध्याय-

पं० श्रीगङ्गानाथझामहाभागेन सांख्यतत्त्वकौमुद्या भूमिकायां 'दशशताधिकोनविंशति-तमशकाब्दकालिकमिथिलाभूपतिनान्यदेवप्राग्भूतमिथिलानरपतिकिराताधिपति राजधानी नेपालप्रान्त आसीदिति प्राचीनप्राकारशेषादिभिरनुमीयते किराताश्च नरवाहना इति प्रख्यातमेव, ततश्च 'श्रीमन्नृगेऽकारि मया निबन्धः' इति भामत्युपसंहारवचोऽपि संगच्छते। नान्यदेवात् शतद्वयवर्षाणि शतत्रयवर्षाणि वा पूर्वं कार्णाटदेशीयः कीर्त्तिवर्मणः कनिष्ठः पुत्रो नृगवर्मा मिथिलायाः कस्यचन भागस्य शासको बभूवेति प्रतिभाति।

मिश्रोऽयं दीर्घजीवी बभूव। स्वयमेव वक्ति वाचस्पतिमिश्रः—प्रायेण पञ्च-सप्ततिवर्षेस्वतिवाहितेषु अर्थतृष्णा तनूभवति ( ता० पृ० ६२-९ ) किमेतेन स्ववयसः परिचयोऽपि न ददाति? विदुषोऽस्य सन्ततिः कापि न बभूव, अत एव पत्नीतोषाय तदीयनाम्ना निजीयचरमग्रन्थं चक्रे।

## कालो मिश्रस्य :—

मिश्रमहाभागस्योद्भवकालं तन्निर्मितन्यायसूचीनिबन्धस्य चरमं पद्यं प्रमाणयति—

> न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे।
> श्रीवाचस्पतिमिश्रेण वस्वङ्कवसुवत्सरे॥

अत्रापि मृग्यो विषयो यत्पद्ये वस्वङ्कवसुवत्सरे ( ८९८ वत्सरे ) इति शकाब्दो वैक्रमाब्दो वा। केचन शकाब्दं मन्यन्ते। एवञ्चेदेष उदयनाचार्यसमकालिक इति वक्तुं शक्यते।

उदयनस्य कालो लक्षणावल्यां विराजते—

> तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः।
> वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥

फलतः ९०६ शकाब्दे लक्षणावलीं रचितवानुदयनः, एतेनानयोः केवलमष्ट-वर्षाण्येवानन्तर्यमिति तु न सामीचीन्यमञ्चति। अत एव कैश्चिद् वाचस्पतिमिश्रकालः ८९८ वैक्रमाब्द एवाभिधीयते। मिथिलावनौ शकाब्दवैक्रमाब्दव्यवहारोऽनासक्तत्वेन सर्वदैवाभवदिति न कोऽपि व्यतिकराशङ्कासर्पावसरः।

## ग्रन्थनिर्मिति :—

द्वादशदर्शनटीकाकृद् वाचस्पतिमिश्र इति परम्परया प्रसिद्धिः। तानि कानि द्वादशदर्शनानि? षडास्तिकदर्शनानि षण्णास्तिकदर्शनानीति केचन। सांख्यं योग

न्यायो वैशेषिकं पूर्वमीमांसोत्तरमीमांसा चेति षडास्तिकदर्शनानीत्यत्रापि विदुषामैकमत्ये संशीतिः। केचन ब्रुवते दार्शनिकानामास्तिकानां संख्यानियमाभावः। षड्दर्शनानीति शब्दस्य कोऽपि रूढ्यर्थो नास्तीति। नास्तिकानामपि संख्यानियमो नास्ति कथञ्चन चार्वाकं जैनं बौद्धानां प्रख्यातं भागचतुष्टयं वैभाषिकसौत्रान्तिकयोगाचारमाध्यमिक-नामकमिति षण्नास्तिकदर्शनानि। परन्त्वदोऽपि न सन्तोषदम्। वाचस्पतेर्न कोऽपि अद्यावधि चार्वाकादीनां निबन्धः प्राप्यते। किं बहुना चार्वाकसौत्रान्तिकयोगाचाराणां दर्शनानां न कश्चनापि समग्रो ग्रन्थोऽवाप्यत अधुनापि। पूर्वपक्षतयैव मतमेतेषां प्राप्यते। वाचस्पतिमिश्रकाले कश्चन समग्रो गन्थ एतेषामासीन्नवेति महान् सन्देहः। काले-काले मिश्रेणाप्यमीषां मतं खण्डितं किन्तु तेषां टीका कृता तेनेति वक्तुं नोत्महे।

आस्तिकदर्शनव्याख्यानं मिश्रस्य भ्राजते—या भामत्याः समाप्तौ तेनोक्तम्—

**यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः।**

**यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः॥**

अमीषु सप्तसु ग्रन्थेष्वपि मण्डनमिश्ररचितस्य विधिविवेकस्य मीमांसाग्रन्थस्य टीका न्यायकणिका। तत्त्वसमीक्षा शाङ्करवेदान्तग्रन्थः 'तत्त्वबिन्दुर्मीमांसकभट्टा-परनामककुमारिलमिश्रानुसारेण भर्तृहरिमण्डनमिश्रयोः स्फोटवादविवेकखण्डनात्मको मीमांसाग्रन्थः।

अयं स्वतन्त्रो ग्रन्थो न कस्यापि टीका। न्यायनिबन्धनं 'तात्पर्यटीका' न्याय-शास्त्रग्रन्थः। 'तत्त्वकौमुदी' सांख्यदर्शनग्रन्थः। योगे 'तत्त्ववैशारदी' वेदान्तनिबन्धनं 'भामती' शाङ्करभाष्यटीका। एतदतिरिक्तो 'न्यायसूचीनिबन्धो' नाम न्यायग्रन्थ एव। तथा च प्रायः पञ्चानां दर्शनानां मिश्रटीका विद्यते। अतः कानि द्वादश दर्शनानि येषां टीका मिश्रेण कृतेति चिन्तास्पदम्। एवं स्थितौ द्वादशदर्शनटीकाकारो वाचस्पति-मिश्रःकथमिति मनीषिभिर्गवेषणीयम्। सर्वतन्त्रस्वतन्त्रो वाचस्पतिरिति गीर्भ्राजते।

१. न्यायकणिका—न्यायशब्दस्य प्रयोगः पूर्वं मीमांसादर्शनायैव प्रसिद्धो बभूव। आकर्ण्यते अनुभूयते च यल्लौकिकशास्त्रीयाविगीतशिष्टव्यवहारणामनुभवाने-वानादिकालाल्लौकिकशास्त्रीयविचारेषु सिद्धान्तयन्तिस्म लोकाः। अत एव सिद्धान्ताः सूक्ष्मात्मना अल्पाक्षरात्मना च निबद्धा न्यायशब्देन प्रख्यातिं प्राप्ताः। तत्र बहुलो न्यायो विद्यते। तानेवाधारीकृत्य लौकिकः शास्त्रीयोऽपि विचारोऽद्यापि प्रवर्तमानोऽवद्योतते। मीमांसाशास्त्रं ब्रह्मसूत्राणि च तान् न्यायानेवानुवर्तन्ते। शब्दशास्त्रेऽपि यावत्य परिभाषा विद्यन्ते ता अपि न्यायानुबिद्धा एव। अतएव न्यायशब्दस्य प्रयोगो मीमांसाग्रन्थेषु बहुलमद्यापि अवलोक्यते, यथा न्यायमालाविस्तरः, न्यायरत्नाकर-प्रभृतयः। न्यायकणिका मिश्रस्य प्रथमो ग्रन्थः। अत्र स्वरचितग्रन्थस्य कस्याप्युल्लेखो न वर्तते।

२. तत्त्वसमीक्षा – मिश्रस्य ग्रन्थोऽयं द्वितीयः। इदानीमेष नोपलभ्यते। हस्तलिखितो ग्रन्थोऽयं धमदाहग्रामवासिन उपेन्द्रठक्कुरस्य पार्श्वे आसीत्किन्तु सोऽप्यधुना न प्राप्यते। कुतश्चिदपि चेदुपलब्धस्तदा महान् उपकारः स्यात्। नामान्तरमेतस्य ब्रह्मतत्त्वसमीक्षा. ब्रह्मतत्त्वपरीक्षेति।

३. तत्त्वबिन्दुः––ग्रन्थोऽयं तृतीयो मिश्रस्य। एतस्य प्रथमं मुद्रणं काशीस्थपण्डितपत्रे द्वितीयश्च अण्णामलैविश्वविद्यालयसंस्कृतग्रन्थावल्यां तृतीयं मुद्रणं पाण्डचरीनगर्यां फ्रांसदेशवासिन्या महिलया कृतम्। अत्र स्वतन्त्ररूपेण शाब्दबोधविषयकविचारे स्फोटवादिनां वैयाकरणनां नैयायिकानां भाट्टानां शबरस्वामिप्रभृतीनां च मतान्युपन्यस्य शबरस्वामिभाट्टानां चान्तिममतमेव सैद्धान्तिकं मतमित्याकल्य्य वाक्यार्थविचारं चकार वाचस्पतिः।

४. न्यायतात्पर्यटीका––तुरीयोऽयं ग्रन्थो वाचस्पतेः। उद्योतकरस्य न्यायवार्तिकस्य व्याख्यानमत्र। अस्य निर्मितौ महानायासो मिश्रस्य। निखिलदर्शनापेक्षया न्यायस्य आरम्भपद्धतिः कुतार्किकबौद्धानां पौनःपुन्येन कुतर्कप्रहारैरतिकण्टकमयी दुरूहा आसीत्। अतएव मिश्रो ब्रूते––

इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम्।
उद्योतकरगवीनामतिजरतीनां समुद्धरणात्॥

५. न्यायसूचीनिबन्धः––पञ्चमो ग्रन्थो वाचस्पतेः। ग्रन्थेऽत्र दुस्तरबौद्धकुनिबन्धपङ्कमग्नानां न्यायसूत्राणां पक्षिलस्वाम्युद्योतकरगवीनां समुद्धाराय न्यायशास्त्रबीजभूतानां सूत्राणां सुरक्षायै सारद्योतिकैका सूची वस्वङ्कवसुवत्सरे (८९८ वैक्रमाब्दे) निबद्धः मिश्रेण।

६. सांख्यतत्त्वकौमुदी—षष्ठोऽयं ग्रन्थो मिश्रस्य। एषा कौमदी ईश्वरकृष्णरचितसांख्यकारिकायास्तत्त्वकौमुदीनामिका व्याख्या।

७. तत्त्ववैशारदी—सप्तमो ग्रन्थोऽयं मिश्ररचितः। पातञ्जलयोगसूत्राणां व्यासभाषितं भाष्यं वर्तते तस्योपरि विज्ञानभिक्षुरचितं वार्तिकमन्यानि बहूनि व्याख्यानानि च विद्यन्ते। किन्तु सूत्रभाष्ययो रहस्योद्घाटने वाचस्पतिमिश्रनिर्मिता वैशारदी यथा समर्था न तथाऽन्या।

सहृदयधुरीणः कविरपि मिश्रो राजते संस्कृतरत्नाकररत्नम्––

( १ )

नमोऽस्तु जगदुत्पत्तिहेतवे वृषकेतवे।
क्लेशकर्मविपाकादिरहिताय हिताय च॥

( २ )

परामृष्टः क्लेशैः कथमपि न यो जातु भगवान्
न धर्माधर्माभ्यां त्रिभिरपि विपाकैर्न च तयोः।
परं वाचा तत्त्वं यमधिगमयत्योमिति पदं
नमस्यामो विष्णुं तममरगुरूणामपि गुरुम्॥

( ३ )

भुवनभवनस्थेमध्वंसप्रबन्धविधायिने
भवभयभिदे तुभ्यं पुरां तिसृणामपि।
क्षितिहुतवहक्षेत्रज्ञाम्भःप्रभञ्जनचन्द्रम-
स्तपनवियदित्यष्टौ मूर्त्तीर्नमो भवबिभ्रते॥

( ४ )

अज्ञानतिमिरशमनीं परदमनीं न्यायमञ्जरीं रुचिराम्।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमो गुरवे॥

( ५ )

आचार्यकृतिनिवेशनमप्यवधूतं वचोऽस्मदादीनाम्।
रथ्योदकमिव गङ्गाप्रवाहपातः पवित्रयति॥

( ६ )

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं
नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम्॥

( ७ )

निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्चभूतानि।
स्मितमेतस्य चराचरमस्य च सुप्तं महाप्रलयः॥

( ८ )

षड्भिरङ्गैरुपेताय विविधैरव्ययैरपि।
शाश्वताय नमस्कुर्मो वेदाय च भवाय च॥

( ९ )

भङ्क्त्वा वाद्यसुरेन्द्रवृन्दमखिलाविद्योपधानातिगं
येनाम्नायपयोनिधेर्नयपथा ब्रह्मामृतं प्राप्यते।
सोऽयं शाङ्करभाष्यजातविषयो वाचस्पतेः सादरं
सन्दर्भः परिभाव्यतां सुमतयः स्वार्थेषु को मत्सरः॥

( १० )

अज्ञानसागरं तीर्त्वा ब्रह्मामृतमभीप्सताम्।
नीतिनौकर्णधारेण मयाऽपूरि मनोरथः॥

( ११ )

विश्वव्यापी विश्वशक्तिः पिनाकी
विश्वेशानो विश्वकृद्विश्वमूर्त्तिः।
विश्वज्ञाता विश्वसंहारकारी
विश्वाराध्यो राधयत्वीहितं नः॥

( १२ )

नमामि धर्मविज्ञानवैराग्यैश्वर्यशालिने
निधये वाग्विशुद्धीनामक्षपादाय तायिने॥

( १३ )

संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ
तस्य फलमखिलमर्पितमेतेन प्रीयतामीशः॥

( १४ )

तत्त्वज्ञानप्रसवसुरभिर्गूढबह्वर्थजाता
सेयंमोक्षामृतमयफला सूक्तिमञ्जुप्रवाला ।
प्रत्यक्षाप्तागममयमहान्यायमूलामनोज्ञा
टीका वीरुद्भवतु कृतिनां नन्दिनी षट्पदानाम् ॥

( १५ )

क्रूराः कृतोऽञ्जलिरयं वलिरेष दत्तः
कायो मया प्रहरताऽत्र यथाभिलाषम् ।
अभ्यर्थये वितथवाङ्मयपांसुवर्षै-
र्माऽऽविलीकुरुत कीर्त्तिनदीः परेषाम् ॥

अस्य मिश्रस्य विषये काचन पुरातनोक्तिः समीचीनैव:-
शङ्करवाचस्पत्योः सदृशौ शङ्करवाचस्पती एव ॥

एकत्र सङ्कलितनव्यन्यायस्य विशिष्टः प्रारम्भो गङ्गेशोपाध्यायादेव बोध्यः। यतस्तेन प्रत्यक्षानुमानोपमानशब्दखण्डोपरि तत्त्वचिन्तामणिनामको ग्रन्थो निरमायि। परन्तु आधुनिकविचारका उदयनाचार्यादेव प्रारम्भं नव्यन्यायस्य मन्वते। न्यायतात्पर्यपरिशुद्धिः प्राचीनन्यायस्यान्तिमो ग्रन्थः। तदनन्तरं प्राचीनन्यायस्य विचारावली प्रायः प्रसुप्ता। नव्यन्यायस्य च चर्चा प्रारब्धा। गङ्गेशस्य दार्शनिके संसारे अनुपमं स्थानं विद्यते। मध्ययुगे कोऽपि नैयायिको नाभवद् यस्य च न्यायस्य प्रमाणस्य सर्वभागोपरि ईदृशो विचारो प्रस्तुतोऽभवत्। गङ्गेशस्य गर्वोक्तिरियं ख्याता यन्न्यायसिद्धान्तदीक्षागुरुरहमेव नान्यः।

अनास्वाद्य गौडीमनाराध्य गौरीं विना तन्त्रमन्त्रैर्विना शब्दचौर्यात् ।
प्रसिद्धप्रबुद्धप्रबन्धप्रवक्ता विरञ्चिप्रपञ्चे मदन्यः कविः कः ॥

राजेन्द्रनाथघोषेण उपाध्यायस्य यच्चरितं चर्चितं तदित्थम्—घोषस्योक्तिरियं यद् यत्प्रवादात्तद्विषये मया श्रुतं तदेव प्रथमं प्रस्तूयते। बाल्ये काले गङ्गेशः पितृविहीनो मातुलगेहं व्रजति। विद्याध्ययने मनोयोगाभावादत्यन्तं दुर्वृत्तः सम्पन्नः। मातुलो महापण्डितोऽपि तं शिक्षयितुमसमर्थः क्रोधाधिक्येन विद्यालयस्य कोणे एव तं स्थापयामास। यौवने जातेऽपि निरक्षरो गङ्गेशोऽवतिष्ठते। एकस्मिन् दिने अमाया निशायां युवजना ग्रामीणाः समवेता बभूवुः। युववर्गो यौवनोन्मत्तो हासपरिहास-

क्रीडायामासक्तः सन् रराज। अवसरेऽस्मिन् युववर्गस्य एकं दलं साहसपरीक्षापरिवेशे मध्यरात्रौ निकटस्थश्मशानस्थ वृक्षे मस्या चिह्नितुं निर्णीतवान्। निर्णयान्तरं कस्यापि अन्यस्य साहसाभावे गङ्गेशःस्वीकृतवान् यदहं तथा करिष्ये। मध्यनिशायां पुनः स युववर्गः कर्हिचिदुपस्थितः। मातुलपाठशालास्थछात्रस्य कस्यापि मसीपात्रं नीत्वा गङ्गेशस्तत्र जगाम। किन्तु अमाया निशा सा गङ्गेशस्य कृते कालतुल्या प्रतीता। श्मशाने कोऽपि नासीदपि तु क्षुधितशृगालश्वादीनां चीत्कारो वायोर्भयङ्करवेगश्च गङ्गेशस्य हृदि भीतिं जनयामास। प्राणभयात् स निजकुलदेवतां कालीं स्मृतवान्। निजीयां प्रतिज्ञां संस्मर्य शनैः शनैं वृक्षमारुरोह। किन्तु चित्तस्य वैकल्याद् दर्शनस्पर्शशक्तेर्विलोपाच्च तद्धस्ताद् मसीपात्रं पतितम्। क्वचनाज्ञातस्थाने चावस्थितम्। वृक्षारोहणानन्तरं मसीपात्रमनवलोकयन् गङ्गेशो चिन्तितवान् यत् पिशाचेन केनचिदपहृतं मे मसीपात्रम्। पिशाचस्य स्मरणमात्रेण पतितो वृक्षाद् गङ्गेशः काली कालीति चुक्रोश। तस्य मूर्च्छेयं न मूर्च्छा अपि तु कालचिन्तनाद्धेतोर्योगिनां समाधिमत्यशयिष्ट। गङ्गेशस्यास्मार्च्चिन्तनाज्जगन्माता तत्राविर्बभूव। दयार्द्रा काली जगाद। यत्ते आराधनयाहमतितुष्टा जन्मजन्मान्तरस्य तवापूर्वः सञ्चितो अद्य फलायावतिष्ठते वरं ब्रूहि यथेच्छं किमिच्छसि। मातुलस्य तिरस्कारं तदानीं संस्मृत्य पाण्डित्यं ततो याचितवान् गङ्गेशः। तथास्त्वित्युक्त्वा माता काली तदानीमेवान्तर्बभूव। गङ्गेशो नवं जीवनमुपेत्य गृहं प्रस्थितः। युववर्गस्य जिज्ञासाविषये मौनः सः। प्रशान्तगम्भीराननमवलोक्य स वर्गो भूयो जिज्ञासायै न यत्नं कृतवान्। प्रातर्गङ्गेशः पूर्ववद् विद्यालयस्य कोणेऽवस्थितः। यस्य मसीपात्रेण गङ्गेशस्य सिद्धिरभवत् स गङ्गेशपार्श्वमेत्य मसीपात्रं निजीयं याचितवान्। उक्तं गङ्गेशेन तत्पात्रं निहतम्। छात्रो रुष्टः सन् अध्यापकसमक्षं गङ्गेशस्य दोषमुद्घाटितवान्। मातुलेन वृषभ इत्युक्त्वा गङ्गेशस्तिरस्कृतः। तदनन्तरं गङ्गेशेन मातुलोऽभिहितः—

**किं गवि गोत्वमुतागवि गोत्वं यदि गवि गोत्वं मयि नहि तत्त्वम्।**
**अगवि च गोत्वं यदि भवदिष्टं भवति भवत्यपि सम्प्रति गोत्वम्।**

मातुलः पद्यमिदमाकर्ण्य अवाक् सन् निजासनं परित्यज्य समोदः तिरष्कृतं भागिनेयमालिङ्गितवान् समस्ता निजीया विद्या च क्रमशस्तस्मै प्रदत्ता। गङ्गेशस्य बाल्यजीवनमिदं प्रवाद इव भासते सुधियः स्वयमेव विदाङ्कुर्वन्तु।

विश्वकोषे गङ्गेशचरितं भिन्नमेव विराजते। विश्वकोषकारेणापि कथेयं प्रवादभूतैवाङ्गीकृता। गङ्गेशस्य जन्म ब्राह्मणवंशेऽभवत्। तस्य पितरौ अशिक्षितं तं मातुलगेहं प्रेषयामासतुः। प्रयासे अधिकेऽपि स न पठितवान् दुर्वृत्तश्च जातः। गङ्गेशस्य मातुलच्छात्रेण केनचिद् गङ्गेशोऽनलमानेतुं प्रेरितः। समीपस्थानेऽनलमनावाप्य समीप-

स्थारण्यं गतवान् । गत्वा चापश्यत् यदेको योगी शवोपरि साधनायां रतः । समाध्यन्ते गङ्गेशस्तस्य चरणौ निपपात । भृशं दुःखितः सन् निजीयं वृत्तमखिलं श्रावयामास । दयार्द्रो योगी गङ्गेशं नीत्वा क्वचन तदानीं गतः । गङ्गेशो बहुकालं यावन्न परावर्तितोः योगिकृपया स सर्वविद्यापारङ्गतः किन्तु गृहजनास्तं मृतमिवापश्यन् । बहुदिनान्तरं स गङ्गेशो मातुलपार्श्वमुपेतः उक्तः श्लोक एव मातुलप्रश्नसमाधाने उपस्थापितः । किन्तु अयं श्लोकः श्रीहर्षोदयनमथुरानाथप्रभृतीनां कृतेऽपि विद्वद्भिः प्रयुज्यते, अत एषापि कथा प्रवादभूतैव । किन्तु इदन्तथ्यं यद् गङ्गेशो मातुलस्य निर्जायस्यासाधारण-पाण्डित्यस्य गेहेऽवस्थितो विद्यां निखिलां प्राप्तवान् ! गङ्गेशेन निजीयः परिचय इत्थमुपस्थापितः—

अन्वीक्षानयमाकलय्य, गुरुभिर्ज्ञात्वा गुरूणां मतं
चिन्तादिव्यविलोचनेन च तयोः सारं विलोक्याखिलम् ।
तन्त्रे दोषगणेन दुर्गमतरे सिद्धान्तदीक्षागुरु-
र्गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् ॥

पद्यस्यास्य चिन्तनेन पद्यघटकविलोचनपदमहिम्ना देवदत्ता विद्या गङ्गेशस्येति निश्चीयते अन्यथा निजीयपरिश्रमस्यापि उल्लेख आवश्यक आसीत् ।

## महामहोपाध्यायगङ्गेशोपाध्यायस्य कालनिर्णयः :—

बाह्यान्तरङ्गसाक्ष्यमधिकृत्य ऐतिहासिकाः कस्यापि कालं निर्णयन्ति । नारायण-सर्वज्ञो यः सर्वज्ञनारायणनाम्नापि प्रसिद्धो यत्कृताया मनुटीकाया उल्लेख एव न अपि तु यस्य शतं वचांसि नव्यवर्द्धमानेन निजदण्डविवेकनामके ग्रन्थे उद्धृतानि । संभवतोऽयं कुल्लूकभट्टस्य समकालिक आसीत् । मिथिलावास्तव्यो दिवाकरोपाध्यायः खण्डनटीका-कारो गङ्गेशवर्द्धमानपूर्ववर्ती न्यायानेकग्रन्थविवरितासीत् । अस्य प्रसिद्धो ग्रन्थः खण्डनस्य टीका राजते । ईश्वरानुमानचिन्तामणौ गङ्गेशोपाध्यायेन तदीय एकः सन्दर्भ उपस्थाप्य खण्डितः ।

स च सन्दर्भः—"अथारणीमन्थभाववती स्तोमविशेषे तृणं विना वह्निव्यतिरेकः, तृणान्वये वह्निरित्यन्वयव्यतिरेकाभ्यां तृणादिकारणताग्रह इति चेन्न" ( त० चि० ईश्वरानुमानख० पृ० १३१ )

अस्याः पङ्क्तेर्व्याख्यायां प्रगल्भाचार्येण स्पष्टमुदीरितम्—'दिवाकरमतमाश्रयते अथेति' ( प्रगल्भी काशी अ० प्र० का० मा० १९० पृ० का १ ला पृ० )

द्रव्यकिरणावल्यामेका पङ्क्तिर्विद्यते—( सेयं पृथिवी यद्यनित्यैव स्यात्तदा अवयवानवस्था स्यात् ( काशी सं० पृ० ५० ) द्रव्यकिरणावल्याम् अस्याः पङ्क्तेर्व्याख्यानं कुर्वता आचार्यबर्द्धमानेनोक्तम्—अवयवानवस्थेति। यद्यप्यनवस्थामात्रं बीजाङ्कुर-साधारण्येन न दूषणं तथापि सर्वकार्यद्रव्यनाशात् प्रलयानन्तरं सृष्टिरिति व्यवस्थाविरह एवानवस्थेत्येके। द्व्यणुकानवयवस्यानेकद्रव्यारब्धत्वे महत्त्वं स्यादित्यर्थ इत्यन्ये ( पृ० ३५।१ किरणावलीप्रकाशः )

द्रव्यकिरणावलीप्रकाशस्य टीकां विदधता प्रगल्भाचार्येणाभिहितम्—. इत्येके प्रभाकराः ; 'इत्यन्ये दिवाकरोपाध्यायाः ( प्रगल्भ टी० पृ० १३।१ ) फलतोऽन्तर-ङ्गसाक्ष्येणामुना निश्चेतुं शक्यते यद् दिवाकरोपाध्यायेन बर्द्धमानात्पूर्वं किरणावल्या टीकैका निर्मिता। अयाचिमिश्रस्य पुत्रेण शङ्करमिश्रेण निजीयकुसुमाञ्जलिटीकायां परिमलटीकाया उल्लेखः कृतः। परिमलटीकैषा दिवाकरो-पाध्यायस्य वर्तते। अस्याः खण्डिता प्रतिलिपिः जैनभण्डागारे सुरक्षिताऽवद्योतते। दिवाकरोपाध्यायस्य सर्वश्रेष्ठो ग्रन्थो न्यायनिबन्धोद्योतोऽस्ति। ग्रन्थस्यास्य मातृका मिथिलाक्षरे विद्यते यस्या लिपिकालो लक्ष्मणसंवत् १६४ ज्येष्ठकृष्णैकादशी अर्थात् १२७२-८३ A. अस्ति। ग्रन्थान्ते दिवाकरेणोक्तं यन्मम पिता मिथिलेश्वरेण 'श्रीभाञ्जिशान्तिकरणे' पदे स्थापितोऽभवत्। अनया रीत्या दिवाकरोपाध्यायेन खण्डनखण्डखाद्यस्य टीका तथा उदयनस्य प्रसिद्धग्रन्थानां च टीका कृता।

विद्यासागरस्य कातन्त्रप्रदीपेऽभिहितं विद्यते यद् दिवाकरादिभिः संस्कारा-वच्छिन्ना बुद्धिर्जानात्यादेरर्थ इत्युक्तम्। एभिरुल्लेखैरिदं वक्तुं शक्यते यद् दिवाकरस्य कालः त्रयोदशशताब्द्याः पूर्वं नासीदपि तु त्रयोदशशताब्द्याः पूर्वार्द्धभागोऽवश्यं स्वीकर्तव्यः। यतो दिवाकरः खण्डनस्य प्राचीनतरः टीकाकारो वर्तते। अतः मतमिदं विद्यते यन्न्यायचिन्तामणे रचयिता गङ्गेशो द्वादशशताब्ध्यामभवदित्युक्तविचारमधिकृत्य मान्यं न प्रतिभाति। इत्थं मतमिदमपि मान्यतां नावलम्बते यद् गङ्गेशकालः ११५०-१२०० A. D. विद्यते। यतो हि गङ्गेशवर्धमानाभ्यां निजीये ग्रन्थे दिवाकर-सिद्धान्त उल्लिखितः, यस्य कालः कस्यांचनापि अवस्थायां त्रयोदशशताब्दीतः पूर्वं नाङ्गीकरणीयो भवति। चिन्तामणिटीकाकारस्य जयदेवस्य कालो द्वादशशताब्द्यग्रे न विद्यते। इदञ्च जयदेवस्य प्रत्यक्षालोकावलोकनेन सुस्पष्टम्।

इत्थमेव राजधर्मस्य मान्यविदुषो न्यायरत्नकृतो मणिकण्ठस्यापि मतं गङ्गेशेनो-द्धृतम्। त्रयोदशशताब्द्यां जातो मणिकण्ठो गङ्गेशस्य पूर्ववर्ती आसीत्। मणिकण्ठ-मिश्रेण खण्डनस्य तरणिमिश्रेण च रत्नकोषस्य रचना कृता। तरणिमिश्रो मणिकण्ठ-मिश्रश्च गङ्गेशपूर्वकालिकौ। मणिकण्ठस्य भाषा विचारशैली च बहुत्र स्थले गङ्गेशसमाना राजते। मणिकण्ठकृताया निग्रहस्थानस्य विशदव्याख्याया उपेक्षां चकार गङ्गेशः।

टीकायां नयनप्रसादिन्यां तदानीन्तनानां समग्राणामाचार्याणां प्रकरणानाञ्चोल्लेखोऽवाप्यते किन्तु गङ्गेशस्य वर्धमानस्य वा नाम तत्र कुत्रापि न निर्दिष्टम्। अपरत्र वर्धमानेन गुणकिरणावलिप्रकाशे 'अत आहुः' (गुणकिरणावलिप्रकाश पृ० ५१) एतद्द्वारा भट्टवादीन्द्रस्य प्रमाणद्वयस्य परिष्कृतोऽनुवादो व्याख्यानं च कृतम्। मणिकण्ठस्य कालः त्रयोदशशताब्द्याश्चरमो भाग इत्यत्र नास्ति संशीतिः।

हरिनाथोपाध्यायो गङ्गेशस्य निकटतम पूर्ववर्ती आसीत्। यतो गङ्गेशेन तत्त्वचिन्तामणिशब्दखण्डस्य विधिवादभागे 'अपरे तु अनभिसंहितनरान्तरव्यापारमद्वारीकृत्य मरणसाधनं हिंसा' एतत्पङ्क्तेर्व्याख्याने मथुरानाथतर्कवागीशेन स्पष्टमुदीरितं यद् गङ्गेशेन हरिनाथोपाध्यायस्य मतमिदमुद्धृतम्। एतावदेव न हि हरिदासन्यायालङ्कारोऽपि निजीयशब्दमणिप्रकाशग्रन्थे वक्ति 'हरिनाथमतमाह' हरिनाथोपाध्यायरचितस्मृतिसारग्रन्थस्य प्रायश्चित्तप्रकरणे 'अथ वधः' एकं प्रकरणमवाप्यते। प्रकरणेऽत्र गङ्गेशोद्धृतानि वाक्यानि अविकलानि उपलब्धानि सन्ति। किन्तु गङ्गेशेन वधशब्दं परावर्त्य हिंसाशब्दः प्रयुक्तः। विवेचनेनानेन प्रतिभाति यद्धरिनाथोध्यायो गङ्गेशपूर्ववर्त्ती विद्यते। एतस्यैव हरिनाथस्य स्मृतिसारग्रन्थे हरिहरस्य गणेश्वरस्य च नामावाप्यते। अस्य समयश्चतुर्दशशताब्द्याः पूर्वार्धभागो विद्यते। किन्तु दिनेशभट्टाचार्यदृष्ट्या अयं कालो नोचित इति। नेपाले स्मृतिसारग्रन्थ उपलभ्यते यः २४१ लक्ष्मणसंवत्सरे लिखितः। हरिनाथस्य द्वितीयग्रन्थो न्यायरत्नं वाचस्पतिमिश्रो निजीये द्वैतनिर्णये षडविंशतिपृष्ठे ग्रन्थस्यास्योल्लेखं कृतवान्। न्यायरत्ने हरिनाथमहामहोपाध्यायः। अयं हरिनाथचण्डेश्वरात् पूर्ववर्ती आसीत्।

चण्डेश्वरस्य कालः १३३० तः १३७० ईशवीयवत्सरो बुद्धावौचित्यमञ्चति। अयं हरिनाथो हरिहरमिश्राद् भिन्नोऽस्ति। अयमेव महामहोपाध्यायो हरिनाथः पञ्जीप्रबन्धरचनाया मूलं कारणमासीत्। इतः पूर्वं पञ्जीप्रबन्धो व्यक्तो नासीत्। प्राध्यापक श्रीरमानाथ झोपाह्वमहोदयस्यांशेऽत्र महत्त्वपूर्णं स्थानं विद्यते। यतो हि तस्य सत्प्रयासेनैव अनेकेषां मैथिलविदुषां प्रामाणिकं विवरणमुपलब्धम्। शाण्डिल्यगोत्रोऽयं हरिनाथः। गङ्गौरमूलग्रामीणवंशस्य बीजीशाश्वतप्रपौत्र विन्दोर्ज्येष्ठपुत्रस्य विश्वनाथस्य षट् पुत्रा आसन्। तत्र तृतीयो हरिनाथः। गङ्गौरवंशस्य सप्तसु पुरुषेषु हरिनाथ एव महामहोपाध्यायोपाधिना विभूषितः। हरिनाथो विन्दोः कनिष्ठपुत्रदेवनाथस्य पुत्रस्य नयनाथस्य दौहित्रीं पत्नीत्वेनालङ्कृतवान्। अयमेव अशास्त्रीयो विवाहः पञ्जीप्रबन्धस्य प्रवर्तको वर्तते। पञ्जीप्रबन्धस्य प्रारम्भे एकः श्लोक उपलभ्यते—

**गङ्गौरे नयनाथकस्य दुहिता तस्यास्तु तारापते-**
**श्चोद्वाहो मटिहानिसंज्ञकद्विजस्तत्कन्यका वै पुनः।**

गङ्गौरे हरिनाथकस्य गृहिणी कन्या तु सा पञ्चमी-
विन्दुतो गणनावशात्तु स्वजनासम्बन्धचाण्डालिनी ॥

एतद्दिशा हरिनाथस्य कालश्चतुर्दशशताब्द्याः पूर्वार्धभागः प्रतीयते। फलतः गङ्गेशस्य कालश्चतुर्दशशताब्द्याः पूवार्धस्य शेषभागो मन्तव्यः। कस्यापि कालनिर्णये उद्धृतानां प्रमाणानां दिशि अग्रिमस्य कालस्य सीमानिर्धारणेनैव ऐतिहासिकानां तोषो न जायते। तदर्थं तैर्व्यतीतपूर्वकालिकसीमाऽपि प्रामाणिकदृष्ट्या प्रस्तूयते।

गङ्गेशो निजीये तत्त्वचिन्तामणिग्रन्थे मङ्गलवादस्य सिद्धान्तपक्षं प्रस्तुवन् ब्रूते-'यदि च निर्विघ्नं समाप्यतामिति कामनया तदाचरणं तदापि नागृहीतविशेषणजन्या येनाहं कृतिं स्यामित्यत्र स्वर्गं इव विघ्नाभाव एव फलम्' ( तत्त्वचिन्तामणि पृ० ४३ दरभङ्गासंस्करणम् ) अस्य व्याख्यायां पक्षधरमिश्रो निजीये आलोके लिखति—इह विघ्नो माभूदित्यत्रेदमंशस्यापि विशेषणत्वान्न्यायसाम्यमिति तु दर्पणदूषणं युक्ति-सम्भवमेव। इदन्त्वस्य प्रतियोगिनि विघ्ने विशेषणत्वं न तु तदभावे ( आलोक पृ० ४३) इदं सत्यं यदालोकदर्पणस्य रचना महेशठाकुरमहाशयेन कृता। यो दरभङ्गराजवं-शस्यादी राजा विद्यते। अत आलोके दर्पणस्य नाम विद्यते, किन्तु महाराजमहेशठाकुर-कृत-दर्पणस्य चर्चा नास्ति। यतो रचनेयं तदुत्तरकालस्यास्ति।

गङ्गेशोहितग्रन्थविषये दोषदो दर्पणकारः क इति विचारणीयविषयो विद्यते। उपाध्यायनरहरिकृते ( प्रत्यक्षदूषणोद्धारग्रन्थे ) लिखितमस्ति 'तदापि नागृहीतेति। बृद्धप्रपितामहवटेश्वरोपाध्यायचरणाः। इदं विलिख्य (दूषणमाहुः) मिथिलाया अत्यन्त-प्रसिद्धमाण्डरवंशे वटेश्वरस्य मेधाविनो जन्म तथा पञ्जीप्रबन्धे तस्य पारिवारिक-वृत्तान्तश्चोपलब्धः। शङ्करमिश्रस्य पिता अयाची मिश्रः। भवनाथो वटेश्वरस्य दौहित्रः। शङ्करमिश्रस्य कालश्चतुर्दशशताब्दी विद्यते। अयं भवनाथस्य प्रथमपत्न्या भवान्या ज्येष्ठपुत्र आसीत्। अतो वटेश्वरस्य कालः कस्यामपि दशायां त्रयोदशशताब्द्याः पूर्वं न वक्तुं शक्यते।

पक्षधरमिश्रप्रगल्भमिश्रप्रभृतिभिरस्य नाम निर्दिशद्भिरस्य दोषा अपि निर्दिष्टाः। अतः अस्य कालः १४५० तः पूर्वं भवितुं नार्हति।

कथञ्चिदपि वृद्धप्रपितामह-वटेश्वरस्य जन्म १२९० तः पूर्वं न संभवम्। अत इदं मन्तव्यं यद् १३५०-७५ मध्यकाले वटेश्वरेण गङ्गेशस्य युक्तौ दोष उद्भासितः। अतः गङ्गेशस्य कालः चतुर्दशशताब्द्याः पूर्वार्द्धभाग एवाङ्गीकरणीयः। इत्थमेव तत्पुत्रस्य वर्धमानस्यापि कालश्चतुर्दशशताब्दी वक्तुं शक्यते। यतो वर्धमानो गङ्गेशस्य पुत्रः शिष्यश्चासीत्। अयं स एव बर्द्धमानो येन अनेकटीकानिर्माणद्वारा अभिनवस्य

सम्प्रदायस्यावतारणा कृता। यद्यपि तस्य टीका प्रकाशनाम्ना प्रसिद्धा किन्तु तद्-गहनपाण्डित्यप्रभावमालोच्य तदानीन्तनैस्तस्य टीकाया उपायनाम्ना प्रचारो विहितः। एतस्मादेव कारणाद् अनेकेषु वादग्रन्थेषु पञ्जीप्रबन्धे चायमुपायकारकपदं लब्धवान्।

## गङ्गेशवैभवपरिचयः

सौभाग्यमस्माकं यद् गङ्गेशोपाध्यायस्य तत्पुत्रवर्द्धमानस्य च समग्रः परिचयः पञ्जीप्रबन्धे आकलितो द्योतते।

परन्तु इदमपि सुस्पष्टं यद् मिथिलायाः सामाजिकमर्यादादृष्टया गङ्गेश उत्तमश्रेणीकेषु ब्राह्मणेषु परिगणितो नासीत्। काश्यपगोत्रीयच्छादननामके वंशे गङ्गेशो जन्म गृहीतवान्। वर्द्धमानः कुसुमाञ्जलिप्रकाशे स्वयं लिखति—

गोत्रं काश्यपादि (कुसुमाञ्जलिप्रकाश पृ० ७) वंशोऽयं बहुकालं यावद् विलुप्त आसीत्। अत एव पञ्जीप्रबन्धे वंशस्यास्य धारावाहिकवंशावलिर्नोपलभ्यते। गङ्गेशस्य वर्द्धमानस्य च नाम अन्यप्रसिद्धवंशविवरणे प्रसङ्गतोऽभिहितं विद्यते। गङ्गेशस्य विषये तत्र चर्चितमिदं यन्महामहोपाध्यायस्तत्त्वचिन्तामणिकारः परम-गुरुर्गङ्गेश्वरस्तथास्माकं गण्यस्तत्पुत्रो वर्द्धमानश्च महामहोपाध्यायविशेषणविशिष्ट उपायकारकश्च द्योतते। मिथिलापञ्जीप्रबन्धे पण्डितद्वयस्यैव विशेषणं परमगुरुरिति विद्योतते तौ च पण्डितौ–गङ्गेशोपाध्याय–वाचस्पतिमिश्रावेव। गङ्गेशदुहितुर्विवाहः सम्भ्रान्तवमभनियामवंशे। तस्य दौहित्ररत्नाकरस्य विस्तृतविवरणं प्राप्तं भ्राजते। रत्नाकरस्य अनेके विवाहा आसन्। तस्य सर्वतः कनिष्ठा पत्नी जजिवालवंशीय-गुणिश्वरस्य पुत्री आसीत्। गुणिश्वरस्य च विवाहो गढविशपीवंशीयभाण्डागारिक-जटेश्वरस्य पौत्र्या सहाभवत्। फलतो गुणिश्वरस्य श्वशुरो रत्नाकरकारस्य सुप्रसिद्ध-चण्डेश्वरस्य पितृव्यस्य पुत्र आसीत्। चण्डेश्वरः १३१४ ईशवीये वर्षे तुलापुरुषमददत्। १३७० ईशवीये वर्षे राजनीतिरत्नाकरस्य रचनां चकार। अतस्तस्य जन्मकालः १३७५ ईशवीयवर्षतः पूर्वं न मन्तव्यो विद्यते। चडेश्वरस्य पितुरनेके भ्रातर आसन्। तस्य पिता वीरेश्वरः सर्वतः श्रेष्ठो भ्रातासीत्। विद्यापतेः प्रपितामहो धीरेश्वरः तृतीयो जटेश्वरश्चतुर्थश्चासीत्।

## महामहोपाध्यायगङ्गेशविरचितो ग्रन्थः—

महापण्डितस्यास्यानेकग्रन्थसादृश्यं भजमानो रत्नाकर इव एक एव ग्रन्थस्तत्त्व-चिन्तामणिर्विद्वत्समाजे चकास्ति। वस्तुतस्तु अनुपम एवायं बोधराशिर्ग्रन्थः।

तत्पुत्रवर्द्धमानोपाध्यायस्यानेके ग्रन्थाः—

१. अन्वीक्षानयतत्त्वबोधः ( गोतमसूत्रस्य टीका )
२. न्यायनिबन्धप्रकाशः ( उदयनकृतपरिशुद्धेष्टीका )
३. न्यायपरिशिष्टप्रकाशः ( उदयनस्य टीका )
४. कुसुमाञ्जलिप्रकाशः
५. किरणावलिप्रकाशः
६. खण्डनप्रकाशः
७. खण्डनोद्धारः
८. बौद्धाधिकारप्रकाशः
९. तर्कप्रकाशः
१०. स्मृतिपरिभाषा
११. श्राद्धप्रदीपः
१२. आचारप्रदीपः

न्यायशास्त्रप्रणेतुर्भगवतो महर्षेर्गोतमस्य चरितमेवं ब्रुवते केचन—

यद्यपि गोतमादीनां चरितं पूर्वैश्चर्चितन्तथाप्यत्र न्यायशास्त्रप्रणेता भगवान् महर्षिर्गोतमः। मन्त्रद्रष्टृत्वमृषित्वमितिसामान्यलक्षणं मन्त्रद्रष्टृत्वे सति महद्दर्शित्वं महर्षित्वं तथा च वक्ष्यमाणरीत्या ऋग्वेदादिसूक्तद्रष्टृत्वात् तत्त्वज्ञानान्निःश्रेयसाधिगम इत्यादिशास्त्रकर्तृत्वेन महद्दर्शित्वाल्लक्षणसमन्वयः—

ऋषीत्येष गतौ धातुः श्रुतौ सत्ये तपस्यथ।
एतत्सन्नियते तस्मिन् ब्रह्मणा स ऋषिः स्मृतः॥
( वायु. पु. पूर्वार्धे अ. ५९ श्लो. ७९ )

यस्मान्न हन्यते मानैर्महान् परिगतः पुरः।
यस्माद्दृषन्ति ये धीरा महान्तं सर्वतो गुणैः॥
तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः॥८२॥

विस्तरस्तु तत्रैवाथ मत्स्यपुराणे १४४ अध्यायेऽप्यनुसन्धेयः। ऋषिलक्षणं तेषां चातुर्विध्यमुक्त सम्प्रदायविद्भिः—यथा

ऋषीणाम् ऋषिपुत्राणामृषिकाणां स्वयम्भुवाम्।
तथा नामाभिजानीयाद् यथैषां मन्त्रदृष्टयः॥

प्रवरैर्ये समाख्याता ऋषयस्त इति श्रुतिः ।
तत्पुत्रपौत्रनप्तार ऋषिपुत्रा इति स्मृताः ॥
राजन्यवैश्या ऋषिकास्त्रियस्तास्तिर्यग्योनयः ।
देवोऽदेवोऽप्सरो नद्यो गन्धर्वास्ते स्वयम्भुवः ॥ इति

गोतमोऽयं महर्षिः कस्मिन् काले कस्मिन् देशे कस्यां दिशायां जनिं लब्धवानितिनिर्णयस्तु दूरतां ययौ तस्य नाम्नि एव विमतिर्वर्तते । स गोतमो गौतमो वा ? अवलोक्यते चानेकस्थलेषु गोतमो वहुत्र च गौतम इति ।

मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम् ।
गोतमं तमवेत्यैव यथा वित्थ तथैव सः ।
( नै० स० १७ श्लोक ७५ )

महाविदुषा अलौकिकविद्यावैभवशालिना श्रीहर्षेण गोतमत्वेनावलोकितः सः ।

यः सचेतसां चैतन्यवतां सुखदुःखाद्यनुभवाभावात् शिलात्वाय पाषाणावस्थायै मुक्तये मुक्ति प्रतिपादयितुं शास्त्रमूचे न्यायदर्शनं निर्ममे यूयं तं स्वयमेव अवेत्य विचार्यैव गोतमम् एतन्नामानं मुनिं यथा वित्थ जानीथ स एव तथा नान्य इत्यर्थः । स गोतमो यथा युष्माकं संमतस्तथा ममापीत्यर्थः । नायं परं नाम्ना गोतमः किन्तु प्रकृष्टो गौर्गोतमो महावृषभः पशुरेव इति भगीरथादयष्टीकाकाराः ।

श्रीहर्षेण निजकपोलकल्पनया नोक्तमिदं किन्तु चार्वाकोक्तिरेवाक्षरशोऽनूदिता । चार्वाकस्य कथा तु महाभारते शान्तिपर्वणि राजधर्मे ३८-३९ अध्याये विस्तरेण वराजते । यथा—वैशम्पायन उवाच—

ततस्तत्र तु राजानं तिष्ठन्तं भ्रातृभिः सह ।
उवाच देवकीपुत्रः सर्वदर्शी जनार्दनः ॥

वासुदेव उवाच—

ब्राह्मणास्तात लोकेऽस्मिन् अर्चनीयाः सदा मम ।
एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ॥
पुरा कृतयुगे राजंश्चार्वाको नाम राक्षसः ।
तपस्तेपे महाबाहो बदर्यां बहुवार्षिकम् ॥

वरेण छन्द्यमानश्च ब्रह्मणा च पुनः पुनः ।
अभयं सर्वभूतेभ्यो वरयामास भारत ॥

द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम् ।
अभयं सर्वभूतेभ्यो ददौ तस्मै जगत्पतिः ॥

स तु लब्धवरः पापो देवानमितविक्रमः ।
राक्षसस्तापयामास तीव्रकर्मा महाबलः ॥ इत्युपक्रम्य

स एव निहतः शेते ब्रह्मदण्डेन राक्षसः ।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥ इत्युक्तम्

अत्र केचिद् बृहस्पतिशिष्य एकश्चार्वाको दुर्योधनसखः (धूर्त्तः) राक्षसश्चार्वाकोऽपर इति चार्वाकद्वयं निर्मूलं कल्पयन्ति । तथात्वेऽपि वेदादिनिन्दकस्य न्यायकर्तृगोतमनिरूपकस्य चार्वाकस्य नलकथाप्रसङ्गे निरूपणान्महाभारतेऽस्य निरूपणं नासम्भवीति मन्तव्यम् ।

अपि च शान्तिपर्वणि मोक्षधर्मे १८६ अध्याये भारद्वाज उवाच —

यदि प्राणयते वायुर्वायुरेव विचेष्टते
श्वसित्याभाषते चैवं तस्माज्जीवो निरर्थकः ॥

अत्र नीलकण्ठष्टीकाकारः--नित्यं समिध्यत इति जीवस्यानौपाधिकं रूपं दीप्यत इत्युक्तं तल्लोकायतमते स्थित्वा आक्षिपति । यदीति । एवमेव २१८ अध्याये २३ तमे श्लोके लोकायतमतसञ्चारः कृतः 'दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके' इत्यादिना ।

चार्वाकः--चारुर्लोकसम्मतो वाको वाक्यं यस्य पृषोदरादित्वात्साधुः । अत एव तस्य चार्वाकमतस्य लोकायतमित्यन्वर्थपरं नामधेयमिति सर्वदर्शनसंग्रहे चार्वाकदर्शने माधवाचार्येणोक्तत्वाच् चार्वाको लौकायतिकश्चैक एवेति ।

अपरे तु अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥ इति
'त्रयो वेदस्य कर्तारो धूर्त्तभण्डनिशाचराः'

इत्यादीन्यपि च वदतश्चार्वाकराक्षसस्यैवेदमपि 'मुक्तये यः शिलात्वायेत्यादिवचनमित्यविज्ञाय न्यायशास्त्रस्य वास्तविकनिन्दायां तत् प्रमाणयन्ति तत्तूपहासास्पदं राक्षसोक्तत्वेन शिष्टापरिगृहीतत्वात्। न चैवं रीत्या गोतमनामाप्युपहासास्पदमित्युच्यतामिति वाच्यं वेदानां वेदसंज्ञयैव अग्निहोत्रस्याग्निहोत्रसञ्ज्ञयैवोच्चरितत्वात्। यथा च अग्निहोत्रत्रिदण्डभस्मधारणादीनां बुद्धिपौरुषहीनानां जीविकात्वेन व्यवस्थापनं कृतं तथैव गोतममहर्षेर्गोतमत्वं व्यवस्थापितं महापशुत्वमिति यावत् तस्य गोतम इति नाम्नि तत्र सम्भवतीति तात्पर्यम्।

अत्र महाभारते राजधर्मे युधिष्ठिरस्य राज्याभिषेकसमये चार्वाकः समायातश्चार्वाकाद् बहु कालपूर्वो महर्षिर्गोतम इति लौकिकानां मते निर्णयो भवितुमर्हतीति।

स च समय 'आसन् मघासु मुनयः शासति पृथिवीं युधिष्ठिरे नृपतौ' इत्यादिबृहत्संहितावचनेन यदा सप्तर्षयो मघानक्षत्रे स्थितास्तदेति ५४०० गतवर्षासन्ने सम्भवतीति गणितशास्त्रानुसारेण ऐतिहासिकवृत्तेन च न्यायदर्शनभाष्यकारवात्स्यायनचरितेऽत्रैव निपुणतरमुपपादनीयं स्यात्।

न्यायसूत्रवृत्तावप्यन्ते—

एषा मुनिप्रवरगोतमसूत्रवृत्तिः
श्रीविश्वनाथकृतिना सुगमाल्पवर्णा।
श्रीकृष्णचन्द्रचरणाम्बुजचञ्चरीक-
श्रीमच्छिरोमणिवचःप्रचयैरकारि॥

इतिनैयायिकप्रवरेण विश्वनाथपञ्चाननेनोक्तत्वादपि तस्य गोतमनामेति प्रतीयते। (पूनानगर) पुण्यग्रामलिखितं पुरातनमेकं परिशुद्धं पुस्तकं वर्तते तत्राप्ययमेव पाठस्तथा 'इण्डिया आफिसलाइब्रेरीपुस्तकालये वर्तमाने लिखितपुस्तकेऽपि एवं १८२८ इसवीयवर्षे कलिकातानगरे मुद्रितेऽपि पुस्तके। नवीने तु क्वचित् शोधकप्रमादाद् 'गौतमसूत्रवृत्तिरिति जातम्।

वेदादिभाष्यकर्त्रा श्रीमाधवाचार्येणापि सर्वदर्शनसंग्रहेऽक्षपाददर्शने 'तत्र प्रथमाध्यायस्य प्रथमाह्निके भगवता गोतमेन प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाये'त्याद्युक्तत्वाद् श्रीजयनारायणतर्कपञ्चाननेन च वैशेषिकसूत्रविवृत्याद्यनेकनिबन्धकारेण वङ्गदेशस्थ एसिआटिक् सोसाइटीद्वारा मुद्रिते न्यायदर्शनपुस्तके 'गोतममनिप्रणीतं न्यायदर्शनम्' इति लिखितत्वात् श्रीतारानाथतर्कवाचस्पतिभट्टाचार्येणापि वाचस्पत्ये बृहदभिधाने न्यायशब्दे न्यायशास्त्रस्य गोतमप्रणीतत्वेनैवावधारणाद् गोतम इत्येव नाम निर्णीतम्।

अयञ्च गोतमः पुरोहितत्वेन सूक्तकर्तृत्वेन वा ऋग्वेदसंहितातद्भाष्याथर्ववेद-संहिताशतपथब्राह्मणादिषु अनेकेषु स्थलेषूक्त इत्यस्य कालादिनिर्णये वेदा एव प्रमाणानि। तथा हि—

ऋग्वेदसंहितायाम् १ अष्टके ५ अध्याये ६२ सूक्ते—

सनायते गोतम इन्द्र नव्यमतक्षद् ब्रह्म हरियोजनाय।
सुनीथाय नः शवसान नोधाः प्रातर्मक्षूधियावसुर्जगम्यात्॥

एवमेव ७७-७८ सूक्तयोरपि।

अथर्ववेदसंहितायाम् ४ काण्डे ६ अनुवाके १८ काण्डे ३ अनुवाकेऽपि गोतमस्य चर्चाऽवाप्यते।

माध्यन्दिनीये शतपथब्राह्मणे १ काण्डे ४ अध्याये—

'विदेघो ह माधवोऽग्निं वैश्वानरं मुखे बभार तस्य गोतमो रहूगण ऋषिः पुरोहित आस तस्मै ह स्मामन्त्र्यमाणो न प्रतिशृणोति तन्मेऽग्निर्वैश्वानरो मुखान्निष्पद्याताऽइति'। एवमग्रेऽपि तस्मिन्नध्याये।

ऋग्वेदसंहिताभाष्ये प्रथमाष्टके ५ अध्याये २१ वर्गे। "त्रयोदशानुवाके एकादश-सूक्तानि तत्रोपप्रयन्त इति नवर्चं प्रथमं सूक्तं तत्रानुक्रम्यते उपप्रयन्तो नवगोतमो रहूगणो गायत्रं त्विति। अस्यायमभिप्रायः—रहूगणनामा कश्चिदृषिस्तस्य पुत्रो गोतमोऽस्य सूक्तस्य ऋषिरित्यादि। अपि च यजुर्वेदीयकाठकोपनिषदि ५ वल्ल्याम्। छान्दोग्योपनिषदि ४ प्रपाठके ४ खण्डे ५ प्रपाठके ३।४।५।६।७।१६ खण्डेषु। बृहदारण्यकेऽपि ४ अध्याये ६ ब्राह्मणे गोतमस्य चर्चाया विद्यमानत्वान्निश्चितं भवति, गोतमस्यापत्यं गौतमः 'ऋष्यन्धकवृष्णिकुरुभ्यश्च (पा० अ० ४ पा० १ सू० ११४) इत्यनेन अण्प्रत्यये कृते गोतमं विना गौतमस्यासम्भवाद् गोतम एव मूलपुरुषः।

अतएव बृहदारण्यकोपनिषदि ५ अध्याये ७ ब्राह्मणे 'सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकाश्च यो वै तत् काप्यं सूत्रं विद्यात् तञ्चान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्वविदित्युपक्रम्य 'स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतमसूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति' इत्युक्तम्। अत्र शाङ्करभाष्ये 'गौतमेति गोत्रतः' इत्युक्तम्। अन्ये तु अस्यामेवोनिषदि ४ अ० २ ब्राह्म० 'इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज' इत्यत्र गोतमशब्दवदत्रापि गोतम एवेत्याहुः।

यद्यपि नैषधचरितश्लोके शास्त्रमित्येवोक्तं न तु न्यायशास्त्रमिति तथापि भगीरथनृहरिनारायणलक्ष्मणप्रभृतितट्टीकाकारैः 'शास्त्रं न्यायदर्शनम्' 'तदत्यन्त-विमोक्षोऽपवर्गः' इति सूत्रेण इत्यस्यैवोक्तत्वाद् गोतमकृतस्य अस्यैव न्यायशास्त्रस्य ग्रहणम् ।

अपि च गोतमान्तरेण कृतमर्वाचीनमिदं न्यायशास्त्रमित्यपि न भ्रमितव्यम् । विश्वनाथपञ्चाननेन न्यायसूत्रवृत्तौ प्रथमाध्याये प्रथमसूत्रव्याख्याने न्यायस्य सर्व-शास्त्रोत्तमत्वसाधनप्रस्तावे 'तथा च न्यायो मीमांसाधर्मशास्त्राणीति श्रुतिरित्युक्तत्वात् ।

मुण्डकोपनिषदि प्रथममुण्डके 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च तत्र परा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति इतिहासः पुराणं न्यायो मीमांसा धर्मशास्त्रमित्यपरा यथा तदक्षरमधिगम्यते' युक्तश्चायमन्यासूपनिषत्सु मन्वादिस्मृष्वपि तथा पातञ्जले व्याकरणमहाभाष्ये च इतिहासपुराणन्यायमीमांसादीनां परिकीर्तनात् शिक्षाद्यङ्ग-सहितानामुपनिषद्गर्भाणां चतुर्णां वेदानां परविद्यात्वं सर्वोत्कृष्टत्वं न्यायाद्युपाङ्ग-सहितानामितिहासपुराणानां वेदोपबृंहणरूपाणामपरात्वमिति विभागस्याप्यन्वर्थत्वाच्च । मुद्रितमुण्डकोपनिषदि तथापाठाभावात् स चांशो निपतित इति प्रतिभाति । ऋग्वेदीय-चरणव्यूहे तथा यजुर्वेदीयचरणव्यूहेऽपि दृश्यते । तथाहि-'तस्मात्साङ्गमधीत्यैव ब्रह्म-लोके महीयते । तथा प्रतिपदमनुपदं छन्दोभाषा धर्मो मीमांसान्यायतर्काः इत्युपाङ्गानि' जीर्णे प्राचीने लिखिते चरणव्यूहपुस्तकेऽपि अयं पाठो विद्यते । तत्र लेखकेन लिपिकाल एवं लिखितः स्वस्ति संवत् १६४२ वर्षे माघ बदि १२ शनौ पञ्चोलीहापैया पठनार्थं द्विजजनचरणपांशुधूसरमौलिना महादेवेन कृष्णार्पणबुद्ध्या लिखितम् ।

वेदे न्यायशब्दोपादानान्न्यायस्यातिचिरकालावस्थायित्वात् तत्कर्तुर्गोतमस्या-प्यतिचिरकालावस्थायित्वं निर्विवादमेव । अत्र श्रुतौ मीमांसाधर्मशास्त्रयोः साक्षादु-क्तत्वान्न्यायशब्दवाच्ययोरपि तयोर्ग्रहणं न सम्भवति । तस्मान्न्यायशास्त्रस्य ऋग्वेदसंहिताशतपथब्राह्मणयजुर्वेदीयकाठकोपनिषत्सामवेदीयच्छान्दोग्योपनिषत्प्रतिपादित गोतमप्रणीतत्वे नासमञ्जसमिति ।

केचित्तु वायुपुराणीयगयामाहात्म्ये २ अध्याये—

'ब्रह्मा संभृतसंभारो मानसानृत्विजोऽसृजत्' इत्युपक्रम्य

'सुकपालं गौतमश्च तथा वेदशिरोव्रतम्' इत्युक्तं वचनमवलम्ब्य श्वेतवाराह-कल्पे गोतमस्य ब्रह्मणः पुत्रत्वं वदन्ति तथात्वे—

क्षीरोदार्णवसम्भूतलक्ष्मीबन्धो निशाकर ।
गृहाणार्घ्यं मया दत्तं गणेशप्रीतिवर्द्धनम् ॥

इति गणेशचतुर्थीव्रतकथायां दर्शनाच्चन्द्रमसः समुद्राद्रुत्पत्तिः । अपि च—

'नेत्राभ्यां वारि सुस्राव दशधा द्योतयद् दिशः ।
तद्गर्भविधिना हृष्टा दिशो देव्यो दधुस्तदा ॥
समेत्य धारयामासुर्न च ताः समशक्नुवन् ॥

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः ॥
पपात भासयल्ँलोकाञ्छीतांशुः सर्वभावनः ॥ इति हरिवंशाद् ।

अत्रेर्महर्षेर्नेत्रादुत्पत्तिः अस्य च समन्वयः कल्पभेदाद् भवतीति गोतमोत्पत्तावपि तथैव समन्वयः कार्य इति । गयामाहात्म्ये मुद्रिते तु गोतमं चेति दृश्यते । एतदनुकूलान्येव वचनानि पुराणेष्वपि उपलभ्यन्ते तथाहि पद्मपुराणे उत्तरखण्डे २६२ अध्याये—

कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।
गोतमेन तथा न्यायं सांख्यं तु कपिलेन वै ॥

अपरोऽपि गोतमो मत्स्यपुराणे ४८ अध्याये निरुपितः । अयं च उशिजान्महर्षेर्ममतागर्भे स्थिता बृहस्पतिशापाद् दीर्घतमा नाम ( अन्धः ) ऋषिरभूत् पुनः सुरभेरनुग्रहाद् गोभिस्तमो ध्वस्तं यस्येति निरुक्त्या गोतमः सञ्जातः ।

महाभारते आदिपर्वणि १०४-१०५ अध्याये दीर्घतमसो गोतमस्योत्पत्तिः । गौतमादिभिस्तत्पुत्रैश्च स्वमात्रनुज्ञया दीर्घतमसो गङ्गाजले प्रक्षेप इत्युक्तम् ।

ऋग्वेदसंहिताभाष्यशतपथब्राह्मणादीननालोच्यैव न्यायकन्दलीभूमिकायामस्यैव गोतमस्य न्यायशास्त्रकर्तृत्वं प्रतिपादितं विद्यते किन्त्विदानीं तत्समालोचनाद् रहूगणस्य गोतमस्य वैदिकसूक्तस्य ऋषित्वात् पौरोहित्याच्च शास्त्रकर्तृत्वसम्भवाद दीर्घतमसोऽन्धस्य शास्त्रकर्तृत्वं विहतं भवति। अस्य न्यायशास्त्रकर्तुर्गोतमस्य अक्षपाद इति नामान्तरं तथा सति दीर्घतमसोऽन्धस्य गोतमस्य प्राकृते नेत्रे न स्त एव । अक्षपादत्वं प्रमाणसहस्रेणापि भवितुं नार्हतीति ।

अपि च मनुस्मृतौ १ अ. श्लो. ३४-३५—

अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।
पतीन् प्रजानामसृजं महर्षीनादितो दश ।।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्राचेतसं वसिष्ठं च भृगुं नारदमेव च ।।

इत्युक्तत्वाद् अङ्गिरा ब्रह्मणः पुत्रस्तद्वंश्यो गोतमो गोत्रप्रवर्तको यथाह मनुः—

जमदग्निर्भरद्वाजो विश्वामित्रात्रिगोतमाः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ।।

एतेषां यान्यपत्यानि तानि गोत्राणि मन्यते ।। इदमुपलक्षणमन्येषामपि ग्रन्थान्तरे दर्शनात् । गोत्रप्रवरनिरूपकेषु ग्रन्थेषु गोतमगणे दश पठिताः । आयास्याः, शरद्वन्तः, कौमण्डाः, दीर्घतमसः, औशनसः, कारेणुपालाः, रहूगणाः, सोमराजकाः, वामदेवाः, बृहदुक्थाश्चेति । अनेन रहूगणभिन्नो गोतमो दीर्घतमाश्च भिन्न इति सिद्धयति । एवमत्र्यादीनामवान्तरभेदाः सप्रमाणं वात्स्यायनचरितेऽवलोकनीयाः ।

अत्र गोतमस्यापत्यं पुमान् गौतम ऋष्यन्धकवृष्णिकुरुभ्यश्च ( पा. अ. ४ पा १ सू० १४४ ) इत्यनेन अण्प्रत्यये कृते अनेके गौतमाः सम्भवन्ति–तथाहि— वाल्मीकिरामायणे बालकाण्डे ५० सर्गे ।

शतानन्दं पुरस्कृत्य पुरोहितमनिन्दितः ।
प्रतिगृह्य तु तां पूजां जनकस्य महात्मनः ।। इति
'गौतमश्च शतानन्दो जनकानां पुरोहितः ।

इत्युत्तररामचरिते । गौतमो गोतमस्य महर्षेरपत्यं पुमानिति तट्टीकाकारः ।

शतानन्दस्य पिता गोतमो माता च अहल्या अस्मिन् विषये साधकानि बाधकानि च प्रमाणानि प्रयुञ्जन्ति पण्डिताः किन्तु साधके ममापि सम्मतिर्गोतमो रहूगणो विदेहराजस्य तत्रत्यस्य पुरोहित आसीदिति शतपथब्राह्मणे प्रतिपादितमिति । तत्पुत्रस्य शतानन्दस्य जनकानां पुरोहितत्वे किमपि नासमञ्जसम् । एवञ्चेद् वाल्मीकिरामायणे बालकाण्डे ४८–५१ सर्गेषु मिथिलाभूमौ जनकपुरोपकण्ठे गौतमाश्रमस्य वर्णनात् तस्मिन् देशे न्यायशास्त्रस्य प्रणयनकथनं न साहसास्पदं भविष्यतीति । अतएव मिथिलायां न्यायचर्चाबाहुल्याद् उदयनवाचस्पतिगङ्गेशवर्धमानोपाध्यायैरनेके न्यायरहस्यग्रन्था निर्मिताः ।

केचन तु ''**अक्षपादः कणादश्च उलूको वत्स एव च**'

इत्यादिवायुपुराणमुद्धृत्य अन्तसमये गोतमस्य प्रभासगमनेन समन्वयं दर्शयन्ति। तच्चिन्त्यम् अपवर्गनिरूपकं न्यायशास्त्रं विरचय्यापि किमपरमवशिष्टं यदर्थं प्रभासमुपेत्य सोमशर्मणो ब्राह्मणस्य शिष्यताङ्गत इति विचारासहत्वात्।

अपि च अमरकोशे बुद्धनामभेदेऽपि—

**सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः। इत्यादि।**
**गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः॥ इति**

अन्यच्च—जैनतीर्थङ्करस्य २४ संख्यकस्य महावीरस्वामिनः शिष्योऽपि गौतमो यतो गौतमः पृच्छति महावीरस्वामी भणतीति जैनागमेषु दृष्टत्वात् ते चागमा उभयसंवादरूपा एवेति। एतेनापि प्रमाणेन गोतमस्य चिरन्तनत्वमेव निष्पन्नम्।

**द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः।**
**गिरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्॥**

इत्यादिस्कन्दपुराणे कालिकाखण्डे १७ अध्याये।

गौतमः स्वेन तर्केण खण्डयन् तत्र तत्र हीत्यादि, अपि च न्यायदर्शनवात्स्यायनभाष्येऽन्ते—

**योऽक्षपादमृषिं न्यायः प्रत्यभाद् वदतां वरम्।**
**तस्य वात्स्यायन इति भाष्यजातमवर्तयत्॥**

न्यायवार्तिकारम्भे च—

**यदक्षपादः प्रवरो मुनीनां**
**शमाय शास्त्रं जगतो जगाद।**

इत्यनेन अस्य गोतमस्य महर्षेरक्षपाद इति नामान्तरं निष्पन्नम्।

महाभारतटीकायां नैलकण्ठ्यामादौ

**कणभक्षमक्षचरणं जैमिनिकपिलौ पतञ्जलिं च नुमः।** इति दर्शनाद् अक्षचरण इत्यपि नामान्तरमेव।

'नैयायिकस्त्वक्षपाद' इत्यमरः ( भट्टकीलहार्नेनिदेशेन मुद्रितेऽमरकोशे १६७ पृष्ठे ) नैयायिकोऽक्षपादो द्वे प्रमाणप्रमेयसंशयेत्यादिषोडशपदार्थवादिनो गोतमस्येति तद्व्याख्यातारः अक्षं नेत्रं दर्शनसाधनत्वेन जातं पादेऽस्येति तदर्थः ।

कदाचिद्वेदव्यासापरनामधेयः कृष्णद्वैपायनमहर्षिर्गोतमेन सङ्गत इदमूचे यदनेन 'जीवब्रह्मणोर्भेदस्तर्केण प्रतिपादित इत्यस्य मुखं नावलोकयिष्यामीति तत एव गोतमेन महर्षिणा व्यासस्यावलोकनार्थं पादः प्रसारित इति पादे चक्षुः सञ्जातं ततश्च व्यासो गोतममक्षपादनाम्ना स्तुतवानिति पौराणिकीं कथां ब्रुवते वृद्धाः । एतामेव कथां भङ्ग्यन्तरेण समुद्धृत्य वाचस्पत्ये बृहदभिधानेऽक्षपादे शब्दार्थसमन्वयः साधित इति ।

अप्राप्य वृत्तमखिलं विदुषां मनोज्ञं
सन्तोषभूषणधरं न लभे स्वचित्तम् ।
अन्यां विधां मतिमतां परिलक्ष्य भूयः
श्रीगोतमादिचरितं विनयी ब्रुवेऽहम् ॥१॥

## न्यायदर्शनभाष्यकारस्य महामुनेर्वात्स्यायनस्य चरितम्—

न्यायदर्शनभाष्यकृद् भगवान् वात्स्यायनः काले कस्मिन् जन्मना अलङ्कृतवान् कं देशमिति निर्णयस्तु सन्दिग्ध एव तन्नाम्न्यपि विमतिर्विद्यते । क्वचन वात्स्यायनः कुत्रचित् पक्षिलस्वामी अपरत्र पक्षिलमुनिः पक्षिलो वा व्यपदिश्यते । किन्तु न्याय-भाष्यस्यान्ते--

योऽक्षपादमृषिं न्यायः प्रत्यभाद् वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥ इति

न्यायवार्तिकसमाप्तौ च—

यदक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ ।
अकारि महतस्तस्य भारद्वाजेन वार्तिकम् ॥

इत्याद्यवलोकनेन तस्य मुख्यं नाम वात्स्यायन इति निर्णीयते । अक्षपादतुल्यो महर्षिर्भाष्यकार इति अक्षपादप्रतिभ इति वार्तिककृदुक्त्या सिद्ध्यति । न्यायवार्तिक-तात्पर्यटीकायामारम्भे आचार्यवाचस्पतिमिश्रेण—

'अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्याख्याते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्तिकारम्भ इत्युक्त्या पक्षिलस्वामीत्यपि नाम वक्तुं शक्यते।

वेदादिभाष्यकृदा माधवाचार्येणापि सर्वदर्शनसंग्रहेऽक्षपाददर्शने—'पक्षिलस्वामिना च सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमानेत्याद्युच्यते। तार्किकरक्षाटीकायां चादावेव 'पक्षिलमुनिप्रभृतयः' इत्युक्तम्। केचिच्च अत्र मुनिशब्दस्तत्त्वप्रदीपिकाकारचित्सुखमुनिवद् बोध्य इति तत्र न्यायवार्तिकारम्भे यदक्षपादप्रवरो मुनीनाम्' वाचस्पतिमिश्रकृतखण्डनोद्धारे 'यदक्षपादस्य महामुनेर्मतमित्याद्युक्त्या अत्रापि तथात्वात्। पक्षयति तत्त्वज्ञानं परिगृह्णातीति पक्षिलः पक्षशब्दाद् बाहुलकादिलच्। यद्वा पक्षिणो दयया लात्ति आदत्ते गृह्णातीति पक्षिलः। ला आदाने इति पाणिनिः। पक्षिलचर्चाऽपि मत्स्यपुराणे ५२ अध्याये विद्यते। एवं च वात्स्यायनस्य नामान्तरं पक्षिलमुनिः पक्षिलस्वामीति च सिद्धम्।

शतपथब्राह्मणे बृहदारण्यकोपनिषदि समाप्तौ 'अथ वंश इत्युपक्रम्य 'वात्स्याद्वात्स्यः' इत्युक्तम्। तस्माद् वत्स्यस्य युवापत्यं वात्स्यायन इति।

वात्स्यायनचर्चा पद्मपुराणीयरामाश्वमेधे १ अध्यायेऽपि विद्यते। व्यास उवाच—

ततः परं धराधरं पृष्टवान् भुजगेश्वरम्।
वात्स्यायनो मुनिवरः कथामेतां सुनिर्मलाम्॥

इत्थं पुराणादौ वात्स्यायनस्य प्रथितत्वात् तस्य चिरन्तनत्वं सिद्धमेव। एवं तत्कृतन्यायदर्शनभाष्येऽपि न कोऽपि हेतुर्दृश्यते येनार्वाचीनत्वं तस्य सिद्ध्येत्।

चेच्च वक्ष्यमाणात्मवाद्यनात्मवाद्यास्तिकनास्तिकसांख्ययोगक्षणिकवादिभूतचैतनिकदशावयववादिनां मतोपन्यासेनार्वाचीनत्वं कल्प्येत तर्हि उपनिषदादिष्वपि तद्दर्शनात् तेषामप्यर्वाचीनत्वं स्यात् किं पुनर्वात्स्यायनस्य तत्प्रणीतभाष्यस्य वेति। यथा तद्भाष्ये २५ पृष्ठे १ अनात्मवादिनः। ३८ पृ० "इति सांख्यानाम्, इति योगानाम्।" ३९ पृ० 'दशावयवानेके नैयायिका वाक्ये संचक्षते। जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति।" ६० पृ० "अथवास्त्यात्मेत्येके। नास्त्यात्मेत्यपरे मन्यन्ते" इति। १०४ पृ० "आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके। "गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे।" "आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे।" "महाभूतसक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये"। १५९ पृ० "एवं हि पश्यन्तः प्रवदन्ति सांख्याः पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति" १६३ "क्षणिक-

वाद्याह"। १७४ पृ० "भूतचैतनिक आह"। १८७ पृ० "अत्र नास्तिक आह"। २२१ पृ० "याज्ञवल्क्यो मैत्रेयीमिति होवाच। कात्यायन्या सहान्तं करवाणीति"। २२२ पृ० "चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः"। इत्याद्युक्तं तेनापि नार्वाचीनत्वं सिद्धयति। तथाहि–तद् भाष्ये २५ पृ० अनात्मवादिनः। नैरात्म्यवादस्तु मैत्रायण्युपनिषदि ७।८। नैरात्म्यवादकुहकैरिति। इदं चार्वाकमतमपि सम्भवति। यथामहाभारते शान्तिपर्वणि मोक्षधर्मे १८६ अध्याये–

यदि प्राणयते वायुर्वायुरेव विचेष्टते।
श्वसित्याभाषते नित्यं तस्माज्जीवो निरर्थकः॥ इत्यादि

३८ पृ. इति सांख्यानाम्, इति योगानाम्। योगस्य चर्चा कठोपनिषदि ६ वल्ल्याम्। श्वेताश्वतरोपनिषदि ६ अध्याये सांख्ययोगौ समुद्धृतौ। अपि च छान्दोग्योपनिषदि ६ प्रपाठके १७ खण्डे "तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" श्रीकृष्णेन भगवद्गीतायाम्। "एकं सांख्यं च योगं च यः पश्यति स पश्यति" इत्युक्तम् ३६ पृष्ठे "दशावयवानेके नैयायिका वाक्ये सञ्चक्षते। जिज्ञासा-संशयः शक्यप्राप्तिः। प्रयोजनं संशयव्युदास इति"। नैयायिकानामनेकत्वं तत्र तत्र, आन्वीक्षिकी विद्यानिरूपणप्रसङ्गे यथा महाभारते–

नैयायिकानां मुख्येन वरुणस्यात्मजेन च
पराजितो यत्र वन्दी विवादेन महात्मना॥

इत्थञ्चान्वीक्षिक्यैक्येऽपि न नैयायिकैक्यम्। अन्यथा इदानीन्तनेषु न्यायग्रन्थेषु इति प्राञ्चः इति नव्याः, 'इत्यस्मत्पितृचरणाः", "इत्यस्मद्गुरुचरणा ' इति मतभेदानुपपत्तेः।"

केचित्तु दशावयववादित्वेन बौद्धं कल्पयन्ति तन्निर्मूलं यदि स बौद्धो भवेत्तदा भाष्यकारैर्नैयायिकनाम्ना कदापि गृहीतो न भवेदपितु नास्तिकादिनाम्नेति। ६० पृष्ठे अथ वास्त्यात्मेत्येके, नास्त्यात्मेत्यपरे, मन्यन्त इति। मैत्रायण्युपनिषदि ७ प्रपाठके ८ खण्डे।

'नैरात्म्यवादकुहकैर्मिथ्यादृष्टान्तहेतुभिः।
भ्राम्यन् लोको न जानाति वेदविद्यान्तरं तु यत्॥"

१०४ पृष्ठे आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके। १०४ पृ० गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे।

१०४ पृ० आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे। १०४ पृ० महाभूत-संक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये। अत 'अन्ये" इत्यनेना-धुनिका बौद्धं कल्पयन्ति तदनुयायिनस्तु खीष्टाब्दारम्भात् ४८७ वर्षेभ्यः पूर्वं बुद्धदेवस्थितिं निश्चिन्वन्तस्तत्पूर्वं न्यायभाष्यमिदं नासीदेवेति समुद्घोषयन्ति तदसद् वेदधर्मशास्त्र-पुराणेषु आस्तिकनास्तिकभेदेनानेकानि मतानि निरूपितानि भाष्यकारेण बौद्धनामानु-ल्लिखितत्वात् तदिदं मतं कस्मादवगतं बौद्धस्यैवेति ? यदि च तद्ग्रन्थसंवादात् तदा-धुनिकमतसंवादादपि तत्पश्चाद्भावित्वाद् अभिनवमेव वात्स्यायनीयं भाष्यं कथं न कल्प्येत ? बौद्धग्रन्थेष्वपि हीनयानिकैरतीता नागता अनेके बुद्धा निरूपिता इति कस्य बुद्धस्येदं मतमित्यपि निरूपणीयमेव यदि च गोतमस्य शाक्यसिंहस्य बुद्धदेवस्य मतं तदपि निरूपणीयमेव कस्मिन् ग्रन्थे तत् प्रतिपादितमिति ?

ऐतिहासिकवृत्तशोधने निपुणंमन्या आधुनिकास्तु इसवीयवर्षारम्भात् ४८७ वर्षेभ्यः पूर्वम्।

सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः।
समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः॥
षडभिज्ञो दशबलोऽद्वयवादी विनायकः।
मुनीन्द्रः श्रीघनः शास्ता मुनिः शाक्यमुनिश्च सः॥
स शाक्यसिंहः सर्वार्थसिद्धः शौद्धोदनिश्च सः।
गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः॥

इत्यन्वर्थनामविशिष्टो बुद्धो निर्वाणं गत इति वदन्ति तत्र वक्ष्यमाणानि दुरुच्छे-द्यानि बलवन्ति प्रमाणान्युपन्यस्तानि।

"प्रोफेसरबुलरमहाशयाः ( Buhler ) तथा डाक्टर फ्लीट ( Fleet ) महाशयाः पाषाणस्तम्भे लिखितेऽशोकराजस्य शासने २५६ संख्यां दृष्ट्वा कल्पयन्ति बुद्धमरणा-शोकजीवनसमययोरेतावद्वर्षपरिमितमन्तरम्" अपि च परमार्थनामकेन बौद्धेन वसुबन्धुचरितं नामकं पुस्तकं निर्मितं तत्र लिखितमस्ति-बुद्धदेवनिर्वाणानन्तरं १००० वर्षेभ्यः पश्चात् स्थितौ "वृश्यपविन्ध्यवसनामकौ बौद्धौ। तावेतौ खीष्टाब्दार-म्भात् परं पञ्चमशताब्द्यां वर्तमानाविति उपात्तसमय एव बुद्धनिर्वाणस्य।

अन्यच्च चीनदेशीयकांटननामके नगरे संख्याबोधकरेखाबिन्द्वादिवच् चिह्नविशेषाङ्कितलेखाः ४८६ वर्षपर्यन्तं स्थापयन्ति स्मेति स्थितिस्तत्र ९७५ चिह्ना-न्यासन् तत्र ४८९ संख्या न्यूनीकृता सती स एव निर्दिष्टसमयो बुद्धनिर्वाणस्य भवति।

इति राजवचः श्रुत्वा उदयनाचार्य आहृतम् ।
तव नास्त्यत्र किञ्चिद्धो दूषणं नैव घातकम् ॥

स्वशास्त्रभक्तितश्चावां करिष्यावो यथारुचि ।
त्वमेकस्मिन्मृते चास्मिन् मयि वा नृपसत्तम ॥

तन्मतं च परित्यज्य जीवन्मतपरो भव ।
किं च यावन्ति ते राज्ये पुस्तकानि च तानि वै ॥

जले प्रक्षिप ये चैतच्छास्त्रोपासनकारकान् ।
तान् दण्डयित्वा यो जीवेदावयोस्तन्मतानुगान् ॥

कुरुष्वेत्यस्मदुक्त्या वै प्रतिज्ञां कुरु भूपते ।
इत्युक्तो नृपतिर्जैनाचार्यस्य मुखमैच्छत् ॥

एवमेवाब्रवीत् सोऽपि प्रतिजज्ञे नृपस्तदा ।
तत उत्थाय ते सर्वे आगतास्तालसन्निधौ ॥

वंशादिनाथ तौ द्वौ तमारुह्योच्चैर्महातरुम् ।
वेदाः प्रमाणमित्युक्त्वा आचार्यो न्यपतद् भुवि ॥

बौद्धो वेदा अप्रमाणमित्युक्त्वा निपपात ह ।
आचार्यो निपतन्भूमौ वेदैः संरक्षितः सुखम् ॥

मन्दं मन्दं समागत्य तस्थौ वेदं हरिं स्मरन् ।
जैनाचार्यः पतंन्मार्गे भ्राम्यमाण उपर्यधः ॥

परिवर्तितशीर्षो हि पपात धरणीतले ।
व्यस्तमस्तकवाह्वङ्घ्रिर्निष्प्राणो न्यपतत् खलु ॥

इति दृष्ट्वा महाश्चर्यं सर्वे राजादयो जनाः ।
आचार्यं प्रशशंसुस्ते नमस्कृत्य मुहुर्मुहुः ॥

ततो राजा वेदशास्त्रं सत्यं मत्वातिभक्तितः ।
स्वराज्ये स्थापयामास तदाचारपरः स्वयम् ॥

भूत्वा चकार राज्यं स सर्वधर्मसमन्वितः ।
नास्तिकस्य च यान्यासन् शास्त्राणि पृथिवीतले ॥

तानि सर्वाणि चिक्षेप जले ये तदुपासकाः ।
तान् सर्वान् दण्डयित्वा स चकारास्तिकसंमतान् ॥

श्रीमदुदयनाचार्यं चक्रे राजगुरुं नृपः ।
जीविकायै ददौ ग्रामान् स्वमाज्ञापरोऽभवत् ॥

एकदोदयनाचार्यो जगन्नाथदिदृक्षया ।
पुरुषोत्तमपुरे गत्वा स्नात्वा तत्तीर्थवारिणा ॥

मार्कण्डेयह्लदाद्येन मन्दिरद्वारमागतः ।
देवं द्रष्टुं मन्दिरान्तःप्रवेष्टुं चलितो यदा ॥

तदा कपाटः संलग्नः स्वयमेव निरीक्ष्य सः ।
द्वारान्तरमुपायातस्तदाप्येवं बभूव ह ॥

अथ तृतीये द्वारे तु संप्राप्तः स यदा द्विजः ।
तत्रापि स कपाटस्तु स्वयं लग्नः पुनश्च सः ॥

चतुर्थं द्वारमागत्य मन्दिरं गन्तुमुद्यतः ।
तमप्यपश्यत् संलग्नं कपाटं ह्ययमेव हि ॥

इति कौतुकमेतत् तु पश्यन्तस्ते जनाः स्थिताः ।
तदा तूदयनाचार्यः सस्मितं वाक्यमब्रवीत् ॥

जगन्नाथ सुरश्रेष्ठ भक्त्यहंकारपूर्वकम् ।
ऐश्वर्यमदमत्तोऽसि मामवज्ञाय वर्त्तसे ॥

उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः ।
इत्येवमुक्ते श्लोके तु सहसोद्घाटिताः स्वयम् ॥

कपाटास्तत्क्षणादेव नृणां चित्रं तु पश्यताम् ।
ततस्तत्र स्थिता येषु जगन्नाथस्य पूजकाः ॥

ते सर्वे विनयात् तं तु गृहीत्वाचार्यमादृताः ।
नीत्वाथ मन्दिरे देवं दर्शयन्तिस्म हर्षिताः ॥

सोऽपि दृष्ट्वा जगन्नाथं सम्पूज्य स्तुतिभिर्मुहुः ।
स्तुत्वा जप्त्वा समभ्येत्य वहिर्दत्त्वा धनानि च ॥

उषित्वा कतिचिद्रात्रीः समायातुमथोद्यतः ।
अथ स्वप्ने जगन्नाथः पूजकब्राह्मणान् स्वयम् ॥

उवाच मम यच्चास्ति पीताम्बरमनुत्तमम् ।
तद्देह्युदयनाचार्यायाशु सोऽतीव मे प्रियः ॥

ममैवांशो न सन्देहोऽनेनैव स्थापितोऽस्म्यहम् ।
तिरस्कृतो महामूढबौद्धसिद्धान्तवादिभिः ॥

इति दृष्ट्वा तु ते स्वप्नं पूजकाः प्रातरुत्थिताः ।
परस्परं स्वप्नमध्ये मन्त्रयित्वातिभक्तितः ॥

पीताम्बरं समानीय जगन्नाथाज्ञया ददौ ।
आचार्याय ततः सोऽपि धृत्वा तन्निजमस्तके ॥

प्रणनाम मुहुर्देवं जगन्नाथं मुदा द्विजः ।
एवं ततो जगन्नाथप्रसादं प्राप्य स द्विजः ॥

मिथिलामाजगामाशु निजमन्दिरमुत्तमम् ।
तत्र शिष्योपशिष्यैश्च सेवितः परमादरात् ॥

अध्यापयामास मुहुः सर्वशास्त्राणि यत्नतः ।
अधीत्य तस्मादाचार्याद्वेदशास्त्राणि सर्वशः ॥

धर्मं संस्थापयामासुर्देशे देशेऽतिपण्डिताः ।
अद्यापि मिथिलायां तु तदन्वयभवा द्विजाः ॥

विद्वांसः शास्त्रसम्पन्नाः पाठयन्ति गृहे गृहे ।
स तु कालेन महता वृद्धो भूत्वा जरातुरः ॥

काशींमागत्य कतिचित् स्थित्वा तत्र दिनानि च ।
मणिकर्ण्यां ब्रह्मनाले प्राणांस्त्याज लीलया ॥
प्रातः पुरातनं देहं वैष्णवं सुरदुर्लभम् ।
एवं सोदयनाचार्यो बभूव पृथिवीतले ॥
धर्मसंस्थापनार्थाय नास्तिकानां निवृत्तये ।
शृण्वन् चरितमेतस्य नरो बुद्धया महीयते ॥

इति भविष्यपुराणपरिशिष्टे उदयनाचार्यचरितं नाम त्रिंशोऽध्यायः । इत्थं स्थूलेन प्रकारेणोदयनाचार्याणां देशकालस्थितीनां निर्णयो भवति सूक्ष्मेण प्रकारेण तु तत्कृतलक्षणावलीग्रन्थान्तस्थेन श्लोकेन ।

"तर्काम्बराङ्कप्रमितेष्वतीतेषु ९०६ शकान्तः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥"

इत्यनेन ९०६ शाकवर्षे तेषां स्थितिरासीदिति निष्पन्नं भवति । शाकन्तत इत्युक्त्या शाकवर्षं एव ग्राह्यो यथोक्तमत्रैव भूमिकायां १०४ पृ० सिद्धान्तशिरोमणिगणिताध्यायस्थंभास्कराचार्यवाक्यम्--

"शकनृपस्यान्ते कलेर्वत्सराः ।" इत्यादि ।

तार्किकरक्षाटीकाया ज्ञानपूर्णकृतायाः पुस्तकं १३२४ शाकवर्षे लिखितं वर्तते । टीकाग्रन्थे च उदयनाचार्यस्य नाम समुद्धृतम् । ज्ञानपूर्णश्च विष्णुस्वामिनः शिष्यः । अपि च ११९९ विक्रमवर्षे १०६४ शाकवर्षे कुमारपालस्य राज्ञो राज्याभिषेकोऽभूत् तस्मिन्नेव समये मध्याचार्य आसीदिति आर्यविद्यासुधाकरे निरूपितम् । मध्याचार्यात्पूर्वं विष्णुस्वाम्यासीदिति भगवद्भक्तमाहात्म्ये ३१ अध्याये निरूपितमित्यनेन ९०६ शाकाब्दे उदयनाचार्यस्थितिर्न विरुद्धा ।

अपि च ११६४ शाकब्दे लिखिता नैषधचरितटीका नेपालदेशे वर्त्तत इति तत्रत्यलिखितपुस्तकसूचीपत्रे भूमिकायां ३२ पृ० निरूपितम् ।

अन्यच्च--

"युग्माश्वाङ्कैर्निरुक्ते ९७२ शकनृपतिसमये कान्यकुब्जेश्वरस्य आदेशं प्राप्य यत्नान्नलचरितमहाकाव्यटीकां व्यधत्त ।

सूरिर्भूदेवसञ्ज्ञो दिनमणितनयः कुर्मपूर्वाग्रजन्मा ।
तुष्यात् तेनान्तरात्मा त्रिभुवनजनकोमापतिः श्रीमहेशः ॥" इति

इत्युक्तनैषधचरितटीकाभ्यां ९७२ शाकवर्षेभ्यः पूर्वं नैषधचरितकर्तुः श्रीहर्षस्य स्थितौ सत्यामेव खण्डनखण्डखाद्यग्रन्थे "शङ्का चेदनुमास्त्येवे" त्यादिकुसुमाञ्जलिकारिकोद्धारे ९०६ शाकाब्दे उदयनाचार्यस्थितौ नासमञ्जसं किमपि। अत्रान्येषामैतिहासिकानां मतानि वर्तन्ते। "श्रीहर्षकविः श्रीहीरपण्डिताद् मामल्लदेव्यां समजनि पूर्वस्यां वाराणस्यां पुरि गोविन्दचन्द्रो नाम राजा तत्पुत्रो विजयचन्द्रः तत्पुत्रो जयन्तचन्द्रः जयन्तचन्द्रस्य पुत्रो मेघचन्द्रः तस्य राज्ञो बहवो विद्वांसः तत्रैको हीरनामा विप्रः तस्य नन्दनः श्रीहर्षः सोऽपि बालावस्थः सभायां राजकीयेनैकेन पण्डितेन वादिना हीरो राजसमक्षं जित्वा मुद्रितवदनः कृतः। कान्यकुब्जेश्वरत्वेऽपि काश्यादितीर्थाधिपतित्वमपि तदीयताम्रपत्रादवगम्यते। किं तु ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरादित्यनेनात्र विजयचन्द्र एव ग्राह्य इत्यत्र प्रमाणं राजशेखर एव जानाति।

इत्यादिसर्वं राजशेखरसूरिणा १३४८ ख्रीष्टाब्दे विरचिते प्रबन्धकोशे श्रीहर्षो विद्याधरजयन्तचन्द्रप्रबन्धाद् गौडदेशीय इत्यवगम्यते।

प्राचीनलेखमालायां २३ लेखे सं० १२४३, २२ लेखे जयचन्द्रयौवराज्यदानपत्रे सं० १२२५ लिखितः इत्थं च जयन्तचन्द्रस्य द्वादशख्रीष्टशतके स्थितिनिश्चयान्नैषधीयचरितकर्तुः श्रीहर्षस्यापि तदैव स्थितिर्निश्चिता। अत एव जयन्तचन्द्रपितृविजयचन्द्रवर्णनात्मकमेव विजयप्रशस्तिरचना तातस्य इति पञ्चमसर्गसमाप्तिश्लोके स्वकीयविशेषणध्वनित वजयप्रशस्तिनामक काव्यं भवेत्। अस्मिँश्च विषये बहूनां विसंवादं प्रदर्श्य तत्खण्डनपूर्विका डाक्टरबुलरसंमतिरपि। तथा हि तदीयं रायल् एशियाटिक् सोसाइटी बाम्बे ब्राञ्च इति नामभूषितविद्वत्सभया १८७५ ख्रीष्टाब्दे प्रकाशिते प्रबोधनग्रन्थे पृ० २७९-२८७ मुद्रितं व्याख्यानम्।

अयं जयन्तचन्द्रो जयचन्द्र एव यः किल राठौरवंशीयानां कान्यकुब्जाधिपानामन्तिमो वाराणस्यधिपतिर्बभूव यं च ख्रीष्टस्य ११९५ वर्षे यवना राज्यात् प्रसह्य प्रभ्रंशयांचक्रुः।

श्रीमान् काशीनाथस्त्र्यम्बकसूनुस्तैलङ्गः कुसुमाञ्जलिकर्तुरुदयनाचार्यस्य समयं न्यरूपयत् इण्डयन् अण्टिक्वेरी प्रथमपुस्तके २९७ पृ० ३५३ पृ० द्वितीयपुस्तके ७१ पृ० च। प्रसङ्गतः श्रीहर्षस्यापि समयविवेकमन्वबध्नात् तत्रादर्शयत् श्रीहर्षः ख्रीष्टस्य नवम्यां दशम्यां वा शताब्द्यां बभूव न तु द्वादश्याम्।

अहमदाबादसमीपे ढोलकाग्रामे चाण्डुपण्डितेन १३५३ संवत्सरे नैषधटीका व्यरचि। तदीयसमाप्तौ श्लोकः—

श्रीविक्रमार्कसमयाच्छरदामथत्रि—
पञ्चाशता - समधिकेष्वितेषु तेषु
त्रयोदशसु भाद्रपदे च शुक्ल-
पक्षे त्रयोदशतिथौ रविवासरे च ॥

तत्रैव दृश्यते पङ्क्तिः "प्रथमं तावत् कविविजिगीषुकथायां स्वपितृपरिभावुकमुदयनमत्य-मर्षणतया कटाक्षयंस्तद्ग्रन्थीमुद्ग्रन्थयितुं खण्डनं प्रारिप्सुः" इत्यादि ।

केचित्तु "विजयप्रशस्तिरचना तातस्य" इति नैषधचरितपञ्चमसर्गान्तश्लोक-दर्शनात् "ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा" दित्यादिदर्शनाच्च ताम्रपत्रोपात्तस्य कान्यकुब्जाधिपतेर्विजयचन्द्रदेवस्य संवत् १२२५ वर्षे जयच्चन्द्राय यौवराज्यं दत्तवत उक्तसमयात् पूर्वं स्थायी कान्यकुब्जश्च श्रीहर्ष इति वदन्ति। तत्तुच्छम् "गौडोर्वीशकुलप्रशस्तिभणितो" तिसप्तमसर्गान्ते दर्शनात् वङ्गदेशीयोऽपि सम्भवति। विजयच्चन्द्रनाम्नैव तत्समयावस्थायी चेत् इण्डियन् अण्टिक्वेरीसंज्ञके पत्रे सन् १८८६ मई मासमुद्रिते पृष्ठे १४१ मुद्रिते ताम्रपत्रे श्रीहर्षेण प्रयुक्तस्य शासनस्य स्थिरायतेः इति दर्शनात् तात्कालिकोऽपि श्रीहर्षो भवेत् तत्ताम्रपत्रं तु ७१४ खीष्टाब्दे लिखितमिति।" उदयनाचार्येण न्यायवार्तिकतात्पर्यपरिशुद्धौ २ अध्याये २ आह्निके "प्रपञ्चितो न्यायकुसुमाञ्जलाविति" इति ।

तत्रैव ३ अ० १ आ० "विद्यासन्ध्योदयोद्रेका" दित्यादिपद्य लिखितम् इदमेव पद्यं किरणावल्यामारम्भेऽपि ।

अपि च "अपसिद्धान्तस्तु यथा विरोधाद्भिद्यते तथा तत्रैव वक्ष्यते । शेषं परिशिष्टे इति ।

किरणावल्यां "विस्तरस्तु न्यायकुसुमाञ्जलावात्मतत्त्वविवेके चानुसन्धेयः।" इति। तात्पर्यपरिशुद्धिकिरणावल्युक्तमेव "विद्यासन्ध्योदयोद्रेका" दित्यादिपद्यं लक्षणा-वल्याम् ।

प्रबोधसिद्धिर्बोधसिद्धिर्बोधशुद्धिर्न्यायपरिशिष्टं चेत्येकस्यैव ग्रन्थस्य नामभेदा इति वरदराजाचार्येण तार्किकरक्षायां ३१० पृ० निरूपितमिति उक्तस्य निबन्धषट्-कस्यैकर्तृकत्वं निर्विवादम् ।

त्रिदण्डिवेदान्तिनो वदन्ति उदयनाचार्याणामात्मतत्त्वविवेकेऽन्ते "अत एव त्रिदण्डिवेदान्तिमतोपसंहार" इत्याद्युक्त्या प्रपन्नामृतग्रन्थे १०१२ शाकाब्दे रामानुजा-चार्याणां स्थितिसिद्धौ तत एव त्रिदण्डिवेदान्तिमतप्रचारात् तत्कालपूर्ववर्त्तित्वासम्भवा-ल्लक्षणावल्युक्त ९०६ शाकाब्दे उदयनाचार्याणां स्थितिर्न सम्भवतीति। तन्न रामानुजा-

चार्येभ्योऽपि वहुपूर्ववर्तिनष्टङ्क-द्रमिगगुहदेव-भारुच्यादयोऽपि विशिष्टाद्वैतवादिन एकदण्डी त्रिदण्डी वेति मनुस्मरणात् त्रिदण्डिवेदान्तिमतस्यापि चिरन्तनत्वादिति ।

अपि च सुरेश्वराचार्येणबृहदारण्यकवार्तिके ५ ब्राह्मणे ३ अध्याये "सत्यिदण्डवदि" त्युक्तत्वात् शंकराचार्याणामपि समये त्रिदण्डिमतसत्त्वात् शंकराचार्यात् पश्चात्काल-वर्त्तिनो वाचस्पतिमिश्रस्य पश्चात्कालवर्त्तिन उदयनाचार्यस्य त्रिदण्डिमतोपन्यासे नास-मञ्जसं किमपि । संम्प्रदायधूर्वहत्वेन रामानुजाचार्यपरत्वे तत्राग्रहश्चेत् तदा क्लिष्ट-कल्पनया निर्वाहो भवितुमर्हति तथा हि १०१२ शाकाब्दोऽन्त्यसमयो १२० वर्षपरिमित-परमायुषां रामानुजाचार्याणां ८९२ शाकाब्दे जन्मसिद्धौ लक्षणावल्युक्त ९०६ शाकाब्दात् परमपि उदयनाचार्याणां स्थितिसम्भवादिति ।

यच्चोक्तं पञ्चरत्ने ।

"ख्यातो गोवर्द्धनाचार्य उमापतिधरस्तथा ।
शरणो जयदेवश्च धोयी कविनृपः क्रमात् ।।
राज्ञो लक्ष्मणसेनस्य पञ्चरत्नानि संसदि ।। इति ।

गोवर्धनाचार्येण शृङ्गारसप्तशत्यामन्ते—

उदयनबलभद्राभ्यां सप्तशती शिष्यसोदाराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ।।

अत्रोदयन उदयनाचार्य इति व्यङ्ग्यार्थसन्दीपनाख्ये सप्तशतीव्याख्याने आनन्दपण्डितेन व्याख्यातम् ।

एतेन उदयनाचार्यो लक्ष्मणसेनस्य राज्ञः सभायामासीदिति निष्पन्नम् । लक्ष्मण-सेनश्चातिप्रसिद्धो राजाभूदिति तत्संवत्सरश्च ल० सं० इत्यकारेण मिथिलादेशीयलिखित-पुस्तकादिषु दृश्यते तत्संवत्सरप्रवृत्तिकालविषये उक्तं गणकैर्देशभाषया ।

"शाके सो सन् जानब सोई । रहित बाणशशि वाण ५१५ जो होई ।
जासन् जमा रहै सो देखहु । शरशशिवाण ५१५ हीन कर लेखहु ।।
बाकी रहै सो ल० सं० प्रमान । गुरु ज्ञानीजन भाषाभान् ।
अरु चौषट् एकादश दीजै । ल० सं० सहित संवत् कर लीजे ।।" इति ।

इत्यनेन १०२९ शाकाब्दे लक्ष्मणसेनसंवत्सरप्रवृत्तिः सम्भवति । अथ च "मैथिल-कोकिलविद्यापति" नामके पुस्तके ११ पृष्ठे समुद्धृते दानपत्रे ल० सं० २९३ शाके १३२१ इति लिखितत्वात् स एव समयः समायाति । किन्तु वल्लालसेन-कृताद्भुतसागरे

ग्रन्थनिर्माणकाल: १०८१ शाकाब्दो लिखितस्तत्र लक्ष्मणसेनस्यापि नाम वर्तत इति ६० वर्षपरिमितकालान्तरे लक्ष्मणसेनवल्लालसेनयोः स्थितेर्नासम्भवः परन्तु लक्ष्मणसेनं एव पूर्वपुरुषः आनन्दभट्टेन वल्लालसेनचरिते वल्लालसेनस्य पुत्रो लक्ष्मणसेन इति प्रतिपादितम्। तत्र लक्ष्मणसेन इत्यत्र लवणसेन इति पुस्तकान्तरे पाठदर्शनात् लक्ष्मणसेनश्च पूर्वपुरुष इत्यत्र नासमञ्जसं किमपि।

तथा च लक्षणावल्युक्त ९०६ शाकाब्दे वर्तमान उदयनाचार्यः १०२६ शाकाब्दासन्ने समये वा १०२१ शाकाब्दात् परं १०८९ शाकाब्दात् पूर्वं ६० वर्षाभ्यन्तरेऽपि आसीदित्यसम्भवाल्लक्ष्मणसेनसंसदि वर्तमानो गोवर्धनाचार्यस्य भ्राता भिन्न एवोदयनाचार्य इति।

एवं गोवर्धनाचार्यस्य भ्राता बलभद्रोऽपि भिन्नः पद्मनाभमिश्रस्य पिता बलभद्रो भिन्न एव अनेन किरणावलीभास्करे वर्द्धमानोपाध्यायस्य नाम समुद्धृतमिति प्रतिपादितमस्यामेव भूमिकायां १२ पृष्ठे।

एवं गीतगोविन्दटीकाकार उदयनाचार्यं कश्चिदन्य एव गीतगोविन्दकर्त्तुर्जयदेवस्य रजनीकान्तगुप्तमहाशयेन १३०० शाकाब्दे पण्डितपत्रे-मुद्रितप्रसन्नराघवनाटक भूमिकायां पण्डितगोविन्ददेवशास्त्रिणा च स्थितेर्निद्धारणात् गीतगोविन्दटीकाकर्त्तुः तत्पश्चात्कालभावित्वात्।

अपरोऽपि वत्सराजापरनामधेय उदयनः सुतरां भिन्नस्तत्कथा च विष्णुपुराणे ४ अंशे २१ अध्याये कथासरित्सागरेऽपि निरूपिता इति।

## न्याययिबन्धप्रकाशकर्त्तुः श्रीवर्द्धमानोपाध्यायस्य चरितम्

वर्द्धमाननामानोऽपि अनेके पण्डिता अभूवन् परं तु न्यायनिबन्धप्रकाशकर्त्ता एवेदानीं प्राधान्येन निरूपणीयः।

तथा हि न्यायनिबन्धप्रकाशान्ते—

"यस्तर्कतन्त्रशतपत्रसहस्ररश्मि—
गंङ्गेश्वरः सुकविकैरवकाननेन्दुः।
तस्यात्मजः पितुरधीत्य निबन्धमित्थं
प्राकाशयत् कृतिमुदे बुधवर्द्धमानः॥

कुसुमाञ्जलिप्रकाशादावपि इति।

"न्यायाम्भोजपतङ्गाय मीमांसापारदर्शिने।
गङ्गेश्वराय गुरवे पित्रेऽत्र भवते नमः॥" इति।

तत्त्वचिन्तामणौ च

"गङ्गेशस्तनुते मितेन वचसा श्रीतत्त्वचिन्तामणिम् 'एतावता निष्पन्नं भवति दिगन्तविश्रान्तकीर्तेस्तत्त्वचिन्तामण्यादिकर्त्तुः श्रीगङ्गेशोपाध्यायस्य पुत्रः शिष्यश्च वर्द्धमानोपाध्याय इति। गङ्गेशोपाध्यायश्च कस्मिन् देशे कस्मिन् काले आविरभूदितीदानींपर्यन्तं तदीयोपलब्धेषु ग्रन्थेषु नोपलभ्यते, किन्तु तत्त्वचिन्तामणावनुमानपरिच्छेदे "इति खण्डनकारमतमपास्त" मित्युक्त्या श्रीहर्षसमयात् पश्चात्कालभावी १२९३ शाकाब्दे सुधामधुनिबन्धकर्त्रा वाचस्पतिमिश्रेण तत्त्वचिन्तामणिग्रन्थस्य व्याख्यातत्वादुक्तशाकाब्दपूर्वकालभावीति नात्र सन्देहः।

अपि च १४०० ईशवीयवर्षे १३२२ शाकाब्दे वर्तमानस्य मैथिलकोकिलविद्यापतेः पक्षधरमिश्रापरपर्यायस्य तत्त्वचिन्तामण्यालोककारस्य जयदेवमिश्रस्य पितृव्याद्धरिमिश्राद्विद्यासम्पादनं तमेव समयं द्रढयति।

अपि च मिथिलादेशाधिपतेर्महेशठक्कुरस्य भ्राता मेघठाकुरापरपर्यायो भगीरथठक्कुरो विंशाब्दवयस्को जयदेवमिश्रात् सम्पूर्णं न्यायशास्त्रमधीतवानिति तत्कृतकिरणावलीप्रकाशप्रकाशिका ग्रन्थादवगम्यते तथा हि

"यः कैशोरे विश्वविख्यातकर्मा
धर्माचार्यः श्रीमहादेवशर्मा।
तत्सोदर्यो बर्द्धमानस्य सूक्तौ
भावं मेघः सम्यगाविष्करोति॥"

"विंशाब्दे जयदेवपण्डितकवेस्तर्काब्धिपारं गतः।
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मजः।
श्रीधीरातनयेन तेन रचिता श्रीमन्महेशाग्रज–
श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः॥"

अन्यच्च

आसीत् पण्डितमण्डलाग्रगणितो भूमण्डलाखण्डलो
जातः खण्डवलाकुले गिरिसुताभक्तो महेशः कृती।
शाके रन्ध्रतुरङ्गमश्रुतिमहीसंलक्षिते १४७८ हायने
वाग्देवीकृपयाऽशु येन मिथिलादेशः समस्तोऽर्जितः॥

पद्यमिदं मिथिलायां जनकपुरस्थानात् पञ्चक्रोशान्तर ईशानभागे धनुःक्षेत्रे ( धनुखा ) कूपे प्रस्तरपट्टे लिखितमस्ति।

तत्रान्यान्यपि पद्यानि सन्ति।

इत्यनेन १४७८ शाकाब्दे विद्याविभवसम्पन्नेन महेशठक्कुरेण वृद्धावस्थायां मिथिलाराज्यं प्राप्तम् तथा च भगीरथठक्कुरेण २० वर्षवयस्केन वृद्धादेव जयदेवपण्डित-कवेः न्यायशास्त्रमधीतमिति १३७८ शाकाब्देऽपि जयदेवस्थितिः सम्भवतीति।

कुसुमाञ्जलिभूमिकायां ११८६ शाकाब्दे जयदेवस्थितिं संस्थाप्य "शाके मुनि-व्योमयुगेन्दुगण्ये १४०७ "इति चैतन्यदेवजन्मव्यवस्थापकपद्यस्थं युगशब्दं चैतन्य-चन्द्रोदयनाटकस्थेन" 'शाके चतुर्दशशते रविवाजियुक्ते १४०७' इतिपद्येन चतुर्वाचकं दृढीकृत्य रघुनाथशिरोमणिचैतन्यदेवयोरेककालावस्थायित्वात् शिरोमणिजयदेवमिश्रयोः संवादं खण्डयन्ति। तत्तुच्छम् ३२६ लक्ष्मणसेनवर्षे १४१५ शाकाब्दे वर्त्तमानेन रुचिदत्तेन "अधीत्यरुचिदत्तेन जयदेवाज्जगद्गुरोः" इत्युक्तेः १३२२ शाकाब्दे वर्त्तमानाज्जयदेवपितृ-व्याद्धरिमिश्रान्मैथिलकोकिलविद्यापतेरध्ययनस्यानुपपत्तेः। १२६३ शाकाब्दादपि पूर्वकाल-भावी गङ्गेशोपाध्याय इति नासम्भवी तस्मिन्नेव काले वर्द्धमानोपाध्यायोऽप्यासीदिति। पाँजीपुस्तकाल्लोकप्रसिद्धया च वर्द्धमानोपाध्यायो मैथिल एव अनेनैव न्यायवार्त्तिक-तात्पर्यपरिशुद्धि प्रकाशापरपर्यायन्यायनिबन्धप्रकाशन्यायपरिशिष्टप्रकाशा-न्वीक्षानयतत्त्व-बोधादयो ग्रन्था रचिता इति प्रतिपादितमधस्तात्। तत्पित्रा लोकोत्तरविद्याविभव-बुद्धिशालिना महर्षिकल्पेन श्रीगङ्गेशोपाध्यायेनैतादृशस्तत्त्वचिन्तामणिन्यायमहानिबन्धो रचितो यद् वर्द्धमानोपाध्याय–पक्षधरमिश्र-रुचिदत्तगोकुलनाथोपाध्याय—मधुसूदनमिश्र-प्रभृतिभिर्मैथिलपण्डितैः वासुदेवसार्वभौम-रघुनाथतार्किकशिरोमणि-मथुरानाथ-भवानन्द जगदीश-गदाधर-चन्द्रनारायण-कालीशंकरप्रभृतिभिर्वङ्गदेशीयैः पण्डितैर्महादेवकृष्णंभट्ट-राघवेन्द्राचार्यादिभिर्दाक्षिणात्यपण्डितैश्च साक्षात् परम्परया वा व्याख्यातत्वात् क्रोडपत्रादिना च संवलितत्वात् श्लोकानां लक्षाणामष्टाविंशत्या उपबृंहित इदानीं नवीनन्यायत्वेन लोके व्यवह्रियते इत्यादिप्रतिपादितं वाराणसीमुद्रितं चौखम्बा संस्कृतसीरीजपुस्तके क्रोऽपत्रसंग्रहे भूमिकायां १।२।३ खण्डेषु। किं तु नवीनत्वव्यवहारः शास्त्रतात्पर्यानवबोधात् गङ्गेशोपाध्यायेन तत्त्वचिन्तामणिग्रन्थे आदावेव "प्रत्यक्षानु-मानोपमानशब्दाः प्रमाणानीति गौतमसूत्रमवलम्ब्य 'प्रमाणतत्त्वं विविच्यत्" इत्यादिना तत्त्वचिन्तामणिग्रन्थो रचित इति न नवीनत्वं किमपि। यत्तु अवच्छेदकावच्छिन्न-शब्दादिभिर्व्याख्यातत्वेन नवीनत्वसाधनं तदपि शास्त्रतात्पर्यानवबोधादेव। पातञ्जल-दर्शने समाधिपादे २६ सूत्रं पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात्"। अत्र व्यासभाष्यम् "पूर्वे हि गुरवः कालेनाऽवच्छेद्यन्ते यत्रावच्छेदार्थेन कालो नोपावर्तते" इति। अत्र भाष्यटीकायां वाचस्पतिमिश्राः "व्याचष्टे पूर्वे हि इति। कालस्तु शतवर्षादिः अच्छेदार्थेन अवच्छेदेन प्रयोजनेन नोपावर्तते" इत्यादिदर्शनात्।



# महातार्किकस्य पक्षधरमिश्रस्येतिवृत्तम्

अयि गीर्वाणवाणीप्रियाः सहृदयधुरन्धरास्तार्किकशिरोमणयो न्यायाम्बुधौ निमग्ना विपश्चिदपश्चिमाः श्रीमन्तो विदन्ति यत्प्राचां विदुषामितिवृत्तं याथातथ्येन क्वापि सर्वाङ्गीणं नोपलभ्यते तथापि यथासामग्रि किञ्चिद् अन्विष्य पक्षधरमिश्रस्य चरितं चेतुं चेष्टयते प्रमाणन्तत्रमनीषण एव नायं लेखक इति ।

विदुषोऽस्य जीवनादिवृत्तान्वेषणमतिगहनकृत्यन्तत्रापि एतन्नामका कतिपये मनीषिणः पुरः प्रस्फुरन्ति। एको गीतागोविन्दकारोऽपरश्छन्दःसिद्धान्तकारोऽन्य आलोककार इतरश्चन्द्रालोककारो महादेवपुत्रो मातास्य सुमित्रा शब्दखण्डटिप्पणी-कारः कश्चन जयदेवाभिधो द्योतते । अन्ये च जयदेवनामानो बहवस्तत्र तत्र चर्चिता राजन्ते ।

तत्र साम्प्रतमहं दीधितिकारस्य रघुनाथशिरोमणेर्गुरोः पक्षधरमिश्रस्य विषये किञ्चिद्विनिवेदये। जयदेवापरनामा पक्षधरमिश्रो मिथिलायां गङ्गेशोपाध्यायानन्तरं नव्यन्यायस्य नव्यसम्प्रदायविधाता आलोकनामकामरकृते रचयिता समजनि । अयमा-लोकग्रन्थो गङ्गेशोपाध्यायकृतेस्तत्त्वचिन्तामणिग्रन्थस्य टीकाग्रन्थत्वेन ख्यातः। मिश्र स्यास्यविषये प्रसिद्धिः—

'पक्षधरप्रतिपक्षो न लक्ष्यते क्वापि लोकेऽस्मिन्' कर्णाटकस्य व्यासतीर्थे यस्य कालः षोडशशताब्द्याः पूर्वार्धभागो विश्रुतः। स व्यासतीर्थो मिश्रस्यास्य विषये वक्ति—

यदधीतं तदधीतं यन्नाधीतं तदप्यधीतम् ।
पक्षधरप्रतिपक्षो नावेक्षि विनाभिनवव्यासेन ॥

पक्षधरमिश्रस्य विजयवैजयन्ती तदैव रराज यदा रघुनाथशिरोमणिरस्य शिष्यत्वमङ्गीचकार ।

मिथिलायाः प्रसिद्धयनुकूलं हरिमिश्रात् पितृव्यतोऽधीतविद्यस्य पक्षधरापर-नामकस्य जयदेवस्य एते ग्रन्थाः प्रख्याताः ।

१. तत्त्वचिन्तामण्यालोकः ( प्रत्यक्षानुमानोपमानशब्दभागान्तः )

२. तत्त्वनिर्णयः

३. तिथिचन्द्रिका

४. शिशुबोधः

५. प्रसन्नराघवम्

तत्त्वचिन्तामण्यालोकस्य प्रत्यक्षभागीयमङ्गले इदं चित्रितम्—

वक्त्राणि पञ्चकुचयोः प्रतिबिम्बितानि
दृष्टवा दशाननसमागमनभ्रमेण
भूयोऽपि शैलपरिवृत्तिभयेन गाढ—
मालिङ्गितो गिरिजया गिरिशः तुनातु ॥
अधीत्य जयदेवेन हरिमिश्रात् पितृव्यतः ।
तत्त्वचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥

प्रत्यक्षखण्डान्ते च

इति महामहोपाध्यायमिश्रश्रीजयदेवविरचितः प्रत्यक्षालोकः समाप्तः ।

तत्त्वनिर्णये मङ्गलमाचरता जयदेवेन इत्थमभाषि

अवतु सततं शिवाङ्कशायी शिशुरफलीकृतदानवारियत्नः ।
तदनुकमलभूकृतप्रणामो गिरितनयार्पितपादपद्ममालः ॥

श्रये संसारपाथोधितापत्रयहरं हरम् ।
शरणं केशवस्यापि परार्थैकप्रयोजनम् ॥

न्यायार्णवपरिश्रान्तः सूरितारणसेतवे ।
गुरवे श्री वटेशाय……… रावर्कमतये नमः ॥३॥

श्रीमत्पक्षधरैरेष प्रणम्य पितरं गुरुम् ।
वटेश्वरं विमूढानां क्रियते तत्त्वनिर्णयः ॥

इतिमहामहोपाध्यायवटेश्वरात्मजमहामहोपाध्यायपक्षधरमिश्रकृततत्त्वनिर्णयः समाप्त इति ।

तिथिचन्द्रिकाया मङ्गले च

जयति चरणपद्मं श्रीमदाखुध्वजस्य

प्रणतसुरसमूहोत्तङ्गमौलिं प्रवर्ध्यात् ।
गलितमणिकणायोत्सङ्गमासाद्य शक्त्या
स्मृतिसृतिगतहेतुं लज्जयन्ते मनीशम् ॥

समस्तवस्तूदयसन्निबोधनिमित्तमेकं व्यवहारसिद्धयै ।
तिथ्यादिभिः कल्पितभेदमीशं नमामि कालाकलुषापनुत्यै ॥

जगद्गुरुं सर्वविदं प्रणम्य मृडं मृडानीं वरदां च देवीम् ।
तयोः प्रसादात्तिथिनिर्णयेषु विविच्य तिष्ठे सुधियोऽनुकाम्यम् ॥

इति महामहोपाध्यायश्रीपक्षधरमिश्रविरचिततिथिचन्द्रिकानिर्णयस्समाप्तः ।

शिशुबोधीयमङ्गलश्लोके

गौरीपयोधरस्पर्शद्विगुणीभूतवेपथुः ।
हरो गौरीमुखाम्भोजसतृष्णः पातु नः सदा ॥
प्रतिफणितं गलगरलं कज्जलबुद्धया पयोधरे देव्याः ।
प्रोञ्छितमिच्छुर्गिरिजाहसितो हरो जयति ॥
सुबोधः शिशुबुद्धीनां श्रीपक्षधरनिर्मितः ।
उपकाराय सर्वत्र कल्पिताञ्चैव सर्वतः ॥

शिशुबोधः सुबोधश्च एक एव ग्रन्थो मङ्गलाचरणस्योभयत्र समानात् ।

प्रसन्नराघवारम्भे च

चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः ।
श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः ॥
भालेष्वब्जभुवो लिखन्ति युगपद् ये पुण्यवर्णावलीः ।
कस्तूरीमकरीपयोधरयुगे गण्डद्वये च श्रियः ॥

वटेश्वरात्मजो भाण्डरयतनुकामूलोद्भवस्तार्किक आलोककारो जयदेवो महादेवात्मजजयदेवाद्भिन्नः ।

पक्षधरमिश्रः पीयूषवर्षो जयदेव एव प्रसन्नराघवरचयित्रा प्रस्तावनायामेव प्रमाणप्रवीणस्तर्कशास्त्रनिष्णातोऽहमिति व्यलेखि । काव्यनिर्माणस्य कोमलकला कर्कश-तर्कवचनप्रतिपादनक्षमता च सहैव स्थातुमर्हति । नात्र कश्चन संशयः काव्यकौमल्ये

तर्कशास्त्र बाधकं न अपि तु अत्यन्तं सहायकम्। स्थलविशेषमनुमवलोकयन्तः केचन ब्रुवते विद्वांसो यन्मिथिलायास्तार्किकशिरोमणिजयदेवमिश्रो न्यायक्षेत्रे पक्षधर-मिश्रापरनामा प्रसन्नराघवचन्द्रालोकयोः कर्त्ता जयदेवः साहित्यक्षेत्रे पीयूषवर्षा-परनामा च एक एव किन्तु धारणेयं मिथ्यात्वं भजते।

पक्षधरमिश्रो मिथिलानरेशस्य भैरवसिंहस्य राज्यकाले वर्तमान इति बहूनां सम्मतम्। ऐतिहासिका भैरवसिंहस्य समयं पञ्चदशशताब्दीमङ्गीकुर्वते। पक्षधरमिश्र-करेण लिखितं विष्णुपुराणमेकमुपलब्धं विद्वद्भिः। अस्य लिपिकालः ३४५ लक्ष्मण-संवत्सरो वर्तते—

**बाणैर्वेदयुतैः सशम्भुनयनैः संख्यां गते हायने।**
**श्रीमद्गौडमहीभृतो गुरुदिने मार्गे च पक्षे सिते॥**

लक्ष्मणसंवत्सरस्य प्रारम्भः ११११९ खीस्ताब्दे विद्यते। अनया आलोडनया १११६ + ३४५ = १४६४ खीस्ताब्दे पक्षधरस्य स्थितिर्युक्तिमती प्रतीयते। अनया दृष्ट्या पीयूषवर्षी जयदेवः पक्षधरजयदेवादभिन्न इति नौचित्यमवलम्बते। पक्षधरमिश्रेण गङ्गेशोपाध्यायविरचिततत्त्वचिन्तामणिग्रन्थस्य तत्त्वचिन्तामण्यालोकनामक एकः टीकाग्रन्थो व्यलेखि। पक्षधरमिश्रस्यापरो ग्रन्थो द्रव्यपदार्थालोको विद्यते। अत्रत्य-मालोकशब्दमाकर्ण्य चन्द्रालोकस्थमालोकशब्दश्चाकर्ण्य कतिपये विद्वांसो ब्रुवते काव्यकारो जयदेवो नैयायिकजयदेवादभिन्न इति। अनया रीत्या ध्वन्यालोकस्थमालोकशब्दं संश्रुत्य ध्वन्यालोककार आनन्दवर्धनो न अपि तु जयदेव एवेति वक्तुं शक्यम्। अनयैव दिशा राघवशब्दोपादानाद् अनङ्गहर्षस्य उदात्तराघवं मुरारेः अनर्घराघवं भास्करस्य उन्मत्तराघवञ्च एकस्यैव रचयितुर्जयदेवस्येत्यपि वक्तुं शक्यम्। किन्तु स्थिरमतिकाणां विचारकाणां समक्षमयं विचारो नौचित्यमञ्चति।

कतिपये विज्ञाः पक्षधरमिश्रस्य ग्रन्थं मण्यालोकं कथयन्ति किन्तु तद्ग्रन्थ-स्तत्त्वचिन्तामण्यालोक एव। यदि तद्ग्रन्थनाम मण्यालोकस्तदा मूलग्रन्थस्य नाम किं तत्त्वचिन्तेति वक्तुं शक्यम्। चिन्तामणेरालोकस्य ख्यापयितुं शक्यत्वेऽपि किं तत्त्व-चिन्तालोकोऽपि ख्यापयितुमर्हः। कतिपयैश्च तद्ग्रन्थनाम मान्यालोक इति व्यलेखि। मन्ये आंग्लभाषानुवादकरणाद् दोषोऽयं समुपजातः। जर्मनविद्वान् औफ्रेक्टमहोदयो निजीयायां 'केटलागोरस केटलागोरमनामिकायां ग्रन्थसूच्यां पञ्चदश जयदेवान् निर्णीतवान्। विद्वांसः परिगणितेषु जयदेवेषु जयदेवद्वयं नीत्वा प्रयतमाना अवद्योत्यन्ते यदुभयत्र एकत्वमेव नान्यत्वमिति किन्तु अप्रामाणिकमेतत्सर्वम्। प्राक् संस्कृतक्षेत्रे विद्वन्मण्डलीषु मान्यताप्रापणाय न्यायशास्त्रस्य अध्ययनं परमावश्यकमासीत्। जयदेव-काले भावनेयमतिप्रबला। अस्मादेव हेतोः आत्मानं पण्डितंमन्यं मन्यमानो जयदेवः

प्रमाणप्रवीणोऽहमिति उद्घोषयन् राजते। अनया रीत्या तार्किकजयदेवादभिन्नो रसिकजयदेव इति वक्तव्यं वितण्डामात्रमेव इति कस्यचिन्मतम्। तार्किकजयदेवस्य प्रसिद्धा रचना तत्त्वचिन्तमणेरालोकटीका विद्यते। द्वितीया रचना द्रव्यविवेकनामिका न्यायलीलावतीविवेकापरनाम्नी भासते। एतन्मातृकायाः १०३ पृष्ठेऽङ्कितमस्ति यत् 'श्री श्रीवर्द्धमानटीकायां पक्षधर्या द्रव्यपदार्थः सम्पूर्णः, एतन्मातृकान्ते 'किरणावली पक्षधरी' इत्याकारको लेखः। लीलावतीविवेकं विमृशन् वर्धमानो लिखति'—एतच्च द्रव्यविवेके सम्यक् प्रपञ्चितमितोहोपेक्षितम्'। तत्त्वचिन्तामणिविवेकनाम्नैव तत्त्वचिन्तामण्यालोकोऽवद्योत्यते अत एव किरणावलीविवेके उटङ्कितम्—"तथापीति" यद्यपि निषिद्धकर्मासक्तस्येति पूर्वदूषणमिहापि, आचारे च विशेषणं तत्रापि समानं तथापि तस्याभावगर्भतया गौरवकरत्वम् अत्र विधिमुखतया लाघवमिति हृदयेनैतदेव लक्षणं सिद्धान्तितम्। शेषं प्रत्यक्षविवेके प्रपञ्चितमितोहोपेक्षितम्। ६०६, ७६६, ७७६ B. le, and, १०१३ अनुमानविवेकस्य १४६, १६७.८३६-७ अनयैव दिशा गुणविवेकेऽपि चर्चा ८६७ उपलब्धा राजते। अनया दिशा विवेकनाम्नैव आलोकसंज्ञक उपलब्धो विद्यते। लीलावतीविवेकारम्भे पद्यमदो लिखितम्—

वन्दे तं देवकीपुत्रं पवित्रं पद्मलोचनम्।
उन्मिलति यतः सर्वं यत्र सर्वं निमिलति ॥

इति श्रीपक्षधरकृतो लीलावतीविवेकः परिपूर्णः।

प्रमाणपल्लवव्याख्यायां जयदेवशिष्येण शशिधेरण व्यलेखि—'अत एव प्रमाणपल्लवेऽपि अन्योन्याभावगर्भैव हेतुरिति सिद्धान्तितं गुरुचरणेनापीति। 'चिन्तामणिटीकालन्दनमातृका पृ. ३१४) तथ्यमिदं यद् विवेककारः पक्षधर आलोककारत्वेन प्रख्यातः। मिथिलापञ्जिकाया मौआलाशाखा सोदरपुर प्रशाखायां लिखितम्—मिश्रगुणे सुतौ मिश्रनागुजयदेवापरनामकमहामहोपाध्यायपाखूप्रसिद्धपक्षधरौ' किन्तु आलोककारत्वेन विवेककारत्वेनापि मिथिलायां वङ्गे च पक्षधर एव ख्यातः। अन्यस्य पक्षधरस्य निर्देशो नावाप्यते। प्रत्यक्षालोकारम्भे जयदेवो लिखति—

अधीत्य जयदेवेन हरिमिश्रात् पितृव्यतः।
तत्त्वचिन्तामणेरित्थमालोकोऽयं प्रकाश्यते ॥

आलोकनाम्ना तत्त्वचिन्तामणेर्विवेकटोकायाः ख्यातेराधारभूतमेकमात्रं पद्यमिदम्।

जयदेवस्य प्रधानशिष्यो भगीरथः (मेघः) जयदेवं मिश्रत्वेन निर्दिशति। भगोरथेन लीलावत्याः ४५ पृष्ठेऽलेखि एवं चेयं फक्किका किमितीत्यनन्तरमत्र तु

तल्लिखितं प्रमादादिति मिश्राणां लिखनं चिन्त्यम्। साम्प्रदायिकास्तु किमितीति फक्किकानन्तरमियं फक्किकां संचार्य योजयन्ति।

रुचिदत्तस्य भगीरथस्य च लेखेषु अनेकत्र मिश्रस्य नाम पक्षधर उपाध्यायो विवेककार आलोककृच्च उपलभ्यते। जयदेवः स्वपितृव्याद् हरिमिश्राद् न्यायशास्त्रम् अधीतवान्। महामहोपाध्यायो हरिमिश्रः स्वभ्रातृषु अग्रजत्वेनावाप्यते। लीलावती विवेके मिश्र एवं चर्चितः--हरिमिश्रास्तु-कर्मधारय एव समासः। नचोत्तमपदपूर्वनिपातापत्तिः, विशेषणविशेष्यभावं प्रति कामचारात्। यथा हि-उत्तमोत्तमत्वं पुरुषान्तराद् विशेषयति तथा पुरुषत्वमप्युत्तमान्तरादित्याह (वि० पृ० २० ) सम्भवतो हरिमिश्रः काशिकाया व्याख्याकार आसीत्। प्राचीनपरम्परानुसारं पक्षधरो यज्ञपत्युपाध्यायस्य छात्रोऽभवत्। यज्ञपत्युपाध्यायच्छात्रः पक्षधरमिश्रश्चिन्तामणेरालोककारः ( शब्द क. द्वितीयभागन्यायशब्दे )

पक्षधरमिश्रेण यज्ञपतिर्गुरुर्निर्दिष्टः। 'यद्धर्मावच्छेदेन' अनुमानखण्डे उपाधिसिद्धान्तस्य आरम्भे लिखितम्—'यथा च व्यञ्जनत्वेऽतिप्रसक्तिर्न दोषाय तथोक्तम्। एवं सति तत्रातिप्रसङ्गमाशंक्य तन्निरासप्रयासगौरवं च गुरूणां किमर्थमिति न जानीमः।

पद्मनाभमिश्रेण पक्षधरोद्धारे लिखितम्--एवमिति। व्यञ्जनवत्त्वेऽतिप्रसङ्गभङ्गाय यज्ञपत्युपाध्यायैर्यद्धर्मावच्छिन्नसाध्यव्यापकता तद्धर्मावच्छिन्नसाधनव्यापकतेति लक्षणार्थो निरुक्तो न चैवं तत्र याति ( नरहरिदूषणोद्धारे पृ० ६० )

गुरुच्छात्रयोर्मतभेदो मिथिलाया विचित्रमेकं महत्त्वपूर्णमवदानमवद्योत्यते। मिथिला वङ्गदेशश्च नव्यन्यायमवलम्ब्य विरुद्धौ अवतिष्ठेते। यज्ञपतिपुत्रो नरहरिर्जयदेवस्य शिष्यः यज्ञपतिशिष्येण जयदेवेन यज्ञपतिविरुद्धापत्तय उपस्थापिताः तासां समाधानं जयदेवशिष्येण नरहरिणा यज्ञपतिपुत्रेण विहितम्। वासुदेवमिश्रो जयदेवस्य पितृव्यजः शिष्यश्चासीत्। अनेन पितृव्यजयदेवपक्षखण्डकापत्तयः सम्यक् परिहृताः। एतेन च नरहरिणो स्थापितस्य परिहारस्य परिहारः सुसम्पन्नः। वाराणसीस्थेन वङ्गीयेन पद्मनाभमिश्रेण पक्षधरोद्धारं विलिख्य पक्षधरपक्षविरुद्धापत्तयो निराकृताः। प्रतीयते यदयं पद्मनाभमिश्रः षोडशशताब्द्यां लब्धसत्ताकः।

जयदेवस्य वंशजा अद्यापि मिथिलावनिं मण्डयन्ति। मिश्रो जयदेवः श्रोत्रियवंशज इति मन्ये। शाण्डिल्यगोत्रः सोदरपुरस्य वास्तव्योऽयमिति निश्चीयते। मौलआलग्रामस्य एतस्य पूर्वपुरुषो हलायुधो मिश्रस्यास्य जयदेवस्य पितामहः, परम्परया एतदपि वक्तुं शक्यं यज्जयदेवो यमसभग्रामेऽवसत्। एतत्पुत्रस्य नाम

महामहोपाध्यायो माधव इति प्रख्यातम् । जयदेवस्य पितृव्यजो वासुदेवः स्वपितृव्यजस्य भ्रातुः पङ्क्तीरेता अधोङ्किता उद्धृतवान्—

ननु तदा रूपाभाववति वायौ रूपसमवायो न भावाभावरूपत्वात्तस्य । न चेष्टापत्तिः, स्पर्शसमवायोऽपि तदा न स्यादेकत्वादिति चेन्न तत्र विशेषणतावच्छिन्नरूपाभावसद्भावात्, रूपविशेषणता च नास्त्येव । इयान् परं विशेषः-सा विशेषणता वायुतैवास्मन्मते तन्मते समवायेन फलतो न कश्चिद्विशेष इति । सोऽयं पितृवचनानबोधनिबन्धनो व्यामोहः । इदं तु चिन्त्यते । एतेन वचनादिन्यासेन निश्चीयते यन्माधवः पक्षधरस्य पुत्र आसीदिति । अयं च वासुदेवात्प्राक्कालिक इति प्रतीयते । माण्डा·वंशस्य गांगुमहोदयस्य पञ्च बालिका आसन्, पाखुमहाभागस्य पुत्रमाधवस्य तृतीयपुत्र्या गौर्या सह विवाहोऽभवत् । द्वितीयपुत्र्या जयमत्या च सह वासुदेवस्योद्वाहोऽभूत् । अन्तरङ्गबहिरङ्गसाक्ष्याधारतया पञ्चदशशताब्द्या उत्तरार्द्धे जयदेवस्य स्थितिः प्राक्कालिकी प्रतिभासते । गृहस्य नाम पाखुरिति, ब्रुवते तत्रत्यप्रसन्नराघवस्य रचयिताऽपि जयदेव एव आसीत् ।

शङ्करमिश्राद् विदुषः प्राचीनः पक्षधरमिश्र आसीत् । कदाचित्करिणमारुह्य शङ्करमिश्रः पक्षधरमिश्रद्वारपार्श्वतो गच्छन् पक्षधरेण दृष्टः । महतां प्राचां समक्षं उच्चैस्तिष्ठन् यातीति न पेशलतामर्हतीति क्रुद्धः पक्षधरः प्राह—

पक्षधरमिश्रः—अप्युच्चैः पतनम् ।

शङ्करमिश्रः—ध्रुवे व्यभिचारः ।

पक्षधरः—सोऽपि पतिष्यत्येव ।

शङ्करमिश्रः—प्रागभावे मानाभावः ।

पक्षधरमिश्रः—अत्यन्तं क्रुद्धः प्रोवाच त्वं गौः ।

शङ्करमिश्रः—

त्वं गौरिति श्रुत्वा सद्य उत्तरितवान्—

किं गवि गोत्वमुतागवि गोत्वं
चेद् गवि गोत्वमनर्थकमेतत् ।
भवदभिलषितमगोरपि गोत्वं
भवतु भवत्यपि सम्प्रति गोत्वम् ॥

किन्त्विदं न तथ्यमुभयोरसमानकालिकत्वात् ।

कदाचिद् हंसभट्टो वेदान्ती वचनमेतदवोचत्—

पलायध्वं पलायध्वं रे रे वर्णरतार्किकाः ।
हंसभट्टः समायाति वेदान्तवनकेसरी ॥

श्रुत्वैव पक्षधरेणोक्तम्—

भिनत्तु नित्यं करिराजकुम्भं
बिभर्तु वेगं पवनातिरिक्तम् ।
करोतु वासं गिरिराजश्रृङ्गे
तथापि सिंहः पशुरेवनान्यः ॥

एवंविधा अनेका जनश्रुतयः
पक्षधर विषये मिथिलायां प्रख्याताः ।

अस्य शिष्यो भगीरथठाकुरमहोदयः—

विंशाब्दे जयदेवपण्डितकवेस्तर्काब्धिपारंगतः
श्रीमानेष भगीरथः समजनि श्रीचन्द्रपत्यात्मज—
श्रीधीरातनयेन तेन रचिता श्रीमन्मदेशाग्रज-
श्रीदामोदरपूर्वजेन जयतादाचन्द्रमेषा कृतिः ॥

जयदेवगुरोर्वाचि ये केचिद्दोषदर्शिनः ।
प्रबोधाय मया तेषां दीप्तिर्भूयोऽभिदीप्यते ॥

सन्तोषलेशं समवाप्य लेखं
श्रीपक्षसूरेर्महनीयवृत्तम् ।
निर्माय शिष्यस्य विशिष्टसूरे
रघोस्तदीयस्य लिखामि वृत्तम् ॥

## कल्पनाधिनाथस्य तार्किकशिरोमणे रघुनाथस्येतिवृत्तम्

अज्ञातवृत्तरघुनाथबुधं विलोक्य
खिन्नोऽपि दैवरसिकं नयशास्त्रकान्तम् ।
लोकैकधन्यमणिकारमतप्रभेशं
चिन्वन्रघुं सुकृतिनं परिशीलयेऽहम् ॥

महनीयवृत्तस्य रघुनाथस्यापि जीवनवृत्तं प्राचामाचार्याणामन्येषां वृत्तमिवान्धकाराच्छन्नमेव । स्वप्रातिभप्रकर्षेण कदाचिद् येन भारतं भारतं नव्यालोककञ्जपुञ्जं व्यधायि तस्य जीवनवृत्तावगतये न किमपि दिव्यनुपकरणं वन्सुधरायामस्याम् ।

तज्जीवनसम्बद्धा विमता विविधा चर्चा विद्वन्मण्डले बाभाति ! नवद्वीपवासिनं रघुनाथं मन्वते केचन । अपरे वङ्गदेशस्य स्थलविशेषं हट्टाभिधानं जन्मस्थानमङ्गीकुर्वते । कश्चिदेनमविवाहितं ब्रूते । कोऽपि रामभद्रतर्कालङ्कारमेतत्पुत्रं ब्रवीति । दिशानया वृत्तमस्य संशयाकीर्णं निश्चेतुमशक्यमिव प्रतिभासते । याथातथ्येन तद्वृत्तोपस्थापनमतिदुरूहतां भजमानमिव भासते ।

रघुनाथशिरोमणेर्विषये प्रवादद्वयं महत्त्वाधायकं राजते ! नवद्वीपपूर्ववङ्गस्थलविशेषप्रवादभेदात् । नवद्वीपनिवासी एकनेत्रो रघुनाथः चतुर्वर्षवयस्कः पञ्चवर्षवयस्को वा रघुनाथः पितृविहीन इत्यत्र नास्ति संगीतिः । अर्थस्थितिर्दैन्यं दधाना क्लेशकारिणी तदानीन्तस्य । भैक्षवृत्तिर्जीवनपोषणाय भोतिदा तन्मातुर्हृदयविदारिणी रराज । बालस्य रघुनाथस्याध्ययनस्यार्थिकविषमता अत्यन्तं बाधिका मातुराशासाफल्याय नालम् । किन्तु असहायसहायो रघुनाथोऽपरो विभुर्दीनानाथोऽनाथस्य सर्वस्य सहायो विश्वरक्षकत्वेन प्रख्यातः सार्वकालिकः सार्वदेशिकश्च सर्वत्रोपलब्ध इत्यत्रापि न जातु संशीतिः । विशिष्टवैदुष्यविभूषितान्तःकरणो वासुदेवसार्वभौमस्तदानीमासन्नः सुलभश्च । वङ्गवासिनां नव्यन्यायाध्यापको विश्रुतदिगन्तकीर्त्तिः शास्त्रार्थकलापारङ्गतो वासुदेवो वासुदेवानुकम्पया परिभ्रमन् रघुनाथजन्मस्थलीमवाप । रघुनाथमात्रा सत्कृतो मेधाविन रघुनाथं पाठयितु ययाचे । एकपुत्रसहायापि तन्माता सहर्षं पुत्रोन्नयनाय याच्ञां तां सफलीचकार । मिथिलां गन्तुमनर्हा अध्ययनशीला वासुदेवादस्मादधीत्य आत्मनः कृतकृत्यान् धन्यांश्च मेनिरे तदानीमिति श्रूयते । रघुनाथमाता जीवनयात्रासाफल्याय वासुदेवसेवितचतुष्पाठ्यां छात्राणां भोजनादिव्यवस्थाव्यवस्थितये सेविकेति केचन ब्रुवते ।

एकस्मिन्नह्नि रघुनाथो मातुरनुज्ञया वह्निमानेतुं चतुष्पाठ्यां कस्यचन छात्रस्य पार्श्वमुपेत्याग्निं याचितवान् । सार्वभौमोऽपि तदानीमासन्नस्तत्र । गुरुवासुदेववार्तालापे

व्यस्तो भोजनपरिपाकव्यग्रस्यादौ संलग्नश्च छात्रो रघुनाथाग्निप्रार्थनां श्रुत्वाऽपि झटिति दातुमसमर्थः किमपि नोक्तवान्। पौनःपुन्येन रघुनाथेनाभ्यर्थितश्छात्रोऽग्निं महानसान्निःसार्य प्रोक्तवान् गृहाणाग्निं त्वरितं हस्तौ प्रसार्य निर्भीको रघुनाथोऽविलम्बं समीपस्थान् रजःकणान् नीत्वा हस्तौ प्रसारितवान्। तादृशं रघुनाथमवलोकयन् तत्करयोरुपरि वह्निं स्थापितवान्। घटनामिमां विलोकयन् पञ्चवर्षवयस्कस्य रघुनाथस्य प्रतिभामपूर्वां प्रशंसन् आश्चर्यान्वितोऽभवद् वासुदेवः। मेधाविनं तं पाठयितुं तन्माता निर्दिष्टा। मातुरभिच्छान्तर्लीना प्रबुद्धा साफल्याय साशा च। अन्तर्यामि-वासुदेवस्वरूपोपस्थितसार्वभौमवासुदेवचरणयोरर्पितवान् रघुनाथमध्यापनायेति केचन आचक्षते।

यद्वा तद्वा भवतु। रघुनाथशिक्षा सार्वभौमवासुदेवादेवारब्धा। वङ्गीयपरम्परां परिहृत्य अक्षरारम्भोऽपि सार्वभौमादेव सम्पन्नः। श्रुतधरो रघुनाथः कवर्णानन्तरं खवर्णमाकर्ण्य जिज्ञासां चक्रे कथं कवर्णानन्तरं खवर्णोच्चारणं भवतः प्रमाणिकं कथन्न खवर्णोच्चारणानन्तरं कवर्णोच्चारणं सङ्गतमिति। बालस्य रघुनाथस्य प्रश्नमनुमाकर्ण्य साश्चर्यो वासुदेवः कौतूहलस्यास्यापनोदाय रघुनाथस्य तन्त्रव्याकरणादिदृष्ट्या समाधानं चक्रे। रघुनाथोऽपि वासुदेवाभिप्रायमङ्गीचक्रे। प्रत्यहं निजीयाभिर्नवीनाभिर्जिज्ञासाभि-वासुदेवहृदयमाकृष्टवान् बालो रघुनाथः समोदं ता निरस्य जिज्ञासा रघुनाथोद्भूता प्रेम्णा पाठयामासैनं वासुदेवः। प्राप्तां छात्राणामध्यापनापेक्षया रघुनाथाध्यापनेऽत्यन्तं तुतोष सार्वभौमः। एकदा गुरुणा निर्दिष्टो रघुनाथो झटिति हस्ते कुसुमानि नीत्वा आगत्य गुरुं निवेदितवान् आनीतानि पुष्पाणि। कुपितो वासुदेवः प्रोवाच रे निर्बोध हस्ते स्थापयित्वा कुसुमानि त्वयानीतानि नैतानि पूजायोग्यानि दुष्टानीमानि। श्रुत्वैव सभयो रघुनाथोऽञ्जलिस्थकुसुमानि कदलीदले संस्थापितानि साक्षाद्धस्तसम्बद्धानि च दूरीकृतानि। रहस्यमेतन्नावगतवान् वासुदेवो विस्मयान्वितो जिज्ञासितवान् किं कुरुषे साम्प्रतं रघुनाथ? रघुनाथेनोक्तं पवित्राणि पुष्पोपरि वर्तमानानि कुसुमानि कदलीदले स्थापितानि साक्षाद्धस्तसम्बद्धानि दूरीकृतानि। पुष्पाश्रयाणि पुष्पाणि न गर्हितानीति-भवतामुपदेशः। उपदेशस्यास्य साफल्यं तन्वे। समाधानमाकर्ण्यामुं मन्त्रमुग्ध इव वासुदेवोऽत्रतस्थे। प्रसन्नाद् गुरोरधीत्य विद्यां साफल्यमधिगतवान् शिरोमणिः। रघुनाथस्य विद्या दैनन्दिनं चान्द्री कलेव ववृधे। फलतो व्याकरणकोशछन्दोऽलङ्कारादि-शास्त्राणि युवावस्थायामेवायत्तीकृतानि। दुरूहं न्यायशास्त्रञ्च युवावस्थारम्भकाले एवात्मसात्कृतम्। शिष्यस्य रघुनाथस्य सर्वान् प्रश्नान् समाधायापि वासुदेवः सन्तोषं परं न लेभे। रघुनाथो गुरुणा बोधितो यत् मिथिलायां महामतिपक्षधरमिश्रपार्श्वं व्रज गत्वा च तत्र सर्वाः शङ्का उन्मूलय। मिथिलाविद्यैश्वर्यचर्चामाकर्ण्य रघुनाथः पक्षधर-मिश्रादध्येतुमियेष गुरुप्रस्तावानुकूलं मिथिलां गन्तुं कृतसंकल्पोऽभवच्च।

रघुनाथो मुहूर्त्ते शुभे गुरुं जननीञ्च प्रणम्य द्वाभ्यां मित्राभ्यां सह मिथिलायां प्रतस्थे। सन्तुष्टहृदयेन वासुदेवेन मिथिलां गन्तुं रघुनाथो निर्दिष्ट इति केचन कथयन्ति। निजीयसमाधानासन्तुष्टस्य रघुनाथस्य प्रश्नोत्तरतोषाय मिथिलां गन्तुं विवशो भूत्वा वासुदेवस्तस्मै अनुज्ञां ददौ इति केषाञ्चनाभिप्रायः। परस्परं मतभेदे निजीयान् सिद्धान्तान् समर्थयितुं प्रबलान् कर्तुञ्च महामतिं पक्षधरमिश्रं प्राप्तवान् मिथिलायां रघुनाथ इत्यपरेषां दृष्टिः। वङ्गदेशप्रदत्तोपाधिर्मिथिलायां न गण्यतेऽपि तु तस्यावमाननैव तत्रत्यैः क्रियतेऽत एव पक्षधरं पराजेतुं रघुनाथो मिथिलां प्रापेत्यपि दृष्टिः केषांचिद् भासते। पक्षधरस्य शिष्यत्वग्रहणं रघुनाथस्य एकं विशेषकौशलम्। अविश्रामान्तयात्रया पक्षधरं प्राप्तुं मिथिलायां रघुनाथः समुपस्थितः। पक्षधरान्वेषणे कापि बाधा नाधिगता मिथिलायाः शारदीयं पूर्णं शशिनं पक्षधरं को न वेत्ति? स पक्षधरस्य अध्यापनशालमनायासं प्राप्तवान्। अवलोकयच्च पक्षधरं चतुष्पाठ्या उपवेशनक्रमे निर्मिते एकस्मिन्नुच्चैः स्थाने उन्नतासने उपासीनं पाठस्थापकं सूरिम्। क्रमशः छात्रा उन्नतावनतासने उपविश्य पठने व्यापृताश्च दृष्टा रघुनाथेन। रघुनाथ प्रार्थनया पक्षधरनिर्देशानुसारं छात्रेणैकेन रघुनाथस्य कृते स्थानादिव्यवस्था सत्वरं सम्पादिता। मित्रैः साकं रघुनाथः पादौ करौ च प्रक्षाल्य नित्यकृत्यादिकं समाप्य विश्रामं लेभे। पक्षधरस्य पत्न्या तेषां समेषामभिनवानां कृते भोजनादिकं प्रेषितम्। पथश्रान्तपथिका रघुनाथादयो भोजनादिकं सम्पाद्य मार्गश्रमजन्यं निद्रासुखमनुभूय परां निर्वृतिं प्रापुः।

पक्षधरस्य सर्वां रीतिं नीतिञ्च वासुदेवादेव परिचिन्वन् रघुनाथः केनाप्यनिर्दिष्टोऽपि सर्वापेक्षया अवनतासने उपाविशत्। पक्षधरप्रचालितरीत्या निम्नकोटिकस्य प्रधानच्छात्रो रघुनाथविद्यापरीक्षणे प्रवृत्तः। द्वित्रचतुरचर्चानन्तरमेव उच्चकोटिकच्छात्राणां मध्ये प्रवेशाय अनुमतिं लब्ध्वा तत्रत्येन प्रधानेन सह विवाद उपस्थापितः। तत्रापि अधिकचर्चाया अवसर एव नोपस्थितः। तत्रापि सर्वे पराजिता रघुनाथवादाहवे। तत उच्चकोटिकानां छात्राणां मध्ये प्रविश्य शास्त्रविचारः प्रारब्धः। तत्रत्यानां समेषां दयनीयैव स्थितिर्दृष्टा। क्रमशः तत्रत्यानां ततोऽपि उच्चकोटिकानां समक्षं विचाराहवे आहूतो रघुनाथः प्रतिपक्षी निजीयविचारधारया निखिलान् पराजितवान्। पक्षधरस्य मनसि अभिनवा चिन्ता समुत्पन्ना। कोलाहलस्य विवादस्य च चरमं रूपं निशम्य अन्तिमोन्नतासनस्थस्य पक्षधरस्य शास्त्रार्थशैली रघुनाथपराजयाय रघुनाथमाहूतवती। ग्रन्थरचनातो विरता पक्षधरलेखनी निश्चला व्यापारशून्या शुशुभे। आहूतं समीपस्थं रघुनाथम् आह्वायकान् छात्रांश्च पक्षधरो विलोकितवान्। आह्वायकेषु रघुनाथेन सह वादाहवे प्रवृत्तस्य विचारं रघुनाथस्य च विचारमाकर्ण्य शिष्यस्यात्मीयस्य दौर्बल्यं संलक्ष्य क्रुद्धान्तःकरणोऽपि पक्षधरो मौखिकं सौजन्यं प्रकाशयन्नुवाच—

२२

आखण्डलः सहस्राक्षो विरूपाक्षस्त्रिलोचनः ।
अन्ये द्विलोचनाः सर्वे को भवानेकलोचनः ॥

श्रुत्वैव सत्वरं रघुनाथेनोत्तरितम्—

कुशद्वीपनलद्वीप नवद्वीपनिवासिनः ।
तर्कसिद्धान्तसिद्धान्तशिरोमणिमनीषिणः ॥

कुत्रचिद्रघुनाथकृतमुत्तरस्वरूपमित्थं प्राप्यते -

आखण्डलः सहस्राक्षो विरूपाक्षस्त्रिलोचनः ।
अन्ये विलोचनाः सर्वे वयं न्यायैकलोचनाः ॥

तदनन्तरं प्रासङ्गिकचर्चा प्रारब्धा । पक्षधरः शिष्यस्य पक्षं गृहीत्वा विचारे सन्नद्धः । विचारप्रसङ्गे प्रतिद्वन्द्वी रघुनाथो ज्ञानोत्पत्तौ अपेक्षितस्य नैयायिकाभिमतस्य सामान्यलक्षणसन्निकर्षस्य खण्डनं कृतवान् । सोढुमनर्हस्तत् पक्षधरः क्रुद्धोऽब्रवीत्—

वक्षोजपानकृत् काण संशये जाग्रति स्फुटम् ।
सामान्यलक्षणा कस्मादकस्मादपलप्यते ॥

काणशब्दाद् रघुनाथस्य हृदि भीषणासह्यवेदनाऽविर्भूता सद्य उत्तरितं तेन—

योऽन्धं करोत्यक्षिमन्तं यश्च बालं प्रबोधयेत् ।
तमेवाध्यापकं मन्ये तदन्ये नामधारिणः ॥

सामान्यलक्षणायाः सम्बन्धे एव पक्षधरेण सह रघुनाथस्य चर्चैषा प्रख्याता । इदन्तु तथ्यं यद्रघुनाथः पक्षधरस्य प्रमुखो मेधावी शिष्यः । पक्षधरमिश्रस्य प्रियः शिष्योऽयं शिरोमणिः पक्षधरपत्न्याः पुत्रोऽपर इव रराज । वर्षत्रयं तत्रैवोषित्वा समग्रस्य न्यायशास्त्रस्याध्ययनं कृतवान् शिरोमणिः ।

मेधाविनो रघुनाथस्य कुशाग्रबुद्धिं परिलक्ष्य अतिशयानुरागवान् पक्षधरः स्नेहातिशयं कदाचिच्चक्रे । कदाचिच्च प्रतिभोत्कर्षमसहमान ईर्ष्यातिशयञ्च चकार ।

कर्हिचिद् काव्यचर्चां कुर्वाणः पक्षधरोऽब्रवीद्रघुनाथस्तव काव्ये प्रगतिर्नास्ति । रघुनाथाय पक्षधरोक्तिरियं नारोचत । तेनोक्तम्—

काव्येऽपि कोमलधियो वयमेव नान्ये ।
तर्केऽपि कर्कशधियो वयमेव नान्ये ॥

तन्त्रेऽपि यन्त्रितधियो वयमेव नान्ये।
कृष्णेऽपि संयतधियो वयमेव नान्ये॥

श्रुत्वेदं पक्षधर उवाच त्वयि कवित्वशक्तिर्विद्यते किन्तु कवित्वशक्तेरुत्पादनाय कदा शिक्षावाप्ता, रघुनाथेनोत्तरितम्—

कवित्वं कियदौन्नत्यं चिन्तामणिमनीषिणः।
निपीतकालकूटस्य हरस्येवाहिखेलनम्॥

एकस्मिन्नह्नि पक्षधरोऽब्रवीत् केवलं वैयाकरणाः खफछठथेषु वर्णेषु व्यस्तास्तथा नैयायिका घटपटादिषु व्यस्तास्तिष्ठन्ति।

रघुनाथोऽस्योत्तरं शनैः शनैरपठत्—

पठन्तु कतिचिद्धठात् खफछेति वर्णान् शठा-
घटः पट इतीतरे पटु रटन्तु पाटवात्।
वयं वकुलमञ्जरीगलदमन्दमाध्वीझरी-
धूरीणपदरीतिभिर्भणितिभिः प्रमोदामहे॥

कस्मिंश्चिद् दिने रघुनाथं संलक्ष्य वङ्गीयानाचारान् निन्दन् पक्षधरो रघुनाथस्य कवित्व-शक्तेरवज्ञां कृतवान्। तामसहमानो रघुनाथोऽवोचत्—

अनास्वाद्य गौडीमनाराध्य गौरीं
विना तन्त्रमन्त्रैर्विना शब्दचौर्य्यम्।
प्रबुद्धप्रसिद्धप्रबन्धप्रवक्ता-
विरञ्चिप्रपञ्चे मदन्यः कविः कः॥

अनया दिशा कथनोपकथनव्याजेन शिरोमणेर्यासां कवितानां संग्रहो राजेन्द्रघोषेणा-कारि ता एवंविधाः—

साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा भृशकर्कशे मम समं लीलायते भारती।
शय्या वास्तु मृदुतरच्छदवती दर्भाङ्कुरैरावृता
भूमिर्वा हृदयं गतो यदि पतिस्तुल्या रतिर्योषिताम्॥

येषां कोमलकाव्यकौशलकलालीलावती भारती-
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता-
स्तैः किं मत्तकवीन्द्रकुम्भशिखरे क्रोधान्न देयाः शराः ॥

तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती
सा काव्ये मृदुलोक्तिसारसुरभौ स्यादेव मे कोमला।
या तीक्ष्णा प्रियविप्रयुक्तयुवतीहृत्कर्तने कर्त्तरी
प्रेयोलालितयौवने न मृदुला सा किं प्रसूनावली ॥

श्लाघ्यास्ते कवयो यदीयरसना रुक्षाध्वसञ्चारिणी-
धावन्तीव सरस्वतीद्रुतपदन्यासेन निष्क्रामति।

अस्माकं रसपिच्छिले पथि गिरां देवी नवीनोदयत्-
पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते ॥

मातङ्गीमिव माधुरीं ध्वनिविदो नैवस्पृशन्त्युत्तमां-
व्युत्पत्तिकुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी।
कस्तूरीघनसारसौरभसुहृद्व्युत्पत्तिमाधुर्ययो-
र्योगः कर्णरसायनं सुकृतिनः कस्यापि सञ्जायते ॥

कश्चिदेवमपि मनुते यत् कथनोपकथनप्रसङ्गेन रघुनाथेन कविता एता श्राविताः। गुरुः पक्षधरो रघुनाथस्य प्रतिभयातिप्रसन्नोऽभवत् रघुनाथश्च गुरु-श्रद्धातिशयान्वितः।

उपाधिमधिगत्य गृहप्रत्यावर्त्तनाय समुत्सुकं रघुनाथं वीक्ष्य पक्षधरेणोक्तं पुस्तकादीनि नीत्वा गृहं गन्तुं न शक्यते मिथिलानियमविरुद्धमेतदनुष्ठानमिति।

तदनन्तरं कतिचिद् दिवसान् स्थातुं तत्रैव रघुनाथो याचितवान्। स्थित्वा च पुस्तकानि कण्ठस्थीकृतानि।

कतिपये कथयन्ति यद् यदा पुस्तकानि नीत्वा रघुनाथो गृहं गन्तुमुद्यतः पक्षधरेण निषिद्धस्तदा क्रुधो रघुनाथः पक्षधरवधाय यतमानोऽवस्थितः। गुरुवधार्थं तीक्ष्णमस्त्रमादाय रात्रौ पार्श्वस्थः सेव्ययोर्दम्पत्योर्वार्त्तालापाद् निश्चिनुते यन्मयि

गुरोरीर्ष्या न विद्यतेऽपि तु नियमविरुद्धाद्धेतोरहं गुरुणा वारितः। निश्चित्य निर्जीयं दोषं तुषानले प्रवेष्टुं गुरुं याचितवान् गुरुणा गुरुपत्न्या च तत्रापि निषेध एव प्राप्तः। अग्निप्रवेशानुमतिं न लब्धवान्

कतिपये मनीषिणोऽन्यथैव कथयन्ति यद् राजाज्ञया पुस्तकानि नीत्वा रघुनाथः स्वगृहं ययौ। तेषां ग्रन्थानां टीकाश्च कृतवान्। येषां ग्रन्थानां टीका व्यधायि रघुनाथेन ते समे ग्रन्था मिथिलायां सुरक्षितास्तदानीम्। कथनमिदमेव कतिपयानामौचित्यं भजते। पुस्तकानि स्थित्वा अभ्यस्य टीका विहिता रघुनाथेन नेदमौचित्यमञ्चति। केवलेनाभ्यासेन टीकाकरणस्यासङ्गतत्वात्।

पुस्तकानि नीत्वा गृहं गन्तुमुद्यतो रघुनाथो न निषिद्धः पक्षधरेणापि तु मध्येमार्गं तदीयच्छात्रैराक्रान्तो रघुनाथः स्वयमेव तानि ददौ तेभ्यः। पक्षधरेण निर्दिष्टाः छात्रा एतत्कर्त्तुमिति रघुनाथमनसि आशङ्कापि जातेति कतिपये विद्वांसो ब्रुवन्ति। अस्मादाघातादेव गुरुवधार्थमुद्यतो रघुनाथस्तयोर्वार्त्तालापमाकर्ण्य ततो विरतश्चेत्यादिपक्षा अनेके विवादग्रस्तास्तद्विषये राजन्ते। फलतो रघुनाथो गृहमाययौ। यथाविधि वासुदेवसार्वभौमोऽभ्यर्थितश्च। वार्तालापप्रसङ्गे वासुदेवेनोक्तम्

अयि दिवसमनैषीः पद्मिनी सद्मनित्वं-
रजनिषु निरतोऽभूः कैरविण्यां रमण्याम्।
कथय कथय भृङ्ग स्वच्छभावेन तावत्-
किमधिकसुखमनैषीरत्र तत्र वेति॥

तदनन्तरं रघुनाथेनोक्तम्—

त्वं पीयूषदिवोऽपि भूषणमसि द्राक्षे परीक्षेत को-
माधुर्यं तव विश्वतोऽपि विदितं साध्वी च माध्वीकता॥
किन्त्वेकन्त्वपरन्त्वरुन्तुदमपि ब्रूमो न चेत्कुप्यसि-
यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः॥

रघुनाथवाचा भृशं सन्तप्तो वासुदेवोऽवोचत्—

यस्या जन्मान्यवंशे वसतिरपि सदा दूरदेशे पुरासीत्-
सैषा मृत्वा वधूटी प्रकटितविनया वेश्ममध्ये प्रविश्य।
आजन्मप्राणतुल्यान् गुरुजनजननीसोदरान् बन्धुवर्गान्-
दूरीकृत्वा स्वगेहात् पतिमभिरमते धिग् गृहस्थाश्रमं तम्॥

निःस्वोऽपि रघुनाथो नवद्वीपमागत्य समृद्धिसम्पन्नाद्धरिघोषात् साहाय्यमधिगत्य गोशालपार्श्वे एकां चतुष्पाठीं निर्मितवान् देशस्य विभिन्नभागादागत्य अनेके जना अधीत्य न्यायशास्त्रं तत्रपारङ्गमा अभवन्। तत्त्वचिन्तामणेर्दीधितेः प्रकाशनमस्मादेव स्थानात्सम्पन्नम्। विद्यार्थिनां समागमनेन विचारकोलाहलेन हेतुना च नव्यन्यायभाषानभिज्ञाः कतिपये रघुनाथविद्यालयमपि हरिघोषगोशालत्वेन उद्घोषयन्त उपहसन्तिस्म।

स्थानेऽत्रैव वसन् रघुनाथोऽध्यापनं नाना ग्रन्थानां निर्माणञ्च चक्रे। तद्रचिता ग्रन्थाः—

१. तत्त्वचिन्तामणिदीधितिः।

२. पदार्थतत्त्वखण्डनम्

३. आत्मतत्त्वविवेकटीका।

४. क्षणभङ्गवादः।

५. नञर्थवादः।

६. आख्यातवादः।

७. लीलावतीटीका।

८. द्रव्यकिरणावलीप्रकाशदीधितिः।

९. खण्डनखण्डखाद्यटीका भूषामणिः। रघुनाथनाम्ना प्रख्यातापि नास्य रघुनाथशिरोमणेरयं ग्रन्थः।

१०. गुणकिरणावलीप्रकाशदीधितिः।

११. न्यायलीलावतीप्रकाशदीधितिः।

१२. न्यायलीलावती विभूतिः।

१३. मलिम्लुचविवेकः।

अस्योद्वाहविषये मतद्वयं केचन ब्रुवतेऽस्य विवाहोऽभवत् केचन च कथयन्ति एषोऽविवाहित इति।

वैदिकसंवादिनीनामककुलग्रन्थानुकूलमस्य जीवनवृत्तमित्थं प्राप्यमाणमवद्योतते—

५२ त्रिपुराब्देऽर्थात् ६४१ खृष्टाब्दे श्रीहट्टान्तर्गतपञ्चखण्डनामके स्थाने मिथिलादेशस्य कात्यायनगोत्रजः श्रीधराचार्यो मिथिलात आगत्य वसतिं निजीयां

कृतवान्। वंशेऽत्रानेके मनीषिणो लब्धजन्मानः। सप्तविंशतिपुरुषानन्तरमत्र वंशे गोविन्दचक्रवर्ती अजायत। अस्य शुद्धिदीपिकाया दीपिकाप्रभातटीका प्रख्याता विद्यते गोविन्दचक्रवर्तिपत्नीसीतादेवीगर्भजो रघुपतिरभवत्। तदनन्तरं रघुनाथस्य जन्म। एष रघुनाथो रघुनाथशिरोमणिरेव। उक्तस्य रघुपतेर्विवाहः सुदिवनारायण राज्ञः खञ्जया कन्यया रत्नावत्या सह बभूव। चतुर्वर्षवयस्कस्य पञ्चवर्षवयस्कस्य वा रघुनाथस्य पिता दिवङ्गतः। निःस्वो रघुनाथो जन्मत एव आसीत्। सीतादेवी भिक्षावृत्त्या पुत्रद्वयं ररक्ष। पञ्चवर्षवयस्को रघुनाथः शिवरामतर्कवागीशस्य चतुष्पाठ्यामध्येतुं गतवान्। यथा वासुदेवसार्वभौमेन सह शङ्कासमाधानमेतस्य पूर्वं चर्चितं तथैव शिवरामेण सहापि प्रश्नजिज्ञासादिकं रघुनाथस्यावाप्यते।

एकादशवर्षवयस्कस्य रघुपतेर्विवाहः सुदिवनारायणेन ब्राह्मणानाहूय तदीयं सर्वमवगत्य निजीयया कन्यया खञ्जया रत्नावत्या सहाकारि। रघुनाथस्य तन्मातुः सीतायाश्चानिच्छया विवाहकृत्यं सम्पन्नम् रघुपतेः। विवाहोऽयं निन्दितोऽभवत्। रघुपतिविवाहनिन्दामाकर्ण्य ततः स्थानान्तरं गन्तुकामा सीतादेवी तत्पुत्रो रघुनाथश्च। तदानीं नवद्वीपस्य प्रख्यातिरासीत्। सीता रघुनाथश्च तत्रैव गन्तुमनाः। किन्तु कथं स्थानमिदं परित्याज्यमिति मनसि नागतम्। कदाचिद् गङ्गास्नानावसरं प्राप्य ग्रामवासिभिः सह सीतादेवी पुत्रं रघुनाथं नीत्वा मक्सुदाबादनगरं गतवती। आगत्यात्र सीता भीषणरोगाक्रान्ता जीवनाशारहिता जाता। सीतां रुजाक्रान्तामेव दुःखित रघुनाथं च परिहाय ग्रामवासिनस्ततो जग्मुः। किन्तु भगवदनुकम्पया पञ्चानां व्यक्तीनां साहाय्येन रोगमुक्ता सीता तदानीम्। तत्रत्यं वणिजमेकं सम्प्रार्थ्य तदाश्रया जाता। एष वणिङ् नवद्वीपं गमिष्यतीति संश्रुत्य तेनैव सार्द्धं नवद्वीपं गन्तुमना अभवत्। प्रसन्नो वणिग् गन्तुमाज्ञापयामास। पुत्रेण सह सीता वणिक् साहाय्येन नवद्वीपं गतवती।

आगत्यात्र प्रख्यातस्य महामनीषिणो वासुदेवसार्वभौमस्य चतुष्पाठ्यां गतवती। निराश्रया सा परिचारिकावृत्तिमङ्गीकृत्य विद्यालयस्य सेवायां तत्परा। पुत्रो रघुनाथश्च वासुदेवस्य प्रियतमशिष्यत्वेन ख्यातिङ्गतः। अनन्तरं मिथिलां गत्वा-त्रिंशद्वर्षवयस्को मातृवियोगाक्रान्तोऽपि रघुनाथोऽध्ययने रतो न्यायविद्यामुत्कृष्टां लब्धवान् तत्र।

शिरोमणेः प्रथमरचनायां प्रत्यक्षमणिदीधितेरारम्भे पद्यमिदं भासते---

गिरं गुरूणां हृदये निधाय-
विधाय सिद्धान्तसरोऽवगाहम्।
संक्षेपतः श्रीरघुनाथनामा
चिन्तामणेर्दीधितिमातनोमि ॥

अनुमानचिन्तामणिदीधितौ—

जटाजूट भ्राम्यन्त्रिदशतटिनीनीरभिदुर-
स्फुटद्रत्नाम्भोजस्फुटमुकुटसाहस्त्रकिरणः ।
फणानां साहस्रं समणिफणिराजस्य मधुरं-
कलाभिः शीतांशोर्विलसति किरीटः पुररिपोः ॥

अनुमानकलाकारमेनं हसति मथुरानाथः—

'यद्यपीदं बहुभिर्ग्रन्थेषु बहुधा चर्चितं ज्ञायते च कैश्चित् सामान्यतो हेत्वाभासान्नं तथापि इत्यादि'

रघुनाथरचिता इमेऽपि ग्रन्था इति केचनाहुः—

१. कृतिसाध्यतानुमानम् ।
२. वाजपेयवादः ।
३. नियोज्यान्वयवादः ।

ओं नमः सर्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परितिष्ठते ॥

अध्ययनभावनाभ्यां सारं निर्णीय निखिलतन्त्राणाम् ।
दीधितिमधिचिन्तामणि तनुते तार्किकशिरोमणिः श्रीमान् ॥

परजुष्टनयान्निवर्त्तमाना मननास्वाद्यरसा विशुद्धबोधैः ।
रघुनाथकवेरपेतदोषा कृतिरेषा विदुषां तनोतु मोदम् ॥

न्यायमधीते सर्वस्तनुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः ॥

मान्यान्प्रणम्य विहिताञ्जलिरेष भूयो-
भूयो विधाय विनयं विनिवेदयामि ।
दूष्यं वचो मम परं निपुणं विभाव्य-
भावावबोधविहितो न दुनोति दोषः ॥

परजुष्टेतिपद्यात्पूर्वं क्वचन पुस्तके पद्यमिदं पठितं विद्यते ।

आत्मतत्त्वविवेकटीकाया अपि रचयिता रघुनाथः—

निर्णीय सारं शास्त्राणां तार्किकाणां शिरोमणिः।
आत्मतत्त्वविवेकस्य भावमुद्भावयत्यसौ ॥

एकत्रिंशद्वर्षवयस्को रघुनाथो नवद्वीपमागत्य हरिघोषगोशालां स्थापितवान्। अत्रैव विविधग्रन्थानां रचनां च चक्रे।

**रघुनाथकालः**

पूर्वोक्तविश्लेषणधिया सूरेरस्य समयः ११९१ खीष्टाब्दतः १३५० खीष्टाब्द-मध्यगो निश्चियते किन्तु एवं चैतन्यदेवस्य समकालिको रघुनाथ इति प्रख्यातिर्व्यर्था स्याद् भिन्नकालिकत्वादत उक्तःकालो रघुनाथस्य न सामीचीन्यमञ्चति। श्रूयते मुक्तावली-प्रणेता विश्वनाथचक्रवर्ती रघुनाथस्य शिष्यः। महेश्वरस्य प्रपौत्रो वासुदेवस्य च पौत्र आसीत्। वृद्धावस्थायां वृन्दावने न्यायसूत्रवृत्तिमलिखद्विश्वनाथः। समयस्य उल्लेख एवम्....

रसवाण ( वार ) तिथौ शकेन्द्रकाले-
बहुले कामतिथौ शुचौ सिताहे।
अकरोन्मुनिसूत्रवृत्तिमेतां-
ननु वृन्दाविपिने स विश्वनाथः॥

अनया रीत्या १५५६ शकाब्दो वा १५७६ शकाब्दोऽर्थात् १५३४ खीष्टाब्दो वा १५५४ खीष्टाब्दो वा कालो निश्चेतुं शक्यते रघुनाथस्य।

न्यायापारसमुद्रपारतरणे शक्तो हनूमानिव
निःशङ्कं रघुनाथकौशलधनो लङ्कां ददाहासुरीम्।
अज्ञप्ति भयदां विपन्नमनसां नैजच्छटाच्छुरितां
वृत्तं तस्य सुधाकरस्य धवलं संद्योततां भारते ॥१॥

श्रीचिन्तामणिदीधितिर्मतिमतो गङ्गेशगर्वानुगा
विज्ञालोककला कलाधररघोर्विज्ञस्य पर्वापरा।
चण्डाण्डा चतुरा विभाधरधरा शम्भोर्विभूतिः परा
विज्ञानां मतिदा विशिष्टकमला कोलाहले काकुला ॥२॥

यस्याश्चण्डधरा वरा वितनुते कौतूहलं कौकिलं
श्रीवासन्तिकवायुविज्ञमनसां योगेन युक्तानना।
हार्दं विज्ञपरैर्यदीयधवलं संज्ञायते नापरैः
साद्यालोककलाकुला वितनुतां शुभ्रां छटां राघवीम् ॥३॥

समाप्य चर्चां विदुषां कतीनां
कन्नां नितान्तं विमलां सलीलम्।
शोधप्रबन्धाकुलमानसोऽहं
प्रबन्धवृत्तं परिचिन्तयामि ॥४॥

तर्काब्धौ लेखमाला विलसति धवलाऽम्लानमुक्तावलीव
प्रज्ञापाराब्धिधीरैर्विभुमतिधनिकैः स्पष्टुमर्हा प्रयत्नैः।
दोषज्ञैर्दोषमालाकवलितहृदया दृश्यते चेन्मानवीया
संशोध्या पुण्यकृद्भिर्नयविनयभरैर्बन्धलीलैकभक्तैः ॥५॥

तत्त्वज्ञैस्तत्त्वदृष्ट्या मतिवनविभवैर्न्यायवित्तं नवीनं
ज्ञात्वा हेयन्न पुण्यैर्वरवचनभरैर्भावितं भव्यदेहम्।
पौरस्त्यं केवलं किं ? प्रथयति विपुलं वाग्धनं मानवानां
नो चेन्नव्ये कुदृष्टिः कथमिह विमले भारतीये धने नः ॥६॥

विनयावनतः

श्रीराम पाण्डेयः



# दीधितिकारोपज्ञविचाराणामालोचनम्

## प्रथमोऽध्यायः

वेद्याविकल्पविषयोऽनुमयानुगम्यः
स्थाणुः श्रुतः श्रुतिषु यो भुवनं बिभर्ति ।
जर्हर्त्ति विश्वमखिलं तनुते प्रपञ्चं
सापश्वरूपचितिरेकचलां छिनत्तु ॥ १ ॥

संक्रुद्धकार्मुककरं रतिकान्तकान्तं
संकल्प्य कामकवलं विततान दृष्टिम् ।
दग्धस्तया स मदनः सदनं शिवस्य
तन्नो भयं दहतु दीधितिजं च दीर्घम् ॥ २ ॥

सच्चित्पदाद्यभिहितं जगदेकमूलं
सेव्यं समस्तनिगमागमवेद्यतत्त्वम् ।
ब्रह्मैव भूरिविभवं विभवं बुधानां
नत्वा शिरोमणिगिरां तनुते विरामम् ॥ ३ ॥

अपर्णापाण्डित्यं पशुपतिमतिर्नैव चिनुते
विषज्वालाजालैर्गलितहृदया नाशनिरता ।
शिवे शीतस्पर्शे सहजसुखपाणिग्रहणजे
वृते शैवी शक्ता दहतु दुरितं दैत्यनिवहम् ॥ ४ ॥

सारस्वतं श्रुतिसमूहसुधासुषिक्तं
मान्यां सदा सुमनसां मनसां सदाशाम् ।
सम्पूर्य पावनरसां पवते मनीषां
तन्मे मनोविषकुलं कवलीकरोतु ॥ ५ ॥

शुभ्रां शरच्छशिकलामिव सुप्रसन्नां
सौदामिनीं सहजसत्त्वकरीं सुहंसाम् ।
श्रीशारदां सुरगिरां सुधियामुपास्यां
ध्यात्वा शिरोमणिमर्णि विरलं विलोके ॥ ६ ॥

## प्रशस्तिपद्यानि

यन्नाम्नि कर्णकुहरं प्रविशत्यकामं
कम्पा मनीषिसकलान् विकलान् धुनोति ।
शास्त्रार्थमश्वमहिमा हिमतामुपेत्य
शैत्यं सृजत्यखिलविज्ञमतौ नवीनम् ॥ ७ ॥

अखण्डभूमण्डलमान्यमानी
विचारसिन्धुर्मुकुटो बुधानाम् ।
मणिः सभाया नवनीतिवेत्ता
तमस्ततेर्नाशकसूरिसूर्यः ॥ ८ ॥

सद्गर्वविज्ञमहिमा हिमवानिवैव
निःसार्य गाङ्गधवलं मतिवारिवृन्दम् ।
लोकान् पुनान इव भाति विशिष्टकीर्त्तिः
शिष्टेषु तस्य गुणगौरवगीतिनीती ॥ ९ ॥

शुक्ला गुणा गुणिगणेषु भवन्ति गण्या-
स्तेषां प्रकाशधवलेन विभाति विश्वम् ।
सूर्योऽपि भाति विमलं समवाप्य शौक्ल्यं
चन्द्रश्च राजतितरामधिगत्य तत्त्वम् ॥१०॥

अखण्डपण्डाप्रभवप्रभावैः
प्रभाविता भारतविज्ञपण्डा ।
चण्डातिचण्डा महनीयभाण्डा
पण्डा गुरूणां प्रबलप्रचण्डा ॥११॥

नाम्नैव यस्य प्रथितस्य बन्धोः
शास्त्रीयचर्चाभ्युदयं धिनोति ।
सभ्या सभा वैभवमातनोति
वन्दे गुरुं तं बुधराजराजम् ॥१२॥

शुक्लां सुतर्कामधिगत्य विद्यां
जाता सुमेधापतयो विशिष्टाः ।
शिष्टाः सभाया गुणिनां गुणौघा-
स्तान्नौमि शुक्लान् बुधमान्यमान्यान् ॥१३॥

आचार्यशुक्लस्य गुरोः कृपालोः
स्नेहो बलं नान्यबलं स्वकीयम् ।
नत्वा गुरुं तद्वचनं निधाय
पर्वप्रबन्धं परिचिन्तयेऽहम् ॥१४॥

सूरेर्दयालोर्वदरीवरस्य
नैसर्गिकस्नेहसुधाभिषिक्तः ।
युक्तं रघोर्गौरवगानसक्तोऽ-
शक्तोऽपि तत्खण्डनमाश्रयेऽहम् ॥१५॥

प्राचार्यशुक्लस्य समग्रसृष्टिं
शास्त्रार्थजातस्य विभाग्य नीतेः ।
आलोचनासूर्यसमग्रदृष्टेः
प्राप्य प्रकाशं कुतुकं च कुर्वे ॥१६॥

शास्त्राविरोधेन विचारजातं
विज्ञाप्य मान्यान् विदुषोऽद्य याचे ।
दीधित्युपज्ञस्य विरोधिकेयं
हेया न चर्चा महनीयतर्का ॥१७॥

गर्वौघिहारां प्रतिभाधनानां
गर्वैकवित्तां मतिदां सुनीतिम् ।
कीर्त्तेर्भरां दृष्टिभरां धरायां
नीतिं नवीनां कृतवान्मनीषी ॥१८॥

पदार्थतत्त्वं रघुनाथसूरि-
र्निरूप्य पक्षं सबलं निवेद्य ।
स्वकीयबुद्धेर्दृढतां प्रमाप्य
चकार सूक्तिं बुधबोधबोध्याम् ॥१९॥

अखर्वगर्वां स्वकृतिं निगूढां
पदार्थसारां सुधियां समूहे ।
विधाय तेने धवलं यशोऽत्र
बुधोऽद्वितीयो रघुनाथनामा ॥२०॥

अल्पाक्षरैस्तीक्ष्णशरैर्जघान
गूढार्थबोधैः कृतिकार्मुकेन ।
विज्ञां मतिं यां सुधियामुदात्तां
धन्यो बुधः श्रीरघुनाथनामा ॥२१॥

गादाधरी तस्य वचो दुरूहं
मत्वैव बोधाय विधाय यत्नम् ।
सार्था सती साधुतरा बभूव
वन्द्यो बुधः श्रीरघुनाथनामा ॥२२॥

तर्कैकधाराभिनवेव गङ्गा
वक्रैर्वचोभिः सुमतीन् पुनाति ।
पापं तमो हन्ति बुधस्य वाणी
गण्यः स धीरो रघुनाथसंज्ञः ॥२३॥

वाग्दीधितिर्दीर्घदवाग्निदग्ध्री
दग्ध्वा पिशाचप्रतिभाप्रभावाम् ।
मायां मनुष्याखिलराजधानीं
लेभे प्रतिष्ठां प्रतिभैकचुञ्चोः ॥२४॥

चण्डाटवीतर्कमृगेन्द्रपूर्णा
भीतिं मृगाणां नयकोविदानाम् ।
उत्पाद्य शोभां धरते धरित्र्यां
यस्यैव धीरस्य विचित्रसूरेः ॥२५॥

तर्काम्बुधौ खेलति यस्य चण्डा
पण्डा न शेते नयतत्त्वबोधे ।
भावावबोधे प्रतिभाति हंसी
हंसः स सभ्यो रघुनाथसूरिः ॥२६॥

स्वोपज्ञभावानभिधाय धीरो
ढक्कां विजेता मतिमान्ननाद ।
तच्छब्दकूटा भयदा विभान्ति
तत्खण्डने भाति न कापि भूतिः ॥२७॥

आह्वानवाणी विदुषां पुरस्ताल्
लीलामपूर्वां तनुते विचित्राम् ।
विज्ञस्य यस्यैव विचारचर्चा
कौतूहलं दिव्यकलं करोति ॥२८॥

जिज्ञासवः केऽपि परीक्षका न
चारित्र्यसम्पन्नविभा न कापि ।
आमन्त्रणं यस्य विभाति नम्रं
कम्रं चरित्रं मनुजस्य तस्य ॥२९॥

वङ्गीयविद्वानधिगत्य वक्रां
भङ्गिं समग्रान् विदुषो ब्रवीति।
चर्चां मदीयामवगत्य धीराः
कृन्तन्तु बुद्ध्योत समर्थयन्तु ॥३०॥

शास्त्रीयदृष्ट्या विपरीतचर्चा
मत्वा न हेया प्रतिभैकवित्तैः।
बालस्य चेष्टा यदि सप्रमाणा
विज्ञैः सदा सादरतामुपैति ॥३१॥

मार्गं प्रसिद्धं परिहाय पन्था
नव्यो न वक्रः परिभाति बुद्धौ।
चेद् गृह्यतां मण्डनमादधानैः
कैः खण्डचतां वा विपरीततायाम् ॥३२॥

गर्वैकगर्भां विपिनैकदर्भां
विद्यैकसर्पां विबुधैकदर्पाम्।
नोत्येकसारां प्रतिभैकपारां
स्फूर्तिं स्वकीयां भणितिं बभाषे ॥३३॥

कस्यापि विज्ञस्य विचारभूमिः
सोढुं न शक्नोति विरुद्धधाराम्।
चेत्तर्कयुक्तां सहते तदा तां
तर्कप्रधानां विमतिं बुधानाम् ॥३४॥

प्राचीननैयायिकरीतिरेषा
शास्त्रस्य सिद्धान्तकथावशेषा।
नव्या विचारा न समर्थनीयाः
शास्त्रस्य सिद्धान्तविरुद्धभावाः ॥३५॥

आधृत्य शास्त्रं परिभावयन्तु
नव्यान् विचारानुपपत्तिपूर्णान्।
सारस्तथा ग्राह्यशिलां चिनोति
नासारभावं भजते कदापि ॥३६॥

तत्रैव बोध्या विनिवेदना मे
प्राच्या विचारा न नवावताराः।
मात्सर्यपूर्णां कुविचारधारां
त्यक्त्वैव तांस्तत्त्वविदो विदन्तु ॥३७॥

अर्था मदुक्ताः प्रतिभैकवित्ता
नायुक्तिका युक्तियुतावबोधाः ।
प्राचामभिप्रेतदिशां दिशन्तो
दृष्टिं बुधानां परिकर्षयन्ताम् ॥३८॥

यत्नं विधायैव विलोडनीया
नालोडनीया यतनं विहाय ।
सिद्धान्तभेदेऽपि सयुक्तिकाश्चेत्
त्याज्या न मान्या विदुषां पुरस्तात् ॥३९॥

शास्त्रार्थतत्त्वज्ञबुधान्नमामि
शास्त्रैकवित्तान् महतो दयालून् ।
उक्तानि सर्वाणि सयत्नकानि
याचे रघोर्मे प्रविचारयन्तु ॥४०॥

एषापकृष्टापि च पूर्वविज्ञै
रीतिर्न हेयेति निवेदना मे ।
स्वोक्तेर्विचाराय विचारचारून्
याचे परान् प्रातिभबोधवित्तान् ॥४१॥

विचारसञ्चारपरम्पराणां
यथा न रोधो रमणीयसृष्टौ ।
बुधैर्विधेयो महनीययत्नः
प्रवृत्तिरेषा तत एव सिद्धा ॥४२॥

अभ्यर्थनां मे हृदये निधाय
तत्त्वं पदार्थस्य विचारयन्तु ।
उक्तिं सतर्कां परिशीलयन्तु
बुद्ध्वैव वा तां परिखण्डयन्तु ॥४३॥

वैचारिकस्तथ्यसमग्रसारो
हारो नयानां नयमण्डितानाम् ।
जारः कथानामुपपत्तिदानां
प्राचीननैयायिकसज्जनानाम् ॥४४॥

गर्वो धनं विबुधबुद्धिमतोऽपि चूर्णं
चूर्णञ्च दानवबलं दनुजेन्द्रमूर्तेः ।
लङ्का निवेद्य कुशलं मनुजेन्द्रशत्रो-
र्गर्वैकवित्तमहितस्य फलं व्यनक्ति ॥४५॥

अर्था निरुक्ता निजबोधसूता-
स्तर्कप्रधाना भवतां पुरो मे ।
त्याज्या न सिद्धान्तविरोधमात्रे
चर्चा विचारस्य विना न विज्ञैः ॥४६॥

बुद्ध्वैव युक्तिं विनियोजितां मे
चेत्खण्डनीयामिह खण्डयन्तु ।
सिद्धान्तवैरुद्धचविचारवर्गं
मत्वा न हेया रघुनाथचर्चा ॥४७॥

विचारकोटिर्यदि तर्कहीना
ग्राह्या कथं सा रघुनाथसूरेः ।
प्राची नवीनेति न तत्र बुद्धिः
कार्या नयज्ञैर्बुधबोधगम्या ॥४८॥

सिद्धान्तपौरस्त्यविचारचर्चा
हेया न सर्वा नयपण्डितानाम् ।
सर्वत्र युक्तेर्वलतां गताया
ग्राह्या सतर्का प्रवला बुधानाम् ॥४९॥

आह्वानमेतच्छ्रुतवान्मनीषी
तर्कैकबुद्धी रघुदेवसूरिः ।
आलोचनं साधु न भाति तस्य
तस्यापि दृष्टिः परिलोच्यतेऽत्र ॥५०॥

आलोचनं मतिमतो रघुनाथसूरेः
कृत्वाद्य बुद्धिविभवाभिमतं स्वकीयम् ।
संसाध्य दुर्गमधियः प्रतिभां ब्रवीमि
यस्याः प्रसादमधिगत्य ममात्र दृष्टिः ॥५१॥

सारस्वतं सकलकल्मषतापहारं
हारं सुधीन्द्रनवनीतिवराङ्गनानाम् ।
सारं मनीषिपरिबोधितशेमुषीणां
प्राचां विचारसरणिं रमणीं ब्रवीमि ॥५२॥

का सा शिरोमणिकथा कमनीयकल्पा
नव्या प्रभव्यभुवनैकविभाभरैव ।
विद्याव्रतैकविभवाद्य वसुन्धराया-
श्चेन्मानसां मतिमतः समुपास्महे ताम् ॥५३॥

अद्यापि बुद्धिविभवं विदुषां विरौति
नावैति तत्त्वनिवहं सुधियः सुधायाः ।
ओजस्विनीं विपुलबोधकरीमपूर्वां
स्फीतां शिरोमणिकथां समुपास्महे ताम् ॥५४॥

शोधप्रबन्धमतिचित्रविचित्रमेत-
च्छ्रीमानिपण्डितरघोः कुशलं ब्रवीति ।
स्वोपज्ञता मतिमता प्रहिता कदाचिद्
भावावबोधगहना विदुषां पुरस्तात् ॥५५॥

ऊचे मनीषिनिवहो विमतिर्मतीशः
युक्त्या स्ववाङ्मधुरया धुरया च कृत्या ।
आलोचनाय सुधिया धवलेन तेन
तस्यैव पूर्त्तिमधुना कुरुते प्रबन्धः ॥५६॥

शोधप्रबन्धविभवं प्रतिपक्षपक्षं
मोमोत्तु तन्मतिमतामनघं सतर्कम् ।
चेतो विचिन्त्य रघुनाथपथावलम्वं
प्रस्तौमि पक्षपविपातपरीक्षणार्थम् ॥५७॥

पाण्डेयरामपरिकल्पितशोधपक्षः
साध्याश्रयो भवतु भूतलभव्यकल्पः ।
औचित्यसाधुसुधियां सधियां कृपात-
स्तर्काञ्चितो मतिमतां मनसां मुदे वः ॥५८॥

निर्मत्सरा कृतिमतिः प्रथिताऽद्वितीया
याचे ततो विपुलमान्यमनीषिमान्यान् ।
आलोड्य बुद्धिविभवाः स्वमतिं ब्रुवन्तु
शास्त्राविरुद्धविहितान् प्रचुरान् विचारान् ॥५९॥



## आकाशकालककुभां विमर्शः

आकाशकालौ परमेशभिन्नौ
प्राचीननैयायिकरीतिरेषा।
तां तर्कहीनामबलां ब्रवीति
वेधा मतेः श्रीरघुनाथसूरिः ॥ १ ॥

शास्त्रस्य साक्षात्परमो विरोधो
रोध्रो न कस्याश्च विरुद्धकोटेः।
वाचां स्वकीयां विपरीततत्त्वां
मत्वा सयुक्तिं न चिनोति शास्त्रम् ॥ २ ॥

द्रव्येषु दिग्भाति न कापि धन्या
धन्या न ते प्राच्यपथावलम्बाः।
ईशेन सर्वव्यवहारसिद्धि-
र्यर्थातिरिक्तेह तदीयचिन्ता ॥ ३ ॥

एवं त्रयाणां गणना न मान्या
द्रव्येषु पौरस्त्यवचःप्रसूता।
आयाससाध्यापि न साधुसाध्या
तत्साधिका दुर्बलतर्ककोटिः ॥ ४ ॥

जन्याखिलस्यैव निमित्तहेतु-
र्विश्वस्य धाता भवतोऽपि मान्यः।
हेतुः स दिव्यः समवायिभूतः
शब्दस्य मान्यो भवतो न हानिः ॥ ५ ॥

हेतौ लघौ श्लाघ्यपथेऽत्र दृष्टिः
सृष्टौ न सा गौरवगर्वगीतिः।
धात्रैव सर्वार्थविधाप्रसिद्धौ
हेयैव मान्या भवतां न रीतिः ॥ ६ ॥

ईशे सतर्का सबला सुसिद्धा
बोध्या ततः सा समवायिताऽपि ।
जीवस्तु सृष्टौ न निमित्तहेतुः
कार्यं समग्रं प्रति निश्चयो नः ॥७॥

कार्यस्य सर्वस्य निमित्तहेतुं
विज्ञा न केचिद् गगनं विदन्ति ।
तत्साधनार्थं लभते न शास्त्रं
मान्यं कथं तत्समवायिवाचः ॥८॥

ईशश्च वाचः समवायिहेतु-
र्वाच्यं न खं कारणतामुपेतम् ।
तत्त्वेषु भिन्नं नवनीतितन्त्रे
गायामि गीतिं सुधियः सुनीतिम् ॥९॥

आकाशकालककुभां कथितं न सत्त्वं
संल्लाघवान्मतिमता मनसानवद्यम् ।
युक्तिश्च या जवनिका शबला वितेने
ध्वस्ता दिशादिकमनीयततिस्ततश्च ॥१०॥

कालस्य संसाधकभव्यहेतुः
सम्बन्धनाम्ना भवतापि मान्यः ।
कुक्षिङ्गतस्तस्य न हेयरूपः
संयोगसम्बन्धविशेषभूतः ॥११॥

तदाश्रयं नव्यपदार्थकालं
बुधो भवान् वक्ति नयैकसारम् ।
तदाश्रयत्वेन शिवं विभाव्य
विसृज्यतां कल्प्यपदार्थकालः ॥१२॥

बुद्धिः परत्वस्य विभाति भव्या
भा वापरत्वस्य विभाति कालात् ।
ईशेन सिद्धिं समधीत्य तस्याः
कल्प्यो न कालोऽभिनवः पदार्थः ॥१३॥

उक्तापरत्वव्यवहारजातं
मान्यं परत्वस्य विचारजातम् ।
तत्रापि संयोगनवो न हेतु-
र्विश्वेशसंयोगपदार्थहेतुः ॥१४॥

प्राच्यादिलीला सकला ललामा
तत्साधनार्थं न दिशा प्रशस्ता।
तस्याश्च सिद्धौ परमेशलीला
सिद्धैव नान्या परिकल्पनीया ॥१५॥

दिशः परत्वस्य च तत्र हेतु-
र्मनीषिमान्यो भुवनैकधातुः।
विचित्रसंयोग इह प्रबोध्य-
स्तथापरत्वस्य च सैव हेतुः ॥१६॥

दिग्द्रव्यसंयोगसुधैवहेतु-
र्लोके परत्वस्य च दैशिकस्य।
मान्योऽपरत्वस्य च तादृशस्य
प्रोक्तश्च संसर्गसुधैव हेतुः ॥१७॥

ईशस्य मूर्त्तस्य च योग एव
तत्रापि हेतू रघुनाथगीतः।
सैवेति सेव्यो लघुतानुपेतो
वक्तीह तर्कं रघुनाथसूरिः ॥१८॥

पौरस्त्यतर्कामृतबिन्दुधारा
न्यायैकसारा नयकोविदानाम्।
शष्कुल्यवच्छिन्ननभःप्रदेशं
श्रोत्रेन्द्रियं वाक्करणं ब्रवीति ॥१९॥

चित्रैव रीती रणपण्डितानां
तर्कैककाम्या रघुनाथरीतिः।
भव्या सतर्का नवनीतिपूर्णा
तर्कैकतत्त्वैः कृतिभिः प्रसाध्या ॥२०॥

शष्कुल्यवच्छिन्नविभुप्रदेशः
शब्दस्य साक्षात्करणं मतं मे।
श्रोत्रेन्द्रियं तन्मनसा विचिन्त्य
गायामि शब्दग्रहणस्य शैलीम् ॥२१॥

यथा भवन्तो गगनं नवीनं
पदार्थमेकं ब्रुवतेऽतिरिक्तम्।
दशाविशेषे श्रवणं तदेव
वदन्ति शब्दग्रहणे समर्थम् ॥२२॥

दशाविशेषे भवमेव वच्मि
तथैव शब्दग्रहणे समर्थम् ।
वचोविभूतिं श्रवणं तमीशं
वदामि तर्काञ्चिततर्कसारम् ॥२३॥

नित्येन तेनैव समस्तसिद्धि-
श्चेत्त्यज्यतां नूतनतत्त्वकल्पः ।
जालं विकल्पस्य विहाय विज्ञैः
साधारनीतिर्न विगर्हणीया ॥२४॥

मत्खण्डनं मतिमता सबलेन केन
बुद्ध्वा यदा सुकृतिना क्रियते सतर्कम् ।
तत्स्वागतं सहजतापहरं विधास्ये
धन्यः सदा स मम वाक्यरसारसज्ञः ॥२५॥

न्याय्यो न तेषामतिरिक्तभावो
विश्वेशबुद्धिर्यदि भाति भव्या ।
कार्यं च सर्वं तत एव सिद्धं
मान्या न सा गौरवभीतिगीतिः ॥२६॥

शास्त्रस्य सिद्धान्तविरोधितायां
मान्या न कस्यापि मतिः सतर्का ।
न्याय्यो न पन्था नयपण्डितानां
युक्तिः सतर्का परिशीलनीया ॥२७॥

आकाशकालककुभः सकलाः प्रकल्प्य
काम्याः क्रियाः सकललौकिककार्यमूलाः ।
तासां सुसिद्धिरघुना रघुनाथगीता
बोध्या सतर्कभणितिः परमेशसाध्या ॥२८॥

मान्या न गौरवकरी सफलापि साध्या
काम्या च लाघवकरी रमणीयरीतिः ।
गीता मयाद्य रघुनाथधियः प्रकीर्त्ति-
र्युक्त्या तथापि परिभाति न भव्यभूतिः ॥२९॥

आकाशकालककुभामतिरिक्तसत्त्वं
यत्खण्डितं मतिमता नयतत्त्ववेत्रा ।
युक्त्या न तत्कृतिमतः परिभाति भव्यं
मान्या ततो न विदुषामवमाननेयम् ॥३०॥

कार्यत्वधर्ममवलम्ब्य महेशनिष्ठं
प्रोक्तं च कर्तृविधया भवकारणत्वम् ।
तद्वद्वाप्यधर्ममवगत्य महेशनिष्ठं
कल्प्यं नवीनमतिहीनजकारणत्वम् ॥३१॥

ईशस्य कर्मफलदस्य विचित्रभूते-
र्जीवस्य वा विविधकर्मपरायणस्य ।
तत्कारणत्वमतिरिक्तजतामुपेतं
कुत्रास्ति यत्र लघुता परिभाति भव्या ॥३२॥

जीवा अनन्तविभवो विभुतामवाप्ता-
स्तत्कारणत्वकमलं यदुदेति तत्र ।
मन्ये वरा विभुतया विहता तदैव
रम्यापि धीररघुनाथरमा न रम्या ॥३३॥

क्लृप्ता च या कारणता महेशे
साहृष्टवश्या पुरुषे समस्ते ।
एकत्र मान्या न परत्र मान्या
भव्या न युक्ती रघुनाथसूरेः ॥३४॥



आकाशकालककुभामतिरिक्तसत्तां
संसाधितां सुकृतिभिः सरलार्थपद्यैः ।
संसाध्य गद्यमधुरेण सुबोधदेन
मान्याश्च शास्त्रकलया परिचिन्तयामि ॥३५॥

अर्था विभान्ति नवनीतिविवाप्रसूताः
प्राचां विचारनिवहाश्चितचित्तचौराः ।
त्याज्या न विज्ञरघुनाथविभाविरुद्धाः
प्रज्ञोपनीतरुचिराः विहिताः सतर्काः ॥३६॥

न्यायदर्शने महर्षिणा गौतमेन षोडशपदार्था निर्दिष्टाः । वैशेषिकदर्शने च कणादेन द्रव्यादयः षट् पदार्था ऊहिताः । नैयायिकैर्वैशेषिकोक्तानां पदार्थानां न्यायशास्त्रानुमतत्वमभ्यधायि । वैशेषिकदर्शने द्रव्यादिपदार्थनिर्देशके सूत्रे अभावो नाम्ना न निर्दिष्टः किन्तु अग्रिमेषु बहुषु[1] सूत्रेषु अभावस्योल्लेखादभावस्यापि वैशेषिकसम्मतत्वं पश्चात्तनैर्वैशेषिकपण्डितैरभ्युपगतम् ।

नैयायिकैर्वैशेषिकोक्तपदार्थसप्तकस्य यन्न्यायदर्शनानुमतत्वमुक्तं तदाद्रियमाणेन दिनकरेण स्वकीयदिनकर्य्याख्यन्यायमुक्तावलीनामकव्याख्यानग्रन्थे न्यायसूत्रोक्तानां षोडशपदार्थानां वैशेषिकसम्मतसप्तपदार्थेष्वन्तर्भावः प्रदर्शितः । तथा हि—

---

१. 'कारणाभावात्कार्याभावः' । वै० सू० अ० १ आ० २ सू० ३२ ।

(क) वायुसन्निकर्षे प्रत्यक्षाभावाद् दृष्टं लिङ्गं न विद्यते । वै० स० अ० २ आ० १ सू० ६३ ।

(ख) आत्मेन्द्रियार्थसन्निकर्षज्ञानस्य भावोऽभावश्च मनसोलिङ्गम् । वै० सू० अ० ३ आ० २ सू० १३६ ।

(ग) तस्याभावादव्यभिचारः । वै० सू० अ० ४ आ० १ सू० १६६ ।

(घ) नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनम् । वै० सू० अ० ५ आ० १ सू० १८८ ।

(ङ) असति चाभावात् । वै० सू० अ० ६ आ० २ सू० २४९ ।

(च) एकत्वाभावाद् भक्तिस्तु न विद्यते । वै० सू० अ० ७ आ० २ सू० २८७ ।

(छ) सामान्यविशेषेषु सामान्यविशेषाभावात्तदेव ज्ञानम् । वै० सू० अ० ८ आ० १ सू० ३१४ ।

(ज) तथाऽभावे भावप्रत्यक्षत्वाच्च । वै० सू० अ० ६ आ० १ सू० ३३३ ।

(झ) संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः । वै० सू० अ० १ आ० १ सू० ३५६ ।

'द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तैव पदार्थाः षोडशानामत्रैवान्तर्भावात्' कथमन्तर्भाव इति चेदित्थम्—

प्रमाणस्य—इन्द्रियादेर्द्रव्ये, व्याप्तिज्ञानादेर्गुणे, प्रमेयस्य—आत्मशरीरेन्द्रियस्य द्रव्ये, अर्थस्य—गन्ध-रस-रूप-स्पर्श-शब्दस्य गुणे, बुद्धेर्गुणे, मनसो द्रव्ये, प्रवृत्तेर्गुणे, दोषाणामिच्छाद्वेष-मिथ्याज्ञानस्वरूपाणां रागद्वेषमोहपदप्रतिपाद्यानां गुणे, प्रेत्य—मृत्वा भावो जननमिति व्युत्पत्त्या मरणोत्तरजन्मत्वं प्रेत्यभावपदप्रवृत्तिनिमित्तम्।

तत्र चरमप्राणशरीरसंयोगध्वंसो मरणम्, आद्यशरीरप्राणसंयोगो जन्म, तथा च मरणानन्तरं तादृशसंयोगरूपस्य तस्य गुणे, सुखदुःखसंवेदनस्वरूपस्य मुख्यफलस्य गुणे, गौणमुख्य-साधारण-जन्यमात्रस्वरूपफलस्यापि द्रव्यादिषु, पीडालक्षणस्य दुःखस्य गुणे अन्तर्भावः।

अपवर्गस्तु आत्यन्तिकी दुःखनिवृत्तिः, दुःखानि—शरीरम्, षडिन्द्रियाणि, षड् विषयाः, षड् बुद्धयः, सुख दुःखं चेत्येकविंशतिः।

तत्र दुःखत्वजातिशून्ये शरीरादौ दुःखसम्बन्धितया गौणं दुःखत्वम्, स्वर्गादिसुखस्यापि तन्नाशज्ञानेन दुःखसम्बन्धित्वमव्याहतमेव।

न चैकविंशतिदुःखान्तर्गतयोर्मनःश्रवणयोर्नित्यत्वात्कथं तन्नाश इति वाच्यम्, यद्रूपविशिष्टस्य श्रवणस्य ज्ञानद्वारा दुःखहेतुतया दुःखत्वम्, तद्रूपस्य कर्णशष्कुल्या नाशे तद्विशिष्टश्रवणेन्द्रियरूपदुःखनाशात्।

एवमात्मसंयोगरूपव्यापारविशिष्टस्यैव मनसो ज्ञानद्वारा दुःखरूपतया व्यापारनाशेन तद्विशिष्टमनोरूपदुःखनाशसम्भवादिति।

दुःखनिवृत्तावात्यन्तिकत्वञ्च-स्वसमानाधिकरणदुःखासमानकालीनत्वम्। नन्वेतादृशदुःखध्वंसस्य मुक्तित्वे कथं तत्त्वज्ञानसाध्यता तस्येति चेदित्थम्—

तत्त्वज्ञानेन मिथ्याज्ञानवासनानाशः, वासनानाशे च दोषस्य वासनाविशिष्टरागादेरभावः, विशेषणाभावे विशिष्टाभावात्, तादृशरागरूपहेत्वभावे च प्रवृत्तेर्धर्माधर्मरूपाया अभावोऽनुत्पत्तिः, तदनुत्पादे प्रारब्धकर्माधीनदेहान्यदेहसम्बन्धरूपजन्माभावः, भोगतत्त्वज्ञानाभ्यां प्रारब्धतद्भिन्नकर्मनिवृत्तिरिति जन्माभावे दुःखानुत्पादः, तथा च स्वसमानाधिकरणदुःखासमानकालीनत्वरूपविशेषणांशे तत्त्वज्ञानस्य प्रयोजकत्वान्नुक्तेस्तत्त्वज्ञानसाध्यत्वम्, तथा च सूत्रं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" (न्या०सू० १।१।२) इति।

अस्यार्थः—पठितेषु जन्मादिषु मध्ये उत्तरोत्तराणामपाये तदनन्तरापायाद्-अव्यवहितपूर्वाभावात्। तथा च तत्त्वज्ञानेन मिथ्याज्ञानस्य नाशः, तेन दोषाणां नाशः,

तेन प्रवृत्तेरनुत्पादः, तेन जन्मानुत्पादः, तेन दुःखानुत्पाद इति पूर्वोक्त एवार्थः पर्यवसितः।

नव्यास्तु योग्यविभुविशेषगुणानां नाशं प्रति स्वोत्तरवर्त्तिगुणानां कारणत्वात् स्वोत्तरोत्पन्नगुणेनैव दुःखध्वंसरूपमुक्तिसम्भवेन न तत्र तत्त्वज्ञानापेक्षेति दुःखपदं दुःखसाधनदुरितपरतया व्याख्येयम्, दुरितस्य च योग्यगुणत्वाभावान्न स्वोत्तरवर्त्तिगुणनाश्यतेति तन्नाशरूपमुक्तेस्तत्त्वज्ञानसाध्यत्वमेवेत्याहुः।

तथा चैतादृशापवर्गस्याभावे, संशयस्य गुणे, साध्यतया इच्छाविषयरूपप्रयोजनस्य यथायथं द्रव्यादिषु, साध्यसाधनोभयवत्तानिश्चयविषयस्य दृष्टान्तस्य यथायथं द्रव्यादिषु।

तत्तच्छास्त्रसिद्धार्थरूपस्य सिद्धान्तस्य द्रव्यादिषु, शब्दस्वरूपप्रतिज्ञाद्यन्यतमरूपाणामवयवानां गुणे, व्याप्यारोपेण व्यापकारोपस्य तर्कस्य गुणे, निर्णयस्य गुणे, तत्त्वबुभुत्सोः कथारूपवादस्य गुणे, विजिगीषुकथारूपजल्पस्य गुणे, स्वपक्षस्थापनाहीनकथारूपवितण्डाया गुणे, अनुमिति-तत्करणान्यतरप्रतिबन्धकज्ञानविषयाणां हेत्वाभासानां यथायथं द्रव्यादिषु, अभिप्रायान्तरेण प्रयुक्तशब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानरूपस्य छलस्य गुणे, असदुत्तररूपजातेर्गुणे, पराजयहेतुस्वरूपनिग्रहस्थानानां यथायथं द्रव्यादिष्वन्तर्भावः।

निग्रहस्थानानि-प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभाविक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च। 'अत्र चकारोऽनुक्तसमुच्चयार्थस्तेन दृष्टान्ते साधनवैकल्यादीनां परिग्रहः।'

तत्र विशिष्य प्रतिज्ञातस्य पक्षादेः परित्यागरूपप्रतिज्ञाहानेरभावे, परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनरूपस्य प्रतिज्ञान्तरस्य गुणे, स्वोक्तसाध्यादिविरुद्धहेत्वादिकथनरूपप्रतिज्ञाविरोधस्य गुणे, स्वोक्तसाध्यादेःपरेण दूषणे कृते तत्साध्यापलापरूपस्य प्रतिज्ञासंन्यासस्याभावे, परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टहेतुकथनरूपस्य हेत्वन्तरस्य गुणे, प्रकृतानाकाङ्क्षिताभिधानरूपार्थान्तरस्य गुणे, अवाचकपदप्रयोगरूपनिरर्थकस्य गुणे, अवाचकवाक्यप्रयोगरूपाऽविज्ञातार्थस्य गुणे, अभिमतवाक्यार्थबोधानुकूलाकाङ्क्षाशून्यपदप्रयोगरूपस्यापार्थकस्य गुणे, समयनिबन्धनविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानरूपस्याप्राप्तकालस्य गुणे, यत्किञ्चिदवयवशून्यावयवाभिधानरूपस्य न्यूनस्य गुणे, अधिकहेत्वाद्यभिधानरूपस्याधिकस्य गुणे, पुनरभिधानरूपस्य पुनरुक्तस्य गुणे, परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणरूपस्याननुभाषणस्याभावे, उत्तरार्हं परोक्तं बुद्ध्वाप्युत्तरस्याप्रति-

पत्तिरूपाया अप्रतिभाया अभावे, असम्भवत्कालान्तरकार्यव्यासङ्गमुद्भाव्य कथाविच्छेदरूपस्य विक्षेपस्याभावे, स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानरूपमतानुज्ञाया गुणे, निग्रहस्थानं प्राप्नवतो निग्रहस्थानानुद्भावनरूपस्य पर्यनुयोज्योपेक्षणस्याभावे, निग्रहस्थानानवसरे तन्निग्रहस्थानाभिधानरूपस्य निरनुयोज्यानुयोगस्य गुणे, कथायां स्वीकृतसिद्धान्तप्रच्यवनरूपस्यापसिद्धान्तस्याभावे, हेत्वाभासानां पूर्वोक्तलक्षणानां द्रव्यादिष्वन्तर्भाव इति ।

तदेवं न्यायवैशेषिकदर्शनयोः प्राचीनार्वाचीनग्रन्थानां पर्यालोचनया पदार्था द्रव्यादयः सप्तैवेति न्यायवैशेषिकोभयसम्मतः सिद्धान्तः साम्प्रतमुद्गीयते ।

रघुनाथशिरोमणिना पदार्थतत्त्वनिरूपणनामानमेकं कायतो लघुं भावतश्च गुरुं ग्रन्थं निर्माय पदार्थानां सम्बन्धे कतिपये स्वोपज्ञविचारा विदुषां समक्षमुपस्थाप्य—

सर्वशास्त्रार्थतत्त्वज्ञान्
नत्वा नत्वा भवादृशान् ।
इदं याचे मदुक्तानि
प्रविचारयत सादरम् ॥

इति ब्रुवता स्वोक्तानामर्थानां विचाराय विदुषामावाहनं कृतं तेन प्रेरितेन मया अस्मिन्नुपलभ्यमानानां तदीयविचाराणां पर्यालोचनमुपक्रम्यते—

## दिक्कालयोर्द्रव्यान्तरत्वविमर्शः

तथा हि दीधितिकृन्मते दिक्कालौ नेश्वरादतिरिच्येते; मानाभावात्; तत्तन्निमित्तविशेषसमवधानादीश्वरादेव तत्तत्कार्यविशेषाणामुपपत्तेः । परेषामेकैकस्माद् दिगादेरिव विलक्षणानां प्राच्यादिव्यवहाराणाम् ।

अत्र तस्यायमाशयः प्रतिभाति यद् यथा प्राचीनैर्नैयायिकैर्दिङ्नामकमेकं द्रव्यमाश्रित्य निमित्तान्तरसाहाय्येन प्राचीप्रतीच्यादिव्यवहाराणां मिथो विलक्षणानामुपपत्तिः क्रियते, एवं यथा कालसंज्ञकमेकं द्रव्यमभ्युपगम्य निमित्तविशेषसहयोगेन क्षणहोरादिनादीनां विलक्षणव्यवहारजातमुपपाद्यते तथैव दिक्कालावतिरिक्तद्रव्यतयानभ्युपगम्यापीश्वराश्रयेण तत्तन्निमित्तविशेषात्ते सर्वे व्यवहारा उपपादयितुं शक्यन्ते अतो दिक्कालयोरीश्वरभिन्नद्रव्यतयाभ्युपगमोऽनावश्यकः ।

अतिरिक्तं दिग्द्रव्यमभ्युपगच्छतां पुनरयमाशयः लोके हि मूर्त्तद्रव्येषु किञ्चिन्मूर्त्तद्रव्यापेक्षया दूरत्वस्य, किञ्चिन्मूर्त्तद्रव्यापेक्षया च सामीप्यस्य प्रतीतिर्भवति । मूर्त्त-

द्रव्येषु प्रतीयमाने दूरत्वसामीप्ये परत्वापरत्वशब्देनोच्येते। एते परत्वापरत्वे न्याय-वैशेषिकसम्मतेषु द्रव्यादिसप्तपदार्थेष्वन्तर्भावयितव्ये तदतिरिक्तस्य पदार्थस्यानभ्युपगमात्।

तथा हि प्रयागः पाटलिपुत्राद् वाराणस्या अपेक्षया परः, वाराणसी च प्रयागापेक्षया पाटलिपुत्रादपरेत्येवंविधाः परत्वापरत्वप्रत्ययास्तत्तन्मूर्तद्रव्येषु जायन्ते। प्रत्ययश्च विषयमन्तरा नोत्पद्यते, इत्युक्तप्रतीतिविषयीभूतयोः परत्वापरत्वयोरपि तत्त्वं नूनमभ्युपेयम्।

अनयोरन्तर्भावो द्रव्ये न सम्भवति सावधिकत्वात्सापेक्षत्वाच्च, द्रव्यं हि न किमपि सापेक्षं सावधिकं च दृश्यते। किञ्च परत्वापरत्वे यदि द्रव्यपदार्थे अन्तर्भविष्य-तस्तदा तयोर्नित्यद्रव्यत्वमनित्यद्रव्यत्वं वाङ्गीकार्यम्।

तत्र नित्यद्रव्यत्वं तस्य न भवितुमर्हति तयोश्चक्षुषा गृह्यमाणत्वात्, नित्यं हि किमपि द्रव्यं चक्षुषा गृह्यमाणं न प्रामाणिकम्, अनित्यद्रव्यत्वमपि तस्य स्वीकर्तुमशक्यं प्रयागाद्यन्त्यावयविद्रव्येषु तस्य विद्यमानत्वाद्, अनित्यद्रव्याणाञ्च तथा अदर्शनात्। किञ्च तयोर्द्रव्यपदार्थे अन्तर्भावाभ्युपगमे पृथिव्यादिनवद्रव्येष्वेव क्वचिदन्तर्भावोऽभ्युपेयः स च न सम्भवति। तथा हि—

परत्वापरत्वे पृथिव्यामन्तर्भवितुमनर्हे निर्गन्धत्वात्। पृथिव्याश्च निर्गन्धाया अप्रामाणिकत्वात्। एवं जलेऽपि तयोरन्तर्भावोऽशक्यः सांसिद्धिकस्नेहशीतस्पर्शादिजलीय-गुणशून्यत्वात्। तादृशगुणशून्यस्य जलादेरप्रामाणिकत्वाच्च।

एवं तेजःप्रभृतिषु द्रव्यान्तरेष्वपि तयोरन्तर्भावोऽसम्भवदुक्तिकस्तत्तद्द्रव्यनियत-गुणराहित्यात्। कर्मण्यपि तयोरन्तर्भावो दुःशकः संयोगविभागयोरनपेक्ष्य कारणत्वा-भावात् कर्मणश्च संयोगविभागयोरनपेक्ष्य कारणत्वनियमात्।

विशेषेऽपि नान्तर्भावो जन्यद्रव्यवृत्तित्वात्। समवायेऽपि तयोरन्तर्भावो दुरुपपादो विभुद्रव्येषु गुणादिषु चाविद्यमानत्वात्। समवायस्य च तेष्वपि विद्यमानत्वात्।

अभावेऽपि तयोरन्तर्भावो निर्युक्तिकस्तयोः सत्त्वेन प्रतीयमानत्वात्। अतः परिशेषात्तयोर्गुण एवान्तर्भावो मान्यस्तत्रापि रूपरसादितत्तद्गुणवैधर्म्यान्न तयो रूपादिषु समावेशः शक्य इति तयोरतिरिक्तगुणत्वमेवाभ्युपेयम्।

तदेवं परत्वापरत्वयोर्गुणत्वस्य कादाचित्कत्वात्कार्यत्वस्य च सिद्धतया तयोः किमपि कारणत्वमवश्यमभ्युपेयम्। भावात्मकं च कार्यं समवायिकारणासमवायिकारण-निमित्तकारणेभ्यो जायतेऽतस्तयोरपि त्रिविधानि कारणानि अभ्युपगन्तव्यानि।

तत्र परत्वापरत्वे यस्मिन्मूर्त्तद्रव्ये दृश्येते तत्तयोः समवायिकारणम् । बहुतरमूर्त्तसंयोगान्तरितत्वज्ञानं परत्वस्य, अल्पतरमूर्त्तसंयोगान्तरितत्वज्ञानमपरत्वस्य निमित्तकारणम् ।

## बहुतरमूर्त्तसंयोगान्तरितत्वञ्च—

उत्पत्स्यमानपरत्वविशिष्टमूर्त्तद्वयावृत्तिमूर्त्तसंयोगवत्त्वम् । संयोगवत्त्वञ्च स्वाश्रयसंयोगवत्त्वसम्बन्धेन । अस्य संयोगस्य प्रयोजनानुरोधेनोत्पत्स्यमानपरत्ववद्द्रव्यानुयोगिकत्वमेव कल्प्यते अत एतत्सम्बन्धेन तादृसंयोगवत्त्वम् उत्पत्स्यमानपरत्वके द्रव्य एव तिष्ठति नान्यत्र ।

संयोगे परत्ववैशिष्ट्यञ्च-स्वाश्रयत्व. स्वविशिष्टसंयोगाधिकत्वोभयसम्बन्धेन । स्वाश्रयत्वञ्च-स्वविशिष्टद्रव्यप्रतियोगिकत्वसम्बन्धेन । द्रव्ये स्ववैशिष्ट्यञ्च-स्वसमवायिद्रव्यनिरूपितपूर्वत्व-स्वावधिद्रव्यनिरूपितपश्चिमत्वोभयसम्बन्धेन ।

ईदृशः संयोगः प्रयागपाटलिपुत्रयोर्मध्यवर्तिनां मूर्त्तद्रव्याणां दिग्द्रव्येण सह संयोगः ।

पूर्वोक्तद्वितीयसम्बन्धघटकवैशिष्ट्यञ्च-स्वविशिष्टद्रव्यप्रतियोगिकत्वसम्बन्धेन । द्रव्ये स्ववैशिष्ट्यञ्च-स्वनिरूपकद्रव्यनिरूपितपूर्वत्व-स्वावधिद्रव्यनिरूपितपश्चिमत्वोभयसम्बन्धेन ।

ईदृशः संयोगः काशीपाटलिपुत्रयोर्मध्यवर्त्तिमूर्त्तद्रव्याणां दिग्द्रव्येण सह संयोगः । एतत्संयोगाधिक्यं प्रयागपाटलिपुत्रमध्यवर्त्तिमूर्त्तद्रव्यदिक्संयोगे वर्तते ।

अल्पतरमूर्त्तद्रव्यसंयोगान्तरितत्वञ्च - उत्पत्स्यमानापरत्वविशिष्टमूर्त्तद्वयावृत्तिमूर्त्तसंयोगवत्त्वम् ।

संयोगवत्त्वञ्च-स्वाश्रयसंयोगवत्त्वसम्बन्धेन । अस्य संयोगस्य प्रयोजनानुरोधेन उत्पत्स्यमानापरत्ववद् द्रव्यानुयोगिकत्वमेव कल्प्यते अत एतत्सम्बन्धेन तादृशसंयोगवत्त्वम् उत्पत्स्यमानापरत्वके द्रव्य एव तिष्ठति नान्यत्र ।

संयोगे अपरत्ववैशिष्ट्यञ्च — स्वाश्रयत्व-स्वविशिष्टसंयोगाल्पत्वोभयसम्बन्धेन स्वाश्रयत्वञ्च-स्वविशिष्टद्रव्यप्रतियोगिकत्वसम्बन्धेन, द्रव्ये स्ववैशिष्ट्यञ्च—स्वसमवायिद्रव्यनिरूपितपूर्वत्व-स्वावधिद्रव्यनिरूपितपश्चिमत्वोभयसम्बन्धेन ।

ईदृशः संयोगः काशीपाटलिपुत्रयोर्मध्यवर्त्तिनां मूर्त्तद्रव्याणां दिग्द्रव्येण सह संयोगः । पूर्वोक्तद्वितीयसम्बन्धघटकवैशिष्ट्यञ्च-स्वविशिष्टद्रव्यप्रतियोगिकत्वसम्बन्धेन । द्रव्ये

स्ववैशिष्ट्यञ्च-स्वनिरूपकद्रव्यनिरूपितपूर्वत्व-स्वावधिद्रव्यनिरूपितपश्चिमत्वोभयसम्बन्धेन, ईदृशः संयोगः काशीप्रयागयोर्मध्यवर्त्तिमूर्त्तद्रव्याणां दिग्द्रव्येण सह संयोगः।

एतत्संयोगाल्पत्वं काशीपाटलिपुत्रमध्यवर्त्तिमूर्त्तद्रव्यदिक्संयोगे वर्तते।

परत्वापरत्वविशिष्टतादृशसंयोगवत्ताया नियामकः स्वाश्रयसंयोगसम्बन्धस्तत्कुक्षौ स्वाश्रयतया दिग्द्रव्यस्य सिद्धिर्भवति।

तत्र स्वाश्रयतया कालस्याकाशस्य वा प्रवेशो नानुमन्तुं शक्यः। तत्तदात्मानमादाय विनिगमनाविरहप्रसङ्गेन कालाकाशयोरीश्वरस्यानन्तानां जीवात्मनाञ्च तद्घटकत्वापत्तेः दिग्द्रव्याभ्युपगमे तु नोक्तविनिगमनाविरहनिबन्धनो दोषः तादृशसम्बन्धघटकतयैव दिग्द्रव्यसिद्धेः।

परत्वापरत्वयोरसमवायिकारणं तु परत्वापरत्वाश्रयाभ्यां मूर्त्तद्रव्याभ्यां सह दिग्द्रव्यस्य संयोगः। तादृशद्रव्याभ्यां कालादिसंयोगस्यापि हेतुत्वसम्भवेन दिग्द्रव्यं नाभ्युपेयमिति शङ्कितुं न शक्यते, आकाशमीश्वरम् अनन्तान् जीवात्मनश्चादाय विनिगमनाविरहप्रसङ्गेन तेषां सर्वेषां संयोगस्य कारणत्वापत्तेः।

दिग्द्रव्याभ्युपगमे तु नैष दोषः परत्वापरत्वयोः कारणीभूतसंयोगाश्रयतयैव तत्सिद्धेः। तदेवं रीत्या प्राचीनैर्नैयायिकैः पृथिव्याद्यष्टद्रव्यातिरिक्ततया दिग्द्रव्यं प्रतिष्ठापितम्।

दीधितिकारस्तु तन्न मन्यते तन्मते परत्वापरत्वविष्टोक्तसंयोगवत्तानियामके स्वाश्रयसंयोगसम्बन्धे स्वाश्रयतयेश्वरस्य सन्निवेशसम्भवात्।

परत्वापरत्वयोरसमवायिकारणत्वस्यापि तदाश्रयद्रव्येण सह ईश्वरसंयोगस्यैव सम्भवाच्च कालाकाशावादाय विनिगमनाविरहप्रसङ्गस्तु न शङ्क्यः ईश्वरभिन्नतया कालाकाशयोरसिद्धत्वात्। जीवात्मन आदायापि विनिगमनाविरहप्रसङ्गो न शक्यसम्भवः, ईश्वरे परत्वापरत्वे प्रतिजीवात्मापेक्षया विशेषात्। तथा हि ईश्वरे परत्वापरत्वयोः सामान्यधर्मावच्छिन्नकार्यतानिरूपितकारणता क्लृप्ता तस्य कार्यमात्रं प्रति कारणत्वात्।

जीवात्मसु परत्वापरत्वयोर्न क्वापि कारणता क्लृप्ता अतो जीवात्मापेक्षया ईश्वरस्य परत्वापरत्वयोरसमवायिकारणसंयोगाश्रयतायाः परत्वापरत्वाविशिष्टोक्तसंयोगवत्त्वनियामकसम्बन्धघटकतायाश्च कल्पनमुचितम्।

कालो हि न्यायमते एको नित्यो महान् विभुश्च। स च सर्वेषां पदार्थानामाधारः कार्यमात्रस्य निमित्तकारणञ्च, कालिकसम्बन्धेन कार्यमात्रं प्रति तादात्म्यसम्बन्धेन कालस्य कारणत्वात्।

स च क्षणदिनादिव्यवहारौपयिककालापेक्षया महत्त्वान्महाकालशब्देन व्यपदिश्यते। प्राचीनैर्नैयायिकैर्यत्प्रयोजनानुरोधेन तत्सिद्धिमन्यते तत्प्राचीनग्रन्थेष्वित्थमुपलभ्यते।

अयमस्माज्ज्येष्ठोऽयमस्मात्कनिष्ठ इत्याकारिका प्रतीतिः सर्वजनानुभवसिद्धा, एतद्विषयभूतं ज्येष्ठत्वं परत्वशब्देन, कनिष्ठत्वञ्चापरत्वशब्देनोच्यते। एते परत्वापरत्वे अपि भावकार्यस्वरूपे, भावकार्यञ्च समवायिकारणासमवायिकारणनिमित्तकारणेभ्यस्त्रिविधेभ्यो जायते।

तत्र परत्वापरपर्यायं ज्येष्ठत्वं यद् द्रव्ये गृह्यते तद्द्रव्यं तस्य समवायिकारणम्। यदपेक्षया च यत्र ज्येष्ठत्वं गृह्यते तेन सह यावतां सूर्यस्पन्दानां सम्बन्धस्तदपेक्षया बहुतरसंयोगस्य परत्वाश्रयद्रव्ये ज्ञानं परत्वस्य निमित्तकारणम्। तद्द्रव्येण सह कालस्य यः संयोगः स तदसमवायिकारणम्।

ननु देवदत्तजन्मोत्तरं जातो यज्ञदत्तो देवदत्तापेक्षया दीर्घजीवी तत्र यज्ञदत्तसम्बद्धसूर्यक्रियाधिकसूर्यक्रियासम्बन्धो देवदत्ते नास्त्यतो देवदत्ते यज्ञदत्तापेक्षया परत्वोत्पत्तिर्दुर्घटा, यज्ञदत्ते च देवदत्तापेक्षया परत्वोत्पत्तिर्दुष्परिहरा, दीर्घजीविनि यज्ञदत्ते देवदत्तसम्बद्धसूर्यक्रियाधिकसूर्यक्रियासम्बन्धस्य सत्त्वादिति चेन्न, तत्सम्बद्धयावत्सूर्यक्रियाप्रागभावाधिकरणत्वस्य तत्सम्बद्धसूर्यक्रियाधिक्यशब्देन विवक्षणे दोषाभावात्।

देवदत्तसम्बद्धयज्ञदत्तोत्पत्तिप्राक्कालिकसूर्यक्रियासु यज्ञदत्तसम्बद्धयावत्सूर्यक्रियाप्रागभावाधिकरणत्वस्य सत्त्वात्। देवदत्तासम्बद्धयज्ञदत्तसम्बद्धसूर्यक्रियासु च देवदत्तसम्बद्धयावत्क्रियाप्रागभावाधिकरणत्वस्यासत्त्वात्।

क्रियायां देवदत्तादिसम्बद्धत्वं नाम-देवदत्तसंयुक्तसंयुक्तसमवेतत्वरूपम्। यथा देवदत्तसंयुक्तो विभुः कालस्तत्संयुक्तः सूर्यस्तस्य समवायः सूर्यक्रियायामस्ति। एवं देवदत्तादौ सूर्यक्रियासम्बन्धवत्त्वं सूर्यक्रियासमवायिसंयुक्तसंयोगवत्त्वरूपम्।

यथा सूर्यक्रियासयवायी सूर्यस्तत्संयुक्तो विभुः कालस्तत्संयोगो देवदत्तादावस्ति। यदि विभु कालद्रव्यं न स्यात्तदा सूर्यक्रियायां देवदत्तादिसम्बन्धवत्त्वं देवदत्तादौ सूर्यक्रियासम्बन्धवत्त्वञ्च दुर्घटं देवदत्तादिना सह सूर्यक्रियायाः सूर्यक्रियया देवदत्तादेश्चोक्तसम्बन्धातिरिक्तस्य सम्बन्धस्य दुर्वचत्वात्।

देवदत्तसूर्यक्रिययोरुक्तसम्बन्धसम्पादकत्वं दिशमाकाशमीश्वरञ्चादाय नोपपादयितुं शक्यम्। तत्तज्जीवात्मानमादाय विनिगमनाविरहेण दिशाकाशेश्वराणामिवानन्तानां जीवात्मनामप्युक्तसम्बन्धघटकत्वापत्तेः।

कालेन सह तेषां विनिगमनाविरहस्तु न शक्यसम्भवः कालस्य तादृशसम्बन्धसम्पादकतयैव सिद्धत्वात्। एवं विभोः कालद्रव्यस्यानभ्युपगमे परत्वस्योक्तमसमवायिकारणमपि दुर्घटं जीवात्मन आदाय विनिगमनाविरहेण परत्वाश्रयद्रव्येण दिगादिसंयोगस्य कारणत्वकल्पनाया दुःशकत्वात्।

एवं कनिष्ठत्वापरपर्यायस्यापरत्वस्य समवायिकारणं तद् द्रव्यं यत्र तत्प्रमीयते, यद् द्रव्यञ्च यदपेक्षया अपरत्वेन व्यवह्रियते तद्द्रव्ये तद् द्रव्यसम्बद्धसूर्यक्रियान्यूनसूर्यक्रियासम्बन्धज्ञानमपरत्वस्य निमित्तकारणम्।

अत्रापि नेदं शङ्कितुं शक्यं यद् यत्र देवदत्तजन्मोत्तरं जातो यज्ञदत्तो देवदत्ततो दीर्घजीवी तत्र देवदत्तसम्बद्धसूर्यक्रियाया यज्ञदत्तसम्बद्धसूर्यक्रियातो न्यूनतया तत्र देवदत्ते यज्ञदत्तापेक्षया अपरत्वस्योत्पत्त्यापत्तिः।

एवं यज्ञदत्तसम्बद्धक्रियायां देवदत्तसम्बद्धसूर्यक्रियातोऽन्यूनतया यज्ञदत्ते देवदत्तापेक्षया अपरत्वस्योत्पत्तिर्दुरुपपादा, तत्सम्बद्धक्रियावृत्तिप्रागभावप्रतियोगित्वरूपस्यैव तत्सम्बद्धसूर्यक्रियातो न्यूनत्वस्य विवक्षणात्। तथा हि—

देवदत्तसम्बद्धयज्ञदत्तोत्पत्तिप्राक्कालिकसूर्यक्रियायां यज्ञदत्तसम्बद्धसूर्यक्रियायाः प्रागभावोऽस्त्येवातो देवदत्तसम्बद्धसूर्यक्रियानिष्ठप्रागभावप्रतियोगित्वं यज्ञदत्तसम्बद्धसूर्यक्रियासु वर्तते अतो यज्ञदत्तसम्बद्धसूर्यक्रियाया देवदत्तसम्बद्धसूर्यक्रियातो न्यूनत्वम्।

यज्ञदत्तसम्बद्धसूर्यक्रियासु च देवदत्तसम्बद्धसूर्यक्रियायाः प्रागभावो नास्ति यज्ञदत्तसम्बद्धसूर्यक्रियातः पूर्वमेवोत्पन्नत्वादतो यज्ञदत्तसम्बद्धसूर्यक्रियानिष्ठप्रागभावप्रतियोगित्वस्य देवदत्तसम्बद्धसूर्यक्रियासु अभावेन न देवदत्तसम्बद्धक्रियायां यज्ञदत्तसम्बद्धक्रियातो न्यूनत्वम्।

अत्रापि सूर्यक्रियादौ देवदत्तादेर्देवदत्तादौ सूर्यक्रियायाश्च यः सम्बन्धस्तत्सम्पादकतया कालस्य सिद्धिर्बोध्या। दिगादिद्वारा तत्सम्बन्धो नोपपादयितुं शक्यो जीवात्मन आदाय विनिगमनाविरहेण दिशाकाशेश्वराणामनन्तानां जीवानाञ्च तादृशसम्बन्धघटकत्वापत्तेः।

अपरत्वासमवायिकारणमप्यपरत्वाश्रयेण कालस्य संयोग एव, विनिगमनाविरहेण दिगादिसंयोगस्य कारणत्वासम्भवात्। कालेन सार्धं तु विनिगमनाविरहो न सम्भवदुक्तिकस्तादृशसंयोगरूपकारणसम्पादकतयैव तत्सिद्धेः।

उक्तरीत्या पूर्वैर्नैयायिकैः क्रियमाणकालसिद्धिर्दीधितिकृतो न सम्मता। तन्नये ईश्वरद्वारोक्तसम्बन्धोपपत्तौ बाधकाभावात्। जीवात्मन आदायेश्वरेण सह विनिगमनाविरहो न युक्तिसंगतः। ईश्वरे ज्येष्ठत्वकनिष्ठत्वापरपर्याययोः परत्वापरत्वयोः सामान्य-

धर्मावच्छिन्नकार्यतानिरूपितकारणतायाः क्लृप्ततया तत्र परत्वापरत्वयोर्विशेषधर्मावच्छिन्नकार्यतानिरूपितकारणत्वकल्पनाया औचित्यात्। दिश आकाशस्य जीवात्मनां वा कथञ्चिदपि परत्वापरत्वयोः कारणताया अक्लृप्ततया तत्कल्पनाया नितान्तं नूतनत्वेनानौचित्यात्।

तदेवं[१] दिक्कालयोरीश्वरेणान्यथासिद्धतया तयोरीश्वरातिरिक्तत्वमयुक्तम्।

## आकाशस्येश्वरानतिरिक्तत्वे दीधितिकृन्मतविमर्शः

न्यायवैशेषिकदर्शने आकाशः शब्दसमवायिकारणतयाभ्युपगतः। तत्सिद्धिप्रकारस्तावदित्थम्-शब्दः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्।

यो न पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितः स न पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितो यथा रूपादिरात्मत्वादिश्च। रूपादिर्हि पृथिव्याद्यष्टद्रव्यातिरिक्ते आश्रितो न भवत्यतः पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितोऽपि न भवति द्रव्याश्रितस्य तस्य पृथिव्याद्यष्टद्रव्येष्वेव यत्र कुत्र द्रव्ये आश्रितत्वात्।

एवमात्मत्वादिः पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितो न भवतीति स पृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितो न भवति पृथिव्याद्यष्टद्रव्येषु क्वचिदाश्रितत्वेनैव तस्य द्रव्याश्रितत्वात्।

न च नेदमनुमानं समीचीनं पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यस्याप्रसिद्धतया साध्याप्रसिद्धेरिति शङ्क्यं सामानाधिकरण्यसम्बन्धेन द्रव्यत्वपृथिव्यादिभेदाष्टकैतदुभयवत्त्वस्यैव साधनीयत्वात्। तथा च द्रव्यत्वं द्रव्येषु पृथिव्यादिभेदाष्टकञ्च रूपादिषु प्रसिद्धमिति तदुभयरूपस्य साध्यस्य प्रसिद्धतयोक्तदोषाभावात्।

अत्रत्यो हेतुरपि न पृथिव्याद्यष्टद्रव्यानाश्रितत्वविशिष्टद्रव्याश्रितत्वरूपोऽपि तु पृथिव्याद्यष्टद्रव्यानाश्रितत्व-द्रव्याश्रितत्वैतदुभयरूपः। उभयान्तर्गतस्य प्रत्येकं तत्र तत्र प्रसिद्धतया नोभयाप्रसिद्धिरतो न साधनाप्रसिद्धेः प्रसङ्गः।

तथा चायमनुमानाकारः प्रतिफलति—शब्दः सामानाधिकरण्यसम्बन्धेन द्रव्यत्वपृथिव्यादिभेदाष्टकैतदुभयवान् पृथिव्याद्यष्टद्रव्यानाश्रितत्व-द्रव्याश्रितत्वैतदुभयस्मात्।

---

१—अथ पदार्थतत्त्वं निरूप्यते। तत्र दिक्कालौ नेश्वरादतिरिच्येते, मानाभावात् तत्तन्निमित्तविशेषसमवधानवशादीश्वरादेव तत्तत्कार्यविशेषाणामुपपत्तेः। परेषामेकैकस्माद्दिगादेरिव विलक्षणानां प्राच्यादिव्यवहाराणाम्। प० तत्त्वनिरूपणे पृ० सं० १–३।

यो न सामानाधिकरण्यसम्बन्धेन तादृशोभयवान् स न पृथिव्याद्यष्टद्रव्यानाश्रितत्वद्रव्याश्रितत्वैतदुभयवान् यथा रूपादिरात्मत्वादिश्च ।

ननु शब्दे द्रव्याश्रितत्वस्याप्रसिद्धतया हेतुः स्वरूपासिद्ध इति चेन्न, शब्दो द्रव्याश्रितो गुणत्वात्संयोगवदित्यनुमानेन शब्दे द्रव्याश्रितत्वस्य सिद्धत्वात् ।

न च तथापि पृथिव्याद्यष्टद्रव्यानाश्रितत्वस्यासिद्धतया स्वरूपासिद्धत्वस्य तादवस्थ्यमिति वाच्यम् वक्ष्यमाणैरनुमानैस्तस्यापि साधयितुं शक्यत्वात् । तथा हि—

शब्दो न स्पर्शवद्विशेषगुणोऽग्निसंयोगासमवायिकारणकत्वाभावे सत्यकारणगुणपूर्वकत्वे च सति प्रत्यक्षत्वात् सुखवत् ।

अयमाशयः—योऽग्निसंयोगासमवायिकारणको न भवति कारणगुणपूर्वकश्च न भवति प्रत्यक्षश्च भवति स स्पर्शवतां पृथिवीजलतेजोवायूनां मध्ये कस्यापि गुणो न भवति यथा सुखम् । सुखं हि नाग्निसंयोगासमवायिकारणकं न वा कारणगुणपूर्वकं तदाश्रयस्यात्मन अकारणकत्वात्, मनोग्राह्यत्वेन प्रत्यक्षञ्चातो न कस्यापि स्पर्शवतो द्रव्यस्य विशेषगुणः, शब्दोऽपि नाग्निसंयोगासमवायिकारणको न वा कारणगुणपूर्वकः श्रोत्रग्राह्यतया प्रत्यक्षश्चेति सोऽपि कस्यापि स्पर्शवतो द्रव्यस्य विशेषगुणो न भवितुमर्हति ।

उक्तहेतौ सत्यन्तदलं यदि न दीयेत तदा पाकजरूपादौ व्यभिचारस्तत्राकारणगुणपूर्वकप्रत्यक्षत्वस्य सत्त्वेऽपि स्पर्शवद्विशेषगुणभिन्नत्वस्यासत्त्वात् स्पर्शवत्यां पृथिव्यां समवेतत्वात् । अतः सत्यन्तमादाय व्यर्थविशेषणत्वमशक्यशङ्कम् ।

एवमेव यदि हेतावकारणगुणपूर्वकत्वं न दीयेत तदा पटरूपादौ व्यभिचारः स्यात्तत्राग्निसंयोगासमवायिकारणकत्वाभावविशिष्टप्रत्यक्षत्वस्य सत्त्वात् । स्पर्शवद्विशेषगुणभिन्नत्वरूपसाध्यस्य चासत्त्वादतस्तदादायापि हेतोर्व्यर्थविशेषणत्वमाशङ्कितुमशक्यम् ।

एवं हेतौ यदि प्रत्यक्षत्वभागो न दीयेत तदा जलपरमाणुरूपादौ व्यभिचारः स्यात्तत्र प्रत्यक्षत्वविनिर्मुक्तस्योक्तहेतोः सत्त्वात् साध्यस्य चासत्त्वात् । अतस्तदंशस्यापि व्याभिचारवारकत्वान्न तदादाय हेतौ व्यर्थविशेषणत्वशङ्कासमुन्मेषः सम्भाव्यः । तदित्थमनुमानेनानेन शब्दस्य पृथिव्यादिचतुर्द्रव्यानाश्रितत्वं सिद्ध्यति ।

शब्दो न दिक्कालमनसां गुणो विशेषगुणत्वात् रूपवत् । नचेदमनुमानमसम्यक् शब्दस्य विशेषगुणत्वे मानाभावादिति शङ्कनीयं तस्यापि अनुमानप्रमाणेन साधनसम्भवात् । तथा हि—शब्दो विशेषगुणो लौकिकप्रत्यासत्त्येन्द्रियग्राह्यत्वे सति लौकिकप्रत्यासत्त्या द्वीन्द्रियग्रहणयोग्यताराहित्ये च सति गुणत्वव्याप्यजातिमत्त्वादित्यनुमानस्यैव तत्र प्रमाणत्वात् ।

प्रभात्वमादाय व्यभिचारवारणाय गुणत्वव्याप्येत्यादि। गुरुत्वत्वमादाय व्यभिचारवारणाय प्रथमं सत्यन्तम्। संख्यात्वमादाय व्यभिचारवारणाय द्वितीयं सत्यन्तम् सांसिद्धिकद्रवत्वस्नेहधर्माधर्मभावनासु प्रकृतहेतोरभावेन तस्य विशेषगुणत्वसाधकत्वं न सम्भवतीति तु न शङ्कनीयं साध्यसमव्याप्त एव हेतुरिति नियमाभावात्।

अतो यथा वह्निमति तप्तायःपिण्डे अवर्तमानादपि धूमात् पर्वतादौ वह्न्यनुमितिर्भवति तथैव सांसिद्धिकद्रवत्वादावविद्यमानादप्युक्तहेतोः शब्दे विशेषगुणत्वानुमानं भवितुमर्हति।

सांसिद्धिकद्रवत्वादौ विशेषगुणत्वसिद्धिः कुतो हेतोरिति जिज्ञासायां तत्र विशेषगुणत्वसाधकमनुमानमित्थमनुसन्धेयं सांसिद्धिकद्रवत्वादयो विशेषगुणाः स्थितिस्थापकान्यत्वे सति विभिन्नद्रव्यविभाजकोपाधिमद्व्यक्तिद्वयवृत्तितानवच्छेदकगुणत्वव्याप्यजातिमत्त्वात्।

स्थितिस्थापके अतिव्याप्तिवारणाय सत्यन्तं संयोगादावतिव्याप्तिवारणाय विभिन्नद्रव्यविभाजकोपाधिमद्व्यक्तिद्वयवृत्तितानवच्छेदकत्वं जातौ विशेषणम्, सांसिद्धिकद्रवत्वत्वादेर्जलादिद्वयवृत्तितानववच्छेदकतया तदादाय पक्षे हेतोरसत्त्वापत्तिवारणाय व्यक्तिद्वये विभिन्नद्रव्यविभाजकोपाधिमत्त्वस्य निवेशः, प्रभात्वमादाय प्रभायां व्यभिचारवारणाय जातौ गुणत्वव्याप्यत्वस्य निवेशः।

न चैवं शब्दस्यात्मविशेषगुणत्वसम्भवेन पृथिव्याद्यष्टद्रव्यानाश्रितत्वं पक्षे असिद्धमेवेति वाच्यम्, वक्ष्यमाणानुमानेनात्मविशेषगुणत्वाभावस्य साधनीयत्वात्। तथा हि—

शब्दो नात्मविशेषगुणो बहिरिन्द्रियग्रहणयोग्यत्वात् रूपवत्। तदेवं त्रिभिरेभिरनुमानैः शब्दे पृथिव्याद्यष्टद्रव्यानाश्रितत्वसिद्ध्या तत्र हेतोः स्वरूपासिद्धत्वं नाशङ्कितुं शक्यम्।

तदित्थं शब्दे पृथिव्याद्यष्टद्रव्यानाश्रितत्वस्य द्रव्याश्रितत्वस्य च सिद्ध्या तदुभयात्मकहेतुना शब्दे उक्तरीत्या पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसिद्धिसम्भवेन पृथिव्याद्यष्टद्रव्यातिरिक्तं शब्दाश्रयभूतं द्रव्यं सिद्ध्यति, एवं भूतं द्रव्यमेवाकाशशब्देन व्यपदिश्यते।

न च तथापि शब्दस्याकाशसमवायिकारणकत्वे मानाभावादाकाशं शब्दसमवायिकारणमिति दुर्वचमिति वाच्यम्, शब्द आकाशसमवायिकारणक आकाशसमवेतकार्यत्वात्। यद् यत्समवेतं कार्यं तत्तत्समवायिकारणकमिति नियमस्य रूपादौ दृष्टत्वात्।

४

न च शब्दस्य कार्यत्वमेवासिद्धमिति वाच्यम्, शब्दः कार्यो विनाशिभावत्वाद् घटादिवत् ।

न च तत्र विनाशित्वं भावत्वञ्चासिद्धमिति वक्तुं शक्यं सकृच्छ्रुतस्य शब्दस्य श्रवणसामग्र्यां सत्यामपि पुनरश्रवणेन विनाशित्वस्य शब्दः सन्नित्यादिप्रतीत्या भावत्वस्य च साधनसम्भवात् ।

परं[१] दीधितिकृत ईश्वरव्यतिरिक्तस्याकाशस्यास्तित्वं न मन्यन्ते । तन्मते ईश्वर एवाकाशकार्यकारी, स एव शब्दस्य समवायिकारणम् । कर्णशष्कुल्याद्यवच्छिन्नः स एव श्रोत्रकार्यकारी ।

न चेश्वरस्य शब्दकारणत्वाभ्युपगमे तत्तज्जीवात्मन आदाय विनिगमनाविरहप्रसक्त्यानन्तेषु जीवेष्वपि शब्दसमवायिकारणत्वमाश्रयणीयं स्यादतो लाघवात् शब्दसमवायिकारणस्यातिरिक्तद्रव्यस्यैव कल्पना समीचीनेति वाच्यमीश्वरस्य कार्यमात्रं प्रति हेतुतया कार्यसामान्यान्तर्गतं शब्दं प्रत्यपि हेतुतायाः सिद्धतया तत्र शब्दनिष्ठकार्यत्वावच्छिन्नकार्यतानिरूपितनिमित्तकारणतायाः क्लृप्तत्वेन शब्दत्वावच्छिन्नकार्यतानिरूपितसमवायिकारणताया अपि तत्रैव कल्पनीयताया औचित्यात् ।

आकाशे तु शब्दकारणतायाः कल्पनस्य नितान्तं नूतनतया अनौचित्यात् । अत इत्थं निर्विवादमेतत् सिद्धयति यद् दिक्कालाकाशा ईश्वरातिरिक्ता न सन्तीति ।

## उक्तदीधितिकृन्मतालोचनम्

दिक्कालाकाशानामीश्वरातिरिक्तत्वनिराकरणपराणां दीधितिकृदभिमतत्वेन प्रतीयमानानामुक्तयुक्तीनां सूक्ष्मेक्षिकया क्रियमाणं समीक्षणं दीधितिकृतः कौशलम् प्रतिष्ठापयितुं समुचितं न प्रतीयते ।

यतो हि दिक्कृतपरत्वापरत्वयोः कालकृतपरत्वापरत्वयोः शब्दस्य च यत्कारणत्वमीश्वरे क्लृप्तमस्ति तत्कार्यत्वावच्छिन्नकार्यतानिरूपितनिमित्तकारणतारूपम्, कार्यसामान्यं प्रत्येव कर्तृविधयेश्वरस्य निमित्तकारणत्वात् ।

---

१–शब्दनिमित्तकारणत्वेन क्लृप्तस्येश्वरस्यैव शब्दसमवायिकारणत्वम् । शब्दस्तत्तज्जन्यस्तददृष्टजन्यत्वात् सुखादिवदिति पुनरप्रयोजकम् । अदृष्टस्य शब्दजनकत्वेऽपि तदाश्रयस्य जनकत्वे मानाभावाद् अस्मदादेश्च शब्दसमवायिकारणत्वेऽहं सुखादिमानितिवदहं शब्दवानिति प्रतीत्यापत्तिः श्रोत्रमपि च कर्णशष्कुलीविवरावच्छिन्न ईश्वर एव यथा परेषां तथाविधमाकाशम् । पदार्थतत्त्वनिरूपणे पृ० सं० ३-१० ।

अत उक्तकार्यनिष्ठकार्यत्वव्याप्यदैशिकपरत्वत्वादितत्तद्धर्मावच्छिन्नकार्यतानिरूपितकारणता तत्रापि नूतनैव कल्पनीयास्ति अत इयं नूतनकारणता यथेश्वरे कल्प्यते तथैव विभिन्नेषु जीवेष्वपि विनिगमनाविरहेण कल्पनीयतामापद्यत एव ।

किञ्च कार्यत्वेन रूपेण दैशिकपरत्वादितत्तत्कार्यकारणता यथेश्वरे क्लृप्ता तथैवादृष्टद्वारा तत्तज्जीवेष्वपि क्लृप्ता, कार्यमात्रं प्रति अदृष्टद्वारेण जीवात्मनां कारणतायाः क्लृप्तत्वात् ।

अत ईश्वरे सामान्यरूपेण तत्तत्कार्यकारणता क्लृप्ता तत्तज्जीवेषु च न क्लृप्तेत्येवंविधजीवेश्वरगतवैषम्यरूपविनिगमकबलादीश्वर एव तत्तत्कार्यकारणता क्लृप्ता न जीवेष्वित्येतदर्थस्य वक्तुमशक्यत्वात् ।



# मनोविमर्शः

नित्यं निरंशं परमाणुरूपं
बोध्यं मनो जीवसहायभूतम् ;
भोगस्य हेतुं परिसाधयन्ति
नैयायिका युक्तिशतं दधानाः ॥ १ ॥

सुखादिसाक्षात्कृतिकार्यरूपा
केनापि जन्या करणेन जीवे ।
क्रियात्वहेतोरनुमानगम्या
रूपादिसाक्षात्कृतिवच्च जन्या ॥ २ ॥

उक्तं स्मृतेः कारणतामवाप्तं
वात्स्यायनेनापि मनः स्वभाष्ये ।
तत्तत्प्रतीतेर्युगपन्न सत्ता
ज्ञेयं ततोऽणुत्वमिहोपपन्नम् ॥ ३ ॥

अक्षैर्विभिन्नैर्महनीययोगे
तैस्तैः प्रबोधो मनसो विभाति ।
अक्षाणि बोधं जनयन्ति तानि
देहे विभिन्नावयवे स्थितानि ॥ ४ ॥

मनोविभुत्वे युगपत्प्रतीते-
रपह्नवो नैव भवेत्कदापि ।
अतश्च बोध्यं नितरामणुत्वं
नयैकशीलैः मनसः प्रसिद्धम् ॥ ५ ॥

बोधस्य सत्ता न सुषुप्तिकाले
नाड्याम्प्रवेशे मनसः प्रसिद्धा ।
नैयायिकास्तर्कपरास्तदानीं
भिन्नां तु सत्तां मनसो विदन्ति ॥ ६ ॥

सुषुप्तिकालेऽनुदयेऽपि बोधे
सुखेन सुप्तं न मया प्रबुद्धम् ।
प्रमाणगम्या नयकोविदानां
स्मृतेर्विधेयं सहजोपपन्ना ॥ ७ ॥

निर्दुःखतायाः सबला प्रतीति-
र्निर्बोधतायाश्च विशालभूतिः ।
लिङ्गेन केनापि तदातनेन
साध्यानुभूतिर्नयपण्डितानाम् ॥ ८ ॥

मनोऽतिरिक्तं यदि निष्प्रमाणं
सुषुप्तिकाले विषयादिसत्त्वे ।
उदेति बोधो न कथं तदानीं
गुणेन्द्रियाणां सहभावसत्त्वे ॥ ९ ॥

मनोऽतिरिक्तं यदि सप्रमाणं
तदा न बोधोदयता वराकी ।
सुषुप्तिकाले मनसः प्रवेशाद्
विशेषनाड्यां नयचर्चितस्य ॥११॥

बोधस्य हेतुर्मनसा सहैव
त्वग्योग्ययोगो भणितः स्वतन्त्रः ।
काले सुषुप्तेस्तदभावतायां
नोदेति बोधो बुधतापकारः ॥११॥

प्रबलतर्कसमाधिसुसाधितं
सकलबोधसहायनयान्वितम् ।
अजमनन्तमखण्डमभौतिकं
प्रतिशरीरविभिन्नमनो मतम् ॥१२॥

एकं च नित्यं परमाणुरूपं
सर्वात्मनां बोधकरं मनश्चेत् ।
भिन्नात्मनां स्वापविशिष्टबोधौ
कालैकतायां न कदापि सिद्धौ ॥१३॥

अक्षं प्रशस्तं व्यवहर्त्तुमर्हं
तर्कैः प्रकल्प्यान्तरतामवाप्तम् ।
मान्यं मनो बोधकरं विभिन्नं
द्रव्यं प्रमेयं नयतन्त्रसिद्धम् ॥१४॥

अन्तस्तनोश्चानिलभव्यभाग-
स्तिष्ठत्यणुस्तैजसताश्रयो वा ।
तस्यैव योगं समवाप्य पूर्णं
सर्वेन्द्रियाणां भवति प्रबोधः ॥१५॥

बोधाः समस्तास्तत एव सिद्धा
नाक्षं मनो भिन्नमिति ब्रुवन्ति ।
पन्थानमेनं लघुतामुपेतं
संत्यज्य बोधान्यविधा न मान्या ॥१६॥

रघूक्तिरेषा न विगर्हितव्या
ससाधना भाति यतोऽनवद्या ।
मनोऽतिरिक्तं लभते न सत्त्वं
तदन्तरा बोधविधोपपन्ना ॥१७॥

बोधस्य सर्वस्य च सर्वकाले
क्लृप्तेन वायोरणुनैव सिद्धिः ।
अन्तःस्थवह्नेरणुनैव वेति
द्रव्यं विभिन्नं न मनो विभाति ॥१८॥

वदति दीधितिकारनवीनता
मतिमतामवबोधनदक्षताम् ।
सहजयुक्तिबला धवला धरा
सृजति नव्यमनोरमभावनाम् ॥१९॥

प्राचां विचारो गुरुतामुपेतो
मान्याः कथं प्रातिभबोधवद्भिः ।
श्लाघ्यो विमर्शो रघुनाथसूरे-
र्ग्राह्यं मनो द्रव्यतया न भिन्नम् ॥२०॥

अब्वायुवह्निपृथिवीपरमाणुभागा-
श्चान्तस्तनोर्विधिहुताः परिभान्ति भव्याः ।
तेष्वेव कस्य धवलस्य मनोमयत्वं
निर्णेतुमद्य रघुनाथविद्या न शक्ता ॥२१॥

तेषां समेषां च मनोमयत्वे
सर्वाक्षबोधा युगपत्प्रसक्ताः ।
तेषां निरासाय न कोऽपि यत्नो
मार्गस्ततो मान्यमतेः प्रहेयः ॥२२॥

क्लृप्तस्य नेदं परमाणुरूपं
द्रव्यस्य कस्यापि मनो मतं मे ।
सुखाद्युपायः परमाणुकायम्
भूतं मनो भिन्नमिहास्ति मान्यम् ॥२३॥

द्रव्यान्तरत्वे न रघोर्विवादो
नाभौतिकं दीधितिकृन्मनस्तद् ।
भूतं मनो दीधितिकृद् ब्रवीति
भूतातिरिक्तं न तु तस्य रूपम् ॥२४॥

भूतत्वसिद्धावणुतैव हेतुः
कालादिसत्त्वं विभुतामुपेतम् ॥
भूतातिरिक्तं गणितं न तत्त्वं
यस्याणुभावो भणितो नयज्ञैः ॥२५॥

भूतत्वसाधनधिया रघुनाथसूरि-
र्हेतुं विचिन्त्य मनसः परमाणुभावम् ।
भव्यं जगाद युगपद् विरहं प्रतीते-
र्गाथा तथापि विदुषो न विभाति भव्या ॥२६॥

आपाद्यते यदि मनोऽभिनवं प्रभूतं
भूते विशेषगुणवत्त्वकथा प्रसिद्धा ।
अक्षे तथाभ्युपगते मनसि प्रसिद्धं
स्प्रष्टृत्वमत्र विरलाभिनवं प्रसक्तम् ॥२७॥

दृष्टं विशेषगुणवत्किमपि प्रभूतं
नव्यं पदार्थकमलं सृजति प्रकामम् ।
बाभाति सृष्टिसबले विमले प्रशान्ते
सापत्तिरत्र मनसि प्रबला प्रसक्ता ॥२८॥

अभौतिकं द्रव्यमनोऽतिरिक्तं
मनो न भूतं परमार्थरीतौ ।
तथा च नेष्टा प्रबला विपत्ति-
रतो न मान्या भयदा विभूतिः ॥२९॥

प्राचीननैयायिकपक्षपातः
सत्तर्कयुक्तः परिभाति भव्यः ।
तर्केण हीना रघुनाथनीति-
र्मान्या कथं सा सुखदा न भूतिः ॥३०॥

---

# मनोविषये दीधितिकृन्मतविमर्शः

ग्रन्थे समग्रे परिलोचितं यत्
पद्येन सूक्ष्मेण समासतोऽत्र।
व्यासेन गद्येन तदेव तत्त्वं
संलोचितं बालविबोधनाय ॥

मनः खलु प्राचीनैर्न्यायवैशेषिकविपश्चिद्भिर्नित्यं निरवयवं परमाणुरूपमनन्तञ्चाभ्युपेयते। तच्च, सुखादिसाक्षात्कारः करणजन्यः क्रियात्वाद्रूपादिसाक्षात्कारवदित्यनुमानेन चक्षुरादिकरणकत्वबाधसहकृतेन साध्यते। स्मृतिकरणतयापि तत्साधनं न्यायसूत्रभाष्ये वात्स्यायनेन[1] कृतम्।

अस्याणुत्वं ज्ञानायौगपद्यस्यान्यथानुपपत्त्या प्रतिष्ठापितम्। तथा हि—यदि मनोऽणु न स्यात्तदा विभिन्नैरिन्द्रियैर्युगपत् तत्संयोगसम्भवेन विभिन्नेन्द्रियाणां युगपत्तत्तदर्थसन्निकर्षसम्भवे विभिन्नेन्द्रियजन्यानां विभिन्नप्रत्यक्षाणां युगपदुत्पत्त्यापत्तिः स्यात्। न हि विभिन्नैरिन्द्रियैरुत्पद्यमानमेकं प्रत्यक्षज्ञानमभ्युपगन्तुं शक्यम्।

चाक्षुषत्वादीनां परस्परसाङ्कर्येण जातित्वभङ्गापत्तेः। एकस्मिन् क्षणे एकात्मन्यनेकेषां ज्ञानानामुत्पत्तिरपि नाभ्युपगन्तुं शक्या योग्यात्मविशेषगुणानां यौगपद्यस्यानुभवविरुद्धत्वात् सिद्धान्तविरुद्धत्वाच्च।

अतो ज्ञानायौगपद्यस्य प्रकारान्तरेणोपपादयितुमशक्यतया मनसोऽणुत्वाभ्युपगम आवश्यकः। सिद्धे मनसोऽणुत्वे नोक्तदोषप्रसक्तसम्भावना तत्तदिन्द्रियजन्यप्रत्यक्षे तत्त-

---

१. अबाह्येन्द्रियनिमित्ताः स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहा मनसो लिङ्गं भवन्ति। अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति। युगपच्च खलु घ्राणादीनां गन्धादीनाञ्च सन्निकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते, तेनानुमीयते, अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि, यस्यासन्निधेर्नोत्पद्यते ज्ञानं सन्निधेश्चोत्पद्यत इति। मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति।" न्या० भा० १।१।१६

दिन्द्रियमनःसंयोगस्य कारणत्वात्। अणोश्च मनसः शरीरस्य विभिन्नभागेष्ववस्थितैस्तत्तदिन्द्रियैर्युगपत्संयोगासम्भवात्।

सुषुप्तौ ज्ञानं नोत्पद्यत इत्येष हि न्यायवैशेषिकसिद्धान्तः।

न च सुषुप्तौ ज्ञानानुदये सुप्तोत्थितस्य 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति स्मरणानुपपत्तिरिति वाच्यम्, उक्तज्ञानस्य सुषुप्तिकालीनदुःखज्ञानाभावयोरनुमितिरूपतया स्मरणरूपत्वस्यासिद्धत्वात्।

अयमाशयः—'सुखमहमस्वाप्सम्' इत्यस्य निर्दुःखमहमस्वाप्समित्यर्थः 'न किञ्चिदवेदिषम्' इत्यस्य च ज्ञानसामान्याभाववानासमित्यर्थः। तथा चोक्तपरामर्शात्मकं ज्ञानं सुषुप्तौ विद्यमानस्य दुःखाभावस्य ज्ञानाभावस्य चानुमितिरूपम्। सुप्तोत्थितस्य पुंसः प्रबोधे सति सुषुप्तिकालिकदुःखज्ञानसामग्र्यभावात्मकेन लिङ्गेन तदानीं विद्यमानं दुःखाभावं ज्ञानाभावञ्च सोऽनुमिनोति। तदेवं निर्विवादमिदं यत्सुषुप्तौ ज्ञानं नोत्पद्यत इति।

परं यदि मनो न स्यात्तदा सुषुप्तिकालेऽपि शय्यादिभिस्त्वगिन्द्रियसन्निकर्षस्य गन्धादिभिर्घ्राणादीनाञ्च सन्निकर्षस्य सत्त्वेन तत्तद्विषयाणां ज्ञानोत्पत्तिः प्रसज्येत।

मनसः स्वीकारे च नेयमापत्तिः सम्भविनी, सुषुप्तिकाले मनसस्त्वचं विहाय पुरीतति नाड्यां प्रवेशात् त्वङ्मनःसंयोगस्य तत्काले असम्भवात्। त्वङ्मनःसंयोगस्य च जन्यज्ञानमात्रं प्रति कारणत्वाभ्युपगमात्।

मनश्चेदं प्रतिशरीरं भिन्नं नित्यमभ्युपेयम्। अन्यथैकस्य मनसः सर्वात्मनामुपकरणत्वाभ्युपगमे भिन्नभिन्नपुरुषाणामेककालिकयोः सुषुप्तिप्रबोधयोरुपपत्तिर्न स्यात्। तदित्थं पृथिव्याद्यष्टद्रव्यातिरिक्तद्रव्यतयाभ्युपगम्यमानमान्तरेन्द्रियरूपं मनः प्राचीनविदुषां सम्मतम्।

परं दीधितिकारो नैतन्मतं सम्मनुते—तन्मते हि मनो भौतिकं द्रव्यम्, नित्यत्वनिरवयवत्वागुत्वानन्त्यादिकं तदीयं तस्याप्यभिमतम्।

तथा हि—दीधितिकृतोऽयमभिप्रायः प्रतिभाति यच्छरीराभ्यन्तरे अणुरूपं तेजोऽणुरूपो वायुर्वाऽवश्यं तिष्ठत्येवातस्तस्यैव मनः कार्यकारित्वोपगमसम्भवेनातिरिक्तद्रव्यरूपस्य मनसोऽभ्युपगमोऽनावश्यको गौरवावहश्च। क्लृप्तपदार्थैर्निवाहसम्भवे नूतनपदार्थकल्पनायां गौरवस्यापरिहार्यत्वात्।

## एतन्मतालोचनम्

मनसः पृथग्द्रव्यत्वानभ्युपगमो दीधितिकारीयः सूक्ष्मतयालोच्यते चेन्न स्तोकमपि सामीचीन्यं धारयितुमर्हति, यतः शरीराभ्यन्तरे पृथिवीजलतेजोवायूनां चतुर्णामिवाणूनां

स्थितिसम्भावनया तेषु कस्य मनस्त्वमभ्युपेयमिति निश्चेतुमशक्यतया सर्वस्यैव तस्य मनोरूपताया अभ्युपगन्तव्यतया ज्ञानयौगपद्यस्य वारयितुमशक्यत्वात् ।

यदि चैवमुच्येत यन्मनो न क्लृप्तद्रव्याणां परमाणुरूपं किन्त्वतिरिक्तमणुरूपं भूतद्रव्यम् । दीधितिकृतो हि न तस्य द्रव्यान्तरत्वे विवादः किन्तु भूतानात्मकत्वे विवादः । भूतत्वञ्च तस्याणुत्वानुमेयम्, न खलु भूतभिन्नं किमपि द्रव्यमणुरूपं प्रोक्तम्, आकाशकालदिगात्मनां विभूनामेवाभ्युपगमात् ।

अतः पृथिव्यादिपरमाणुष्वणुत्वे भूतत्वव्याप्तेर्दृष्टतया ज्ञानायौगपद्यान्यथानुपपत्त्या च मनसोऽणुभावस्यावश्यकतया क्लृप्तहेतुना तत्र भूतत्वानुमानं दुर्निवारम् । तर्हि इदमपि वचनं विमृश्यमानं नौचित्यमञ्चति । भूतत्वस्य विशेषगुणव्याप्यतया मनसो भूतत्वाभ्युपगमे तत्र विशेषगुणवत्त्वस्याप्यापत्तेः । विशेषगुणवत्त्वे चाभ्युपगते विशेषगुणवतोऽणोर्द्रव्यारम्भकत्वनियमेन मनसोऽपि द्रव्यारम्भकत्वमापद्येत । अतो मनसः पृथग्द्रव्यत्वमभ्युपगम्यमानं भूतत्वाभावमादायैव प्रतितिष्ठतीति भूतभिन्नत्वमेव तस्य प्राचीनपण्डितानमतं समीचीनम् ।



## परमाणु-विमर्शः

अब्वायुवह्निपृथिवीपरमाणवोऽत्र
मान्याः सदा निखिललोकललामभूताः ।
तैरेव सृष्टिकमला परिभाति रम्या
तत्रैव नित्यविविधाः कथिता विशेषाः ॥ १ ॥

सिद्धिश्च तेषामनुमानगम्या
बाभान्त्यनन्ताः परमाणवस्ते ।
स्थौल्यं जलादेः क्रमशस्ततश्च
सृष्टिप्रसङ्गे भणितं स्वतन्त्रे ॥ २ ॥

सर्गस्य काले परमात्मयोगे
जीवात्मयोगे परमाणुकर्म ।
कर्मप्रजातो विदितो विभागो
जाते विभागे विहृतः स योगः ॥ ३ ॥

योगे विनष्टेऽभिनवे च योगे
प्राप्नोति सत्त्वं द्व्यणुकं तदैव ।
पश्चात्त्रुटेर्जन्ममहत्त्वपूर्णं
भ्वादेः समस्तस्य ततोऽस्ति जन्म ॥ ४ ॥

स्थूलस्य सत्त्वं परमाणुतो न
साक्षान्नयज्ञाः परिभावयन्ति ।
भङ्गे च तेषां परमाणवो हि
शेषा भवेयुर्न च वाञ्छितास्ते ॥ ५ ॥

भित्तेर्विनाशे खलु खण्डभागा-
स्तस्याः कथं नेत्रगता भवेयुः ।
मान्या न भव्या परमाणुसृष्टिः
साक्षात्समस्ता विफला विधा स्यात् ॥ ६ ॥

उत्पद्यमानस्य कदापि सत्त्वं
स्थौल्यं न तत्त्वस्य तदाक्षयोग्यम् ।
स्थौल्ये तु हेतुः प्रचयश्च संख्या
मान्यं मतिज्ञैः परिमाणवत्त्वम् ॥ ७ ॥

सृष्टिश्च साक्षात्परमाणुजन्या
स्थूला न सा चेत्परिदृश्यमाना ।
इष्टा न संख्या प्रचयो न तत्र
क्लृप्तं महत्त्वं दधते न सत्त्वम् ॥ ८ ॥

प्रत्यक्षताया नितरामभावः
सूक्ष्मत्वसत्त्वे जगतो विभूतेः ।
उत्पत्तिपक्षस्त्र्यणुकस्य मान्यो
युक्तस्ततो योगविशेषसत्त्वे ॥ ९ ॥

सृष्टावणुर्यो व्यवहारभाव-
स्तेनापि तेषां परिकल्पना न ।
सिद्धिस्तु तस्याप्यपकर्षजन्या
मान्या च नान्या परमाणुसत्ता ॥१०॥

सिद्धं न तत्त्वं द्व्यणुकं कदापि
सिद्धा न सिद्धिः परमाणुभूतेः ।
ब्रूते रघुस्तर्ककरालकाण्डः
पौरस्त्यलीलामवहेल्य सूरिः ॥११॥

अंशप्रवाहो रमते तु यत्र
त्रुटिः समग्रैव निरंशभूता ।
स्थूला च सृष्टिस्तत एव सिद्धा
कल्प्या न काचित्परमाणुसत्ता ॥१२॥

तस्या अभावे द्व्यणुकस्य सत्त्वं
प्राचां प्रवादो न च तत्र तथ्यम् ।
सृष्टिर्नवीना द्व्यणुकस्य नास्ति
चिन्ता तदीयेति न भाति सार्था ॥१३॥

महत्तमे मानधरे महत्तरे
तथा महत्यप्यणुभावकीर्त्तनम् ।
क्रमेण सर्वत्र विदन्ति तार्किकाः
कथापकर्षस्य विधा न चापरा ॥१४॥

तत्त्वापकर्षस्य च तत्त्वभूते
मान्या न चान्याणुकथा कुतर्का ।
प्राचामुपेक्षां नितरां चकार
मान्यो मनीषी रघुनाथसूरिः ॥१५॥

तयोर्महत्तामनुमानमान्यां
विदन्ति चाज्ञाः सबला न विज्ञाः ।
दृढानुकूले रहिते तु तर्के
न हेतुना सिद्धयति साध्यभूमिः ॥१६॥

त्रुटिश्च तादृक् सुमहत्त्विका चेत्
तदागता द्रव्यसुसर्जिका न ।
यथा भवो द्रव्यसुसर्जको न
विपत्तिरत्रापि च सैव बोध्या ॥१७॥

न मानगीतिः परिमाणवत्त्वे
भवस्य विज्ञैः परिभाविता या ।
अतो न सा कापि विपत्तिरेखा
बुधैः प्रकाण्डैः परितर्किता या ॥१८॥

व्याप्तेरभावे सबलो न कोऽपि
दृष्टान्तलेशो निजसाध्यसिद्धचै ।
शङ्का न कार्या विपरीततर्का
मान्या ततः सा रघुणाप्यगत्या ॥१९॥



## परमाणुविषये दीधितिकृन्मतविमर्शः

न्यायवैशेषिकनये परमाणवो विविधाः, पृथिवीपरमाणवो जलपरमाणवस्तेजःपरमाणवो वायुपरमाणवश्च, सर्व एव इमे अनन्ता नित्या निरवयवाः। एषु सर्वेषु-प्रतिव्यक्तिविभिन्नो विशेषपदार्थस्तिष्ठति, यद्वशादेषु प्रत्येकं सजातीयेतरभेद उपपद्यते। विशेषश्च स्वतो व्यावृत्त इति न तेषामन्योन्यव्यावृत्तये विशेषान्तरकल्पनाप्रयुक्तानवस्थाप्रसङ्गः।

किञ्च स्वतोऽव्यावृत्तत्वञ्च विशेषाणां स्वभिन्नलिङ्गकस्वविशेष्यकस्वसजातीयेतरभेदानुमितिविषयो यो यस्तदन्यत्वम्। विशेषसिद्धिश्चानुमानसाध्या। तथा हि—परमाणुभेदः किञ्चिल्लिङ्गज्ञाप्यो भेदत्वात्, घटादिभेदवदनेनानुमानेनावयवविशेषगुणजात्यादिविशेषलिङ्गज्ञाप्यत्वबाधसहकृतेन तन्निखिलातिरिक्तलिङ्गज्ञाप्यत्वं साध्यते। तच्च लिङ्गं विशेषपदेन व्यपदिश्यते।

तदेवं विशेषपदार्थेन विशेषितानां समानजातीयपरमाणूनां मिथः संयोगेन द्व्यणुकादिक्रमेण स्थूलस्य द्रव्यजातस्योत्पत्तिः सिद्ध्यति। तत्रायं क्रमः—

सर्गारम्भे प्रयत्नवत्परमात्मसंयोगेनादृष्टवदात्मसंयोगेन च परमाणोः पूर्वसर्गप्रलयावसाने द्व्यणुकारम्भकसंयोगानुगुणा क्रिया जायते। अतः पूर्वदेशाद् विभक्तस्य तस्य सजातीयेन परमाण्वन्तरेण संयोगो जायते। एष संयोगः परमाण्वोर्निरवयवतयावयवानवच्छिन्नोऽपि दिग्विशेषावच्छिन्नो जायते। दिग्विशेषश्च परमाण्वोर्नानुपन्नो मूर्त्ततया परमाणोरेव दिगुपाधित्वसम्भवात्।

अयमाशयः—प्रलयकाले किल परमाणवोऽनारम्भकसंयोगजनकेन कर्मणा परस्परं वियुञ्जानाः संयुञ्जानाश्च सर्वासु दिक्षु परिभ्रमन्तीति तदानीमनेकेषां परमाणूनामनारम्भकः संयोगो जायत इति तदा परमाणोरनवयवभूता अपि अनारम्भकसंयोगविशिष्टा अनेके परमाणवो भवन्तीति तदापि केनचित् परमाणुनावच्छिन्ना दिक् प्राची केनचिदवच्छिन्ना दिक् प्रतीची, केनचिदवच्छिन्ना दिगुदीची, केनचिच्चावच्छिन्ना दिगवाची भवति।

तदेवं निरवयवस्य परमाणोरपि दिग्भेदस्योपपत्त्या तत्र दिग्भेदावच्छिन्नः परमाण्वन्तरसंयोगो निर्बाधं सूपपादः। तथा च दिगवच्छिन्नेन परमाणुद्वयसंयोगेन

द्व्यणुकमुत्पद्यते। अथवा परमाणोर्निरवयवतया माभूत्तस्य दिग्भेदसम्भवः किन्तु दिक्कृतविशेषणतासम्बन्धेन तद्वैशिष्ट्यं महादिशि निर्बाधमेवेति। एकत्र परमाणौ जायमानस्य परमाण्वन्तरसंयोगस्य संयुज्यमानपरमाणुविशिष्टमहादिगुपदिग्विशेषावच्छिन्नत्वं भवितुमर्हत्येव। अतः संयोगत्वावच्छेदेन कालभिन्नावच्छेद्यत्वनियमेऽपि द्वयोः परमाण्वोः कालभिन्नदिगवच्छिन्नः संयोगः सम्भवति।

तदेवं क्रमेणानेकेषां द्व्यणुकानामुत्पत्तिसम्भवेन त्रयाणां द्व्यणुकानां संयोगेन त्र्यणुकमुत्पद्यते यत्त्रुटिशब्देन त्रसरेणुशब्देन च व्यपदिश्यते। उत्पन्नेषु च त्र्यणुकेषु तेषां मिथः संयोगतश्चतुरणुकादिक्रमेण स्थूलद्रव्यजातमुत्पद्यते। तत्र त्रयाणां चतुर्णां पञ्चानां षण्णां वा परमाणूनां संयोगेन किमपि द्रव्यं नोत्पादयितुं शक्यते।

यतो हि परमाणुभिः साक्षात्स्थूलद्रव्योत्पादाभ्युपगमे तद्भङ्गे सति परमाणव एवावशिष्येरन्निति भग्नभित्त्यादेः खण्डभागाः प्रत्यक्षा न स्युः।

किञ्च परमाणुभिः साक्षात्स्थूलद्रव्योत्पत्तेः स्वीकारे उत्पद्यमानस्य द्रव्यस्य स्थौल्यं न स्याद् यतो हि द्रव्यस्य स्थौल्यं महत्परिमाणरूपं तच्च कारणत्रयादुत्पद्यते। अवयवगतमहत्परिमाणतः सावयवावयवगतसंख्यातः, अवयवानां प्रचयाख्यसंयोगतश्च।

यदि परमाणवः साक्षात्स्थूलद्रव्यमारभेरन् तदा परमाणुषु महत्त्वाभावात् सावयवगतसंख्याया अभावात् प्रचयाख्यसंयोगाभावाच्चोत्पद्यमाने द्रव्ये महत्त्वं नैवोत्पद्येत इति सर्वस्य जगतः प्रत्यक्षत्वं व्याहन्येत। अतोऽयमेव क्रमो युक्तिसम्मतो यद् द्वयोः परमाण्वोः संयोगाद् द्व्यणुकस्य त्रयाणां द्व्यणुकानां संयोगाच्च त्र्यणुकस्योत्पत्तिर्जायते।

परं[१] दीधितिकृतो मतमिदं नानुमोदयन्ति, तेषां हि अवयवधाराया विश्रामः त्रसरेणावेव सम्मतः, त्रसरेणुश्च चाक्षुषप्रत्यक्षसिद्ध इति स्थूले त्रसरेणावेव निरवयवत्वकल्पनायाः सम्भवेन ततः परं द्व्यणुकानां परमाणूनाञ्च कल्पनाऽनावश्यकी।

अणुव्यवहारानुरोधेनापि अणूनां कल्पना न कर्त्तुं शक्यते। व्यवहारस्यापकृष्टपरिमाणविषयकतयापि निर्वाहसम्भवात्। अत एव महत्तमापेक्षया महत्तरे महत्तरापेक्षया च महत्यपि अणुव्यवहार उपपद्यते।

---

१–परमाणुद्व्यणुकयोश्च मानाभावः त्रुटावेव विश्रामात्। त्रुटिः समवेता चाक्षुषद्रव्यत्वाद् घटवत्, ते च समवायिनः समवेताः, चाक्षुषद्रव्यसमवायित्वादिति चाप्रयोजकम्। अन्यथा तादृशसमवायिसमवायित्वादिभिरनवस्थिततत्समवायिपरम्परासिद्धिप्रसङ्गात्। अणुव्यवहारश्चापकृष्टपरिमाणनिबन्धनो महत्यपि महत्तमादणुव्यवहारात्। पदार्थतत्त्वनिरूपणे पृ० सं० ११-१५॥

त्रसरेणवः सावयवाश्चाक्षुषद्रव्यत्वाद् घटादिवत्, त्रसरेणोरवयवा अपि सावयवाश्चाक्षुषद्रव्यसमवायित्वात् कपालवदित्यनुमानाभ्यां क्रमेण द्व्यणुकस्य परमाणोश्च सिद्धिर्नाशङ्कितुं शक्या, चाक्षुषद्रव्यत्वे चाक्षुषद्रव्यसमवायित्वे च सावयवत्वव्याप्तेरप्रयोजकत्वात्, अन्यथा चाक्षुषद्रव्यसमवायिसमवायित्वहेतुभिरनवस्थिततदवयवपरम्परासिद्धिप्रसङ्गात्।

न च त्रुटेर्नित्यमहत्परिमाणवत्त्वे ईश्वर इव तत्रापि द्रव्यानारम्भकत्वापत्तिरिति वाच्यमीश्वरस्य परिमाणवत्त्वे मानाभावेन यो यो नित्यमहत्परिमाणवान् स द्रव्यानारम्भक इति व्याप्तेर्दृष्टान्ताभावेनासम्भवापत्तेः।

न च द्रव्यत्वेनेश्वरेऽप्यानुमानिकी परिमाणसिद्धिः सम्भवत्येवेतीश्वरस्य निष्परिमाणत्वकथनमसङ्गतमिति वाच्यम्, द्रव्यत्वे त्रुटित्वादेरिव परिमाणस्यापि व्याप्तेरसिद्धतया ततस्त्रुटित्वादेरिव परिमाणस्यापि साधनासम्भवात्।

न च द्रव्यत्वस्यापरिमितावृत्तित्वनियमेन परिमाणव्याप्यताया अनिवार्यतया तत ईश्वरे परिमाणसिद्धिर्दुर्निवारेति वाच्यम्, द्रव्यत्वे अपरिमितावृत्तित्वस्यासिद्धत्वेन ईश्वरे परिमाणानभ्युपगमेऽपि द्रव्यत्वाभ्युपगमे बाधकाभावात्।

न चेश्वरस्य निष्परिमाणत्वे सर्वमूर्त्तद्रव्यसंयोगित्वलक्षणविभुत्वं न स्यादिति वाच्यम्, संयोगोत्पत्तौ परिमाणस्याप्रयोजकत्वात् संयोगं प्रति द्रव्यत्वेन कारणतया परिमाणहीने गुणादौ तदुत्पत्तेरापत्त्यसम्भवात्।

ननु यदीश्वरो निष्परिमाणस्तदा स नूनं समग्रे भुवने विततेभ्यो मूर्त्तद्रव्येभ्यो विप्रकृष्ट इति तस्य सर्वैर्मूर्त्तद्रव्यैः संयोगो न स्यादिति वाच्यम्, अपकृष्टपरिमाणस्यैव विप्रकर्षप्रयोजकतया तद्रहिते ईश्वरे तत्प्रयोज्यस्य विप्रकर्षस्यासम्भवात्।

न चापकृष्टपरिमाणस्य विप्रकर्षप्रयोजकत्वे एकद्रव्यतो दूरस्थद्रव्यगतगुणादीनाम् अपकृष्टपरिमाणशून्यतया विप्रकर्षो न स्यादिति शङ्कितुं शक्यं तदीयविप्रकर्षस्याश्रयगतेनापकृष्टपरिमाणेनैव सम्भवात्। अपकृष्टपरिमाणं हि—स्वाश्रयत्व-स्वाश्रयाश्रितत्वान्यतरसम्बन्धेन विप्रकर्षस्य प्रयोजकमिति स्वीकारे बाधकाभावात्।

किञ्च त्रुटेः सावयवत्वं रूपादीनामिन्द्रियग्रहणायोग्यत्वापत्त्यापि परिहृतं भवति। तथा हि—त्रुटिर्यदि सावयवा भवेत्तदा महदाश्रितस्यैव रूपादेः प्रत्यक्षत्वनियमेनामहत्सु तदवयवेषु विद्यमानानां रूपादीनामिन्द्रियग्रहणायोग्यत्वमवश्यं मन्तव्यं स्यात्, तथाभ्युपगमे च 'वायुप्रभृतौ रूपादिकं नास्ति' इत्येवमाकारं लौकिकं प्रत्यक्षं नोपपद्येत, तत्प्रतीतिसिद्धस्य रूपाद्यभावस्य त्रुट्यवयवगतातीन्द्रियरूपप्रतियोगिकतया प्रत्यक्षत्वस्य दुर्घटत्वात्। सामान्याभावप्रत्यक्षत्वस्य यावत्प्रतियोगिप्रत्यक्षयोग्यताधीनत्वात्।

ननु त्रुटेः स्पार्शनप्रत्यक्षन्न भवतीति तदीयस्पर्शस्यातीन्द्रियत्वमवश्यमभ्युपेयं तत्र स्पर्शानङ्गीकारे च स्पर्शवद् द्रव्यस्यैव द्रव्यसमवायिकारणत्वेन ततश्चतुरणुकादीनामुत्पत्तिर्न स्यात्, एवञ्च यथा स्पर्शसामान्याभावस्यातीन्द्रियप्रतियोगिकत्वेऽपि आत्मनि तत्प्रत्यक्षं भवति तथैवातीन्द्रियरूपाभ्युपगमेऽपि वायुप्रभृतौ रूपसामान्यप्रत्यक्षं भवितुमर्हतीति तत्प्रत्यक्षत्वानुपपत्तिरुक्तरीत्या त्रुटेः सावयवत्वे बाधिका न भवितुमर्हतीति चेन्न, त्रुटेः स्पर्शशून्यत्वाभ्युपगमेनोक्तदोषाभावात्। तत्र स्पर्शानभ्युपगमे ततो द्रव्यारम्भो न स्यादिति तु न शङ्क्यं मूर्त्तत्वेनैव द्रव्यारम्भकत्वाभ्युपगमे दोषाभावात्।

ननु मूर्त्तत्वम् अपकृष्टपरिमाणवत्त्वमेवं वक्तव्यमिति ईश्वरे आत्मनि च परममहत्परिमाणाभ्युपगम आवश्यकोऽन्यथा पर्वतादीनां परिमाणे अपकृष्टत्वस्य वक्तुमशक्यतया तेषां मूर्त्तत्वन्न स्यादिति चेन्न, मूर्त्तत्वस्य जातित्वाभ्युपगमेनापकृष्टपरिमाणरूपत्वानङ्गीकारात्। जातित्वञ्च तस्य स्पन्दसमवायिकारणतावच्छेदकतया सिद्धयति। तथा हि–

त्रुटिप्रभृतिद्रव्येषु विद्यमाना स्पन्दसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात्, कपालनिष्ठघटनिरूपितकारणतावत्; अनेनानुमानेनोक्तकारणताया जात्यवच्छिन्नत्वे लाघवमिति तर्कसहकृतेन जातिबाधकासहकृतेन वोक्तकारणताया जात्यवच्छिन्नत्वं सिद्धयति, सैव जातिर्मूर्त्तत्वशब्देन व्यपदिश्यते।

ननु पृथिवीजलतेजोवायव ईश्वर आत्मा चेति षण्णां द्रव्याणामेव स्वीकारपक्षे भूतत्वं पृथिव्यादिचतुर्द्रव्यमात्रनिष्ठमेवातो द्रव्यसमवायिकारणताया अवच्छेदकं मूर्त्तत्वं भूतत्वं वेत्यत्र विनिगमनाविरहापत्त्योभयरूपेण स्पन्दसमवायिकारणता मन्तव्या स्यादिति तदवच्छेदकतया मूर्त्तत्वसिद्धिर्दुर्घटेति चेन्न, घटत्वकलशत्वयोरिव भूतत्वमूर्त्तत्वयोः परस्परभिन्नजातित्वानङ्गीकारेण दोषाभावात्।

ननु त्रुटेर्यत्स्पर्शशून्यत्वमुक्तं तन्न युज्यते तस्याः स्पर्शशून्यत्वे ततो जायमानेषु चतुरणुकादिद्रव्येषु स्पर्शानुत्पत्तिप्रसङ्गादिति चेन्न, स्पर्शं प्रत्यपि मूर्त्तत्वेन कारणताया अभ्युपगमेन अवयवेषु स्पर्शाभावेऽपि अयवविद्रव्ये स्पर्शोत्पत्तिसम्भवात्।

नन्वेवं भूतमूर्त्तपदयोः पर्यायतया मूर्त्तं भूतमिति सह प्रयोगो न स्यादिति चेन्नोक्तपदयोरेकतरपदस्य तत्पदवाच्यत्वावच्छिन्नपरत्वाभ्युपगमेन तदुपपत्तिसम्भवात्।

ननु मूर्त्तत्वेन स्पर्शकारणत्वाभ्युपगमे प्रभायां चक्षुरादिषु च स्पर्शस्योत्पत्त्या तस्य चातीन्द्रियतया स्पर्शाभावस्यातीन्द्रियप्रतियोगिकत्वेनात्मादौ तत्प्रत्यक्षं न स्यात्। एवं चक्षुरादिरूपस्यातीन्द्रियतया वायुप्रभृतौ रूपसामान्याभावप्रत्यक्षमपि न स्यादिति चेन्न प्रभाचक्षुरादौ स्पर्शादेः करकायां द्रवत्वस्येवादृष्टवशेनोत्पत्तिप्रतिबन्धसम्भवेनोक्तदोषाभावात्।

ननु चक्षुरादौ रूपाद्यनभ्युपगमे रूपादिग्राहकत्वन्न स्यात्, स्वगतगुणसजातीयगुणग्राहकताया एव बहिरिन्द्रियेषु नियमादिति चेन्न, चक्षुरादावतीन्द्रियरूपादेरभ्युपगमेऽपि दोषाभावात् ।

अभावप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टयत्किञ्चित्प्रतियोगियोग्यताया एव प्रयोजकत्वाभ्युपगमेन सामान्याभावप्रत्यक्षसम्भवात् । एवं प्रभाचक्षुरादौ स्पर्शरूपाद्युत्पत्तिं प्रत्यदृष्टस्य प्रतिबन्धकत्वकल्पनाऽपि नावश्यकी ।

अत इन्द्रियग्रहणयोग्यानि रूपादीनि न सन्तीति दीधितिकृन्मतं समीचीनं न प्रतिभाति ।



## पृथक्त्वविमर्शः

अभाववुद्धौ सकलेष्टसिद्धौ
पृथक्त्वबुद्धेर्न गुणान्तरत्वम् ।
पृथग्विभिन्नावितरान्यशब्दौ
एकार्थकास्तत्र न भाति भेदः ॥१॥

यथेतरादेर्वचनस्य योगे
विभाति पञ्चम्यभिधेयतत्त्वम् ।
तथैव नान्यत्पृथगादियोगे
बुधेन केनापि विचाल्यमानम् ॥२॥

प्रपञ्चभेदोऽपि गुणान्तरस्य
पृथक्त्वनाम्नो न विभाति मान्यः ।
अभाववुद्धेः सकलः प्रपञ्चो
विभाति सर्वत्र विधां दधानः ॥३॥

विमृश्यमाना रघुनाथगाथा
पृथक्त्वबुद्धेर्हसनीययोग्या ।
पृथक्पदं चेदितरार्थकं च
घटः पृथग् वस्त्रमिति प्रयोगः ॥४॥

विपत्तिरेखा समुदेति तत्र
निरासरेखा धवला न यत्र ।
अतो रघूक्तिर्न कदापि सेव्या
पथो नवीनोऽतिविगर्हणीयः ॥५॥

एकार्थकत्वे न च भाति दोषो
मान्या तथा नापि रघूक्तिरेषा ।
भिन्नार्थकत्वे सहजं निमित्तं
भेदस्तु बोध्यो गुरुता तथा च ॥६॥

अभावरूपं किल चेत्पृथक्त्वं
विशेषसंशीतिकथा कथं स्यात् ।
अतः पृथक्त्वस्य गुणान्तरत्वं
बुधोपदिष्टं नितरां प्रशस्तम् ॥७॥

यतश्च तत्र प्रतिबन्धकत्वे
घटात्पृथक् प्रत्ययमान्यमूर्त्तेः ।
घटो न वा संशयवारिधारा
पवित्रकूला वितथा तदानीम् ॥८॥

बुधैः पृथक्त्वस्य गुणान्तरत्वं
नये यदुक्तं विमलं तदेव ।
मतं विरुद्धं रघुनाथसूरे-
र्विगर्हितं वक्ति निबन्धवाणी ॥९॥

प्राचां विचारसरणी रमणीयभावा
दृष्ट्वा च तां मतिमतां मुनयो ब्रुवन्ति
तत्रैव दृष्टिरपरत्र वृथा न देया
त्यक्त्वा मणिं न सुकृती मृतिकां चिनोति ॥१०॥



## पृथक्त्वस्य गुणान्तरत्वनिषेधालोचनम्

दीधितिकारः[१] पृथक्त्वस्य गुणान्तरत्वन्न स्वीकरोति। तन्मते घटः पटात्पृथगित्यादिव्यवहारा अन्योन्याभावमुपजीवयन्ति। घटात्पटः पृथक्, इतरोऽन्यो भिन्न अर्थान्तरमित्यत्र पृथक्प्रभृतयः सर्वे शब्दाः पर्याया अतो यथेतरादिशब्दयोगे पञ्चम्याः प्रतियोगिकत्वार्थकत्वं तथा पृथक्पदयोगेऽपि, न हि पृथक्पदयुक्ताया पञ्चम्या अवधित्वार्थकत्वे किमपि मानम्।

अतः पृथक्प्रत्ययस्यासाधारणकारणभूतो गुणः पृथक्त्वम्, तद् द्विविधं नित्यमनित्यञ्च। नित्येषु विद्यमानं पृथक्त्वं नित्यम्, अनित्येषु विद्यमानमनित्यञ्च।

एकपृथक्त्वमव्यासज्यवृत्ति द्विपृथक्त्वादिकञ्च व्यासज्यवृत्ति अपेक्षाबुद्धिजन्यञ्चेत्यादिकः पृथक्त्वविषयकः प्रपञ्चोऽयौक्तिकस्तस्यान्योन्याभावरूपतया सर्वथैव नित्यत्वेनोक्तप्रपञ्चासम्भवात्।

परं दीधितिकृन्मतमिदं विमृश्यमानं समीचीनं न प्रतिभाति, तथा हि-पृथक्पदं यदि नञ्समानार्थकं स्यात्तदा घटो न पट इतिवद् घटः पृथक्पट इत्येषोऽपि व्यवहारः प्रामाणिकः स्यान्न तु घटात्पृथक् पट इत्येव।

यदि च पृथक्पदमितरादिपदसमानार्थकं स्यात्तदा दोषान्तराभावेऽपि तदभ्युपगमे गौरवदोषो दुर्वारो यतो यदि पृथक्पदमितरार्थकं तदा तत्प्रवृत्तिनिमित्तत्वं भेदस्यैवाभ्युपेयं भवेत्। भेदत्वञ्च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। तादात्म्यञ्च स्वप्रतियोगिवृत्ति-स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टान्यो धर्मः। एवञ्चोक्तसम्बन्धाभ्यां भेदविशिष्टान्यधर्मनिष्ठसम्बन्धानवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वेन भेदस्य तत्प्रवृत्तिनिमित्तत्वे महदेव गौरवम्।

पृथक्त्वं यदि गुणस्तदा तस्य पृथक्त्वत्वजातिपुरस्कारेण पृथक्पदप्रवृत्तिनिमित्तत्वे लाघवम्। किञ्च पृथक्त्वं यदि अन्योन्याभावरूपं भवेत्तदा अयं घटात्पृथगिति प्रत्ययानन्तरमयं घटो न वेति संशयो न स्यादुक्तप्रत्ययस्य भेदग्राहिनिश्चयत्वेनोक्तसंशयं प्रति प्रतिबन्धकत्वादतः पृथक्त्वस्य गुणान्तरत्वमेवोचितम्।

---

१—पृथक्त्वमपि न गुणान्तरम्। अन्योन्याभावादेव पृथक्त्वव्यवहारोपपत्तेः। पृथक्त्वप्रतीतिस्तु न सावधित्वावलम्बना मानाभावात्। घटात्पटः पृथग् इतरोऽन्यो भिन्नोऽर्थान्तरमित्यादौ च तत्तच्छब्दविशेषप्रयोगे पञ्चम्यानुशासनकी। पृ० सं०

## विशेषपदार्थविमर्शः

निःशेषनित्येषु विभासमाना
बोध्या विशेषाः समवेतभावाः ।
अन्त्या अनन्ताः कथिताश्च नित्या-
स्ते भेदका भेदकतामवाप्ताः ॥१॥

व्यावर्त्तका नित्यकदम्बकानां
मिथो विरुद्धा नयशास्त्रसाराः ।
व्यावृत्तिरेषां परतो न बोध्या
स्वतस्तु बोध्यां वदतीति शास्त्रम् ॥२॥

गोमांससम्पर्कविषं समेत्य
पूतान्यपूतानि यथा भवन्ति ।
गोमांसगाथा न तथा विभाति
तस्याप्यपूतत्वकथा स्वतो हि ॥३॥

विशेषभिन्नाः सकलाः पदार्थाः
स्वतो न भिन्नाः परतस्तु भिन्नाः ।
परं विशेषा स्वत एव भिन्ना
न तत्र भेदे परतस्त्वहेतुः ॥४॥

अणौ न भेदः परतः प्रशस्तो
बुधैः प्रबोध्यः स्वत एव भेदः ।
विशेषचिन्ता न कदापि कार्या
नवः पदार्थो भुवने न शेषः ॥५॥

अणुविशेषकथा चलिता कदा
मतिमतां मतिदा भणिता भुवि ।
अभिनवा गुरुताविषवर्धिका
न परमाणुपरस्परभेदिका ॥६॥

बाधा न बोध्या परमाणुभेदे
भेदः स्वतस्तत्र विचारणीयः ।
दृष्टिर्न सा गौरवदेति मान्या
हेयो विशेषोऽभिनवः पदार्थः ॥७॥

रघूक्तिरेषा विजयाय कल्प्या
मनोरमा भाति न भव्यभावा ।
प्रमाणवाग्बाधकतामुपैति
स्वतो न भिन्ना परमाणुसत्ता ॥८॥

स्वतो विशेषा विविधा विभान्ति
स्वतस्त्वरेखा सबला च तेषाम् ।
अवरोधतत्त्वा प्रबला न बाधा
न वा प्रमाणं विपरीतबोधम् ॥९॥

न वानुमा भाति विगीतबोधा
न वास्ति बाधा विपरीततर्का ।
पथः प्रशस्तो नयचिन्तकानां
कलङ्कपौरस्त्यकथा न बोध्या ॥१०॥

अभ्यर्हणीया विदुषां सुनीति-
र्विगर्हणीया च रघूक्तिरेषा ।
शेषा विशेषाः परिकल्पनीया
यतश्च सिद्धाः परमाणुभेदाः ॥११॥



## विशेषस्य पदार्थान्तरत्वप्रतिषेधपर्यालोचनम्

वैशेषिकदर्शने विशेषो निःश्रेयसोपयोगितत्त्वज्ञानविषयभूतपदार्थप्रतिपादनपरे सूत्रे पञ्चमपदार्थतया निर्दिष्टः। स चान्त्यो नित्यद्रव्यसमवेतश्च. अन्ते भवोऽन्त्य इति व्युत्पत्त्या अन्त्यशब्देनावसाने वर्तमानत्वं बोध्यते, अवसानपदञ्च ससम्बन्धिकमिति कस्यावसाने इत्याकाङ्क्षायां भेदकानामवसान इति योग्यतया लभ्यते तथा चान्त्यत्वं नाम भेदकाभावे वर्तमानत्वरूपं पर्यवस्यति।

भेदकानामवसाने वर्तमानत्वञ्च—स्वातिरिक्तभेदकनिरपेक्षमिथोभेदकत्वम्, इदमेव स्वतो व्यावृत्तत्वशब्देनाभिधीयते। तच्च स्वविशेष्यकस्वभिन्नलिङ्गकस्वसजातीयेतरभेदानुमितिविषयो यो यस्तदन्यत्वरूपम्। साजात्यञ्च पदार्थविभाजकोपाधिरूपेण, घटादयो हि स्वविशेष्यिकायाः स्वभिन्नस्वावयवलिङ्गिकायाः स्वसजातीयेतरभेदानुमितिविषया एव भवन्ति, परं विशेषो नैवं भवति, यतो हि—सजातीयपरमाणूनां परस्परभेदकत्वेन विशेषोऽनुमीयते, यद्येकजातीयनानापरमाणुगता विशेषा अपि मिथो भिन्नत्वाद् भेदकान्तरमपेक्षेरन् तदा तथैव तेषामपि भेदकान्तरापेक्षतयानवस्था स्यादतो विशेषोऽन्तिमो भेदकः। प्रशस्तपादभाष्ये तस्य स्वतो व्यावृत्तत्वम् मांसस्य नैसर्गिकापावित्र्यदृष्टान्तेन समर्थितम्।

एषामयमाशयः—यद् यथा गोमांसादिसम्पर्केणान्यानि वस्तून्यपवित्राणि भवन्ति, परन्तु गोमांसं न मांसान्तरसंसर्गापेक्षया अपवित्रं किन्तु स्वत एव तदपवित्रम्, तथैव विशेषभिन्नाः पदार्था भेदकान्तरवशाद् भिद्यन्ते परं विशेषः स्वत एव भिद्यते। अयञ्च विशेषः परमाणुप्रभृतिसजातीयद्रव्येषु परस्परभेदसिद्धये कल्प्यते, किन्तु महाकाले महादिशि आकाशे च क्रमेण कार्यसामान्यकारणतावच्छेदकतया शब्दसमवायिकारणतावच्छेदकतया चाभ्युपेयते।

ननु कालत्वं दिक्त्वञ्चैव कार्यसामान्यकारणतावच्छेदकं भवितुमर्हतीति तत्र तदुत्पत्तये विशेषकल्पनमनावश्यकमिति चेन्न, कालदिशोः समानगुणकतया गुणद्वारेण तयोर्मिथो व्यावृत्तेर्दुर्घटतया तयोरपि परस्परव्यावृत्तिसिद्ध्यर्थमेव तत्रापि विशेषकल्पनाया न्याय्यत्वात्।

आकाशे च यदि स न कल्प्येत तदा तत्र शब्दसमवायिकारणतावच्छेदकं नोपपद्येत, समवायेन शब्दवत्त्वरूपतया कार्यस्य कारणतानवच्छेदकत्वनियमेन च तस्य शब्दसमवायिकारणतावच्छेदकत्वानुपपत्तेः।

[1]परं मतमिदं दीधितिकृतो नाभिमतम् । तस्यायमाशयः :—यद् यथा सजातीयपरमाणुगतानां विशेषाणां स्वतो व्यावृत्तत्वं मन्यते तथैव सजातीयपरमाणूनामेव स्वतो व्यावृत्तत्वाऽभ्युपगमे किमपि बाधकं नास्ति ।

न च परमाणवो जातिमत्तया स्वतो व्यावृत्ता न भवितुमर्हन्ति, जातिमतां स्वभिन्नलिङ्गकसजातीयभेदानुमितिविषयत्वनियमादिति वाच्यं जातिमत्त्वे स्वभिन्नलिङ्गकसजातीयभेदानुमितिविषयत्वनियमस्याप्रयोजकत्वात् ।

विशेषभिन्नानां जातिशून्यानापि समवायाभावप्रभृतीनां स्वभिन्नलिङ्गकानुमितिविषयत्वदर्शनेन जातिशून्यानामपि तादृशामनुमितिविषयत्वनियममभ्युपेत्य विशेषस्यापि स्वतो व्यावृत्तत्वनिराकरणसम्भवात् ।

परं दीधिकृतो मतमिदं सूक्ष्मेक्षिकया पर्यालोच्यते चेत्समीचीनं भवितुं नार्हति । तथा हि—सजातीयाः परमाणवो न स्वतो व्यावृत्ता द्रव्यत्वात् सम्प्रतिपन्नद्रव्यवदित्यनुमानेन तेषां स्वतो व्यावृत्तत्वकल्पनाया बाधात् ।

विशेषा न स्वतो व्यावृत्ता जातिशून्यत्वादभाववदित्यनुमानेन तेषां स्वतो व्यावृत्तत्वकल्पना बाधितुं शक्योक्तानुमानस्य विशेषस्य सिद्ध्यसिद्धिभ्यां व्याहतत्वात् । तथा हि—

विशेषो यदि सिद्धस्तदा धर्मिग्राहकप्रमाणेन तस्य स्वतो व्यावृत्तत्वेनैव सिद्धतया विशेषसाधकप्रमाणनैवोक्तानुमानस्य बाधात्। यदि च विशेषो न सिद्धस्तदाश्रयासिद्ध्यैवोक्तानुमानस्य बाधात् ।



---

[1]—विशेषोऽपि च न पदार्थान्तरं मानाभावात् । विनापि व्यावर्त्तकं धर्मं परेषां विशेषाणामिव नित्यानां द्रव्याणामपि स्वत एव व्यवर्त्तकत्वात् । योगिनोऽतिरिक्तं विशेषमीक्षन्ते । एवं तर्हि त एव सशपथं पृच्छ्यन्तां किमेतेऽतिरिक्तं विशेषमीक्षन्ते न वेति । पदार्थतत्त्वनिरूपणे पृ० सं० ३०-३१ ।

# रूपादेर्व्याप्याव्याप्यवृत्तित्वचर्चा

नाव्याप्यवृत्तीति मतं नयस्य
वैशेषिकस्यापि मतं तदेव ।
रूपादिकं द्रव्यचयं व्यनक्ति
मान्या मतिर्भाति तयोः सतर्का ॥ १ ॥

अव्याप्यवृत्तिप्रचुरा प्रवक्ति
तत्रापि गीः पार्थिवभव्यरूपम् ।
पाकाच्च रक्तं परिभाति भव्यं
पूर्वं ततो भाति घटेऽत्र नीलम् ॥ २ ॥

चित्रे घटे रूपविचित्रभूतिं
दृष्ट्वा रघुर्वक्ति विचित्रमार्गम् ।
शास्त्रस्य सिद्धान्तविरुद्धताया-
श्चिन्तां न चक्रे धृतनव्यचक्रः ॥ ३ ॥

अन्तःस्थरूपं प्रकटं च नीलं
पक्वे घटे बाह्यविशेषरूपम् ।
भग्ने घटे वर्णकदम्बभूतिं
पश्यन् रघुर्भिन्नमतिर्ब्रवीति ॥ ४ ॥

देशस्य कालस्य च भेदबुद्धिं
त्यक्त्वा मतं भाति समानमेव ।
अव्याप्यवृत्तित्वकथैव मान्या
सर्वत्र रूपस्य तथैव भूतिः ॥ ५ ॥

रूपाणि नाना परिकल्पितानि
न चित्रताभाञ्जि विदन्ति सन्तः ।
नाभाति बुद्धौ सुधियामतर्का
रघूक्तिरेषा सबला सतर्का ॥ ६ ॥

तत्प्रागभावे गुरुता स्फुटैव
तद्ध्वंसभव्येऽपि विभाति सैव ।
दोषो बलीयान् सुमतस्य तर्के
रूपस्य नानात्वकथाप्रयुक्तः ॥ ७ ॥

नीलस्य नीलं जनकं मतं चे-
च्चित्रस्य नैकं जनकं प्रसिद्धम् ।
सामान्यरूपं जनकं न तस्य
नातश्चरित्रं वितथं विदन्ति ॥ ८ ॥

अंशस्थरूपाणि विभान्ति नाना
तान्येव बुद्धौ परिभान्ति चित्रम् ।
एकन्न चित्रं सुधियो विदन्तु
नैयायिको वक्ति रघुर्मतीन्द्रः ॥ ९ ॥

शङ्का न युक्तेयमिह प्रकामा
केनापि विज्ञेन विचालितापि ।
तस्याः समाधेः परिचिन्तनेन
प्राचां मतं राजति निष्कलङ्कम् ॥१०॥

पीतादियोगं समुपेत्य चित्रं
जायेत चित्रं च विचित्रचर्चम् ।
विप्राच्च शूद्रासहयोगतायां
सृष्टिर्विजातेः कथिता तु शास्त्रे ॥११॥

चित्रस्य चित्रं चरितं विचित्रं
यच्चर्चितं सूरिसुधाकरेण ।
आलोचनेनैव विभात्यभव्यं
तत्तर्कहीनं विमतं बुधानाम् ॥१२॥

अव्याप्यवृत्तित्वविधा नवीना
रूपादिकस्याभिमता रघूणाम् ।
त्याज्या न मान्या विमता विरुद्धा
निष्तर्कभूमिः सततं सदोषा ॥१३॥



## रूपादेर्व्याप्याव्याप्यवृत्तित्वविमर्शः

रूपं न्यायवैशेषिकदर्शने गुणपदार्थतयाभ्युपगतम्, तच्च शुक्लनीलपीतरक्तहरितकपिशचित्रभेदात्सप्तविधं स्वीकृतम्। पृथिव्यामाश्रयभेदेन सप्तविधं रूपमवतिष्ठते। जलतेजसोः केवलं शुक्लरूपमेवावतिष्ठते तत्रापि अभास्वरशुक्लं जले, भास्वरशुक्लं तेजसि।

पृथिवीजलतेजोभिन्नेषु द्रव्येषु किमपि रूपन्न वर्तते। तत्र पृथिव्यां सर्वत्र परमाणुरूपाणां तद्भिन्नानाञ्च सर्वं रूपमनित्यमेव, पृथिवीपरमाणुष्वपि पूर्वरूपनाशपूर्वकं रूपान्तरोत्पत्तेः। जले तेजसि च परमाणुगतं रूपं नित्यमेव, परमाणुभिन्नयोर्जलतेजसोश्च रूपमनित्यमेव।

पृथिव्यां वर्तमानं रूपं द्विधा जायते। क्वचित्पाकादेः क्वचिच्च कारणगतात् सजातीयरूपात्। पृथिवीपरमाणुषु पाकादेव रूपं जायते, तेषां नित्यत्वेनाकारणतया तत्र कारणरूपतो रूपोत्पत्तेरसम्भाव्यत्वात्।

अनित्यपृथिव्यां रूपस्योदयः क्वचित्पाकात् क्वचिच्च कारणगतात् रूपाद् भवति। यथा अपक्वघटादिषु नीलं रूपमवयवगतान्नीलरूपाज्जायते। पक्वघटादिषु रक्तं रूपं पाकाज्जायते।

किन्तु वैशेषिकदर्शने जन्यपृथिव्यां सर्वत्र कारणरूपादेव रूपं जायते। तन्नये परमाणुष्वेव पाकाङ्गीकारेण तत्रैव पाकजरूपस्य सम्भवात्। सर्वमेव रूपं न्यायवैशेषिकदर्शने देशतो व्याप्यवृत्त्येव भवति। क्वचिदपि द्रव्ये अंशभेदेन रूपतदभावयोरप्रसिद्धत्वात्। कालतः पार्थिवरूपस्याव्याप्यवृत्तित्वं न्यायवैशेषिकमतेऽप्यभ्युपगम्यते। घटे पाकात्पूर्वं नीलरूपस्य पाकात्परञ्च तदभावस्य, एवं पाकात्पूर्वं रक्तरूपाभावस्य पाकोत्तरञ्च रक्तरूपस्य दर्शनात्।

[1]दीधितिकारः पुना रूपस्य देशतोऽप्यव्याप्यवृत्तित्वं मन्यते। चित्रघटादावंशभेदेन विभिन्नानां रूपाणां तदभावानाञ्चोपलम्भात्। दृश्यते हि स्पष्टमेव चित्रे घटे क्वचिदेकत्र नीलादिकमन्यत्र च तदभावः।

१–रूपादिकं चाव्याप्यवृत्त्यपि सविषयावृत्तेर्व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तिताविरोधस्तु निष्प्रामाणिकः। पक्वे च घटे रक्तप्रतीतिर्नाप्रमा बाधकाभावात्। उपलभ्यते च भग्ने तस्मिन्नन्तःश्यामत्वम्। स्मृतिरपि—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते॥ इति॥ पृ० सं० २२

न च सविषयावृत्तित्वे सति व्याप्यवृत्तिवृत्तिजातित्वम् अव्याप्यवृत्तिवृत्तित्वा-भावव्याप्यमिति नियमः परमाणुत्वादिजातिषु दृष्टः। रूपत्वजातेः सविषयेऽवर्तमानत्वं जलादिरूपेषु व्याप्यवृत्तिषु वर्तमानत्वञ्चास्ति। अतो यदि रूपमव्याप्यवृत्ति भवेत्तदा रूपत्वजातौ सविषयावृत्तित्वे सति व्याप्यवृत्तिजातित्वस्याव्याप्यवृत्तिवृत्तित्वाभावव्य-भिचारेण नियमो भज्येत, अतो रूपस्य देशतोऽव्याप्यवृत्तित्वन्नाभ्युपगन्तुं शक्यमिति वाच्यम् उक्तनियमस्याप्रामाणिकत्वात्।

पक्वघटे रक्तरूपस्य कालतोऽव्याप्यवृत्तितया तदन्तर्भावेण सविषयावृत्तित्वे सति व्याप्यवृत्तिवृत्तिजातित्वस्याव्याप्यवृत्तिवृत्तित्वाभावव्यभिचारेणोक्तनियमस्यासिद्धत्वाच्च।

न च व्यापककुक्षौ देशतोऽव्याप्यवृत्तित्वस्यैव निवेशेनोक्तव्यभिचारो दुर्घटः पक्वघटे रक्तरूपस्य कालत एवाव्याप्यवृत्तितया देशतोऽव्याप्यवृत्तित्वे मानाभावादिति वाच्यं पक्वघटेऽपि रक्तस्य दैशिकाव्याप्यवृत्तित्वस्य यौक्तिकत्वात्। दृश्यते हि पक्वघटे उपरिभाग एव रक्तप्रतीतिरुदयो न तु तदन्तर्देशेऽपि। पक्वघटस्य भङ्गे तदन्तर्देशे श्यामताया उपलम्भात्। अतः पक्वघटादौ रक्तादिरूपस्य देशतोऽव्याप्यवृत्तित्वं निर्विवादम्। रूपस्य दैशिकमव्याप्यवृत्तित्वं स्मृतिसाक्षिकतयापि नोपेक्षितुं शक्यम्।

स्मृतौ हि नीलवृषलक्षणप्रसङ्गेन रूपस्य दैशिकमव्याप्यवृत्तित्वं 'लोहितो यस्तु वर्णेन मुखे पुच्छे तु पाण्डुरः, श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते' इति ब्रुवन्त्या स्मृत्या स्फुटीकृतम्। किञ्च चित्रे घटादौ नीलपीतादिरूपाणां दैशिकमव्याप्यवृत्तित्वं निर्विवादम्। तत्र नीलादिभागे रक्ताद्यभावस्य रक्तादिभागे च नीलाद्यभावस्य विस्पष्ट-मुपलम्भात्।

ननु चित्रतया अभ्युपम्यमाने घटादौ नीलपीतादिव्यतिरिक्तमेकमेव चित्रं रूपं भवति तच्च तत्र देशतो नाव्याप्यवृत्ति तस्यैवैकस्य पूर्णे घटादावुपलभ्यमानत्वादिति चेन्न, नीलपीतादिविजातीये चित्ररूपे प्रमाणाभावाच्चित्रव्यवहारस्य समानाधिकरणा-द्विजातीयरूपसमुदयादेवोपपत्तिसम्भवात्।

तस्यायमाशयः—यदिदं वस्त्रं चित्रमितिप्रतीतिर्वस्त्रमिदं नीलपीतादिनानारूप-वदित्येतत्प्रतीत्यात्मिका न तु ततो भिन्ना। न च चित्रप्रतीतेर्नीलपीतादिनानाविषय-कत्वकल्पने गौरवेणातिरिक्तचित्ररूपैकव्यक्तिविषयकत्वमेव लाघवादुचितमिति वाच्यम्, उत्पादकाभावेन चित्ररूपस्योत्पत्त्यसम्भवात् चित्रत्वेनाभ्युपगम्यमानस्य वस्त्रादेरवयवेषु नीलादिकं विभिन्नमेव रूपमवतिष्ठते। न त्वेकं चित्रं रूपम्।

अवयवगतं नीलादिकञ्च स्वसमवायिसमवेतद्रव्यत्वसम्बन्धेनावयविनि नीलादेरेव जनकं भवति,अन्यथा नीलाद्यवयवारब्धेष्ववयवेषु पीताद्युत्पत्तिप्रसङ्गात्। नीलमात्रारब्धे

अवयविनि नीलादिमात्रस्यैवोत्पत्त्या नीलादेर्नीलादिकं प्रत्येव जनकतायाः प्रामाणिकतया नीलादितश्चित्ररूपोत्पत्तेरसम्भवादपि चित्ररूपमतिरिक्तं नाङ्गीकर्तुं शक्यम्।

किन्तु दीधितिकृतो मतमिदमालोच्यमाने नोचितं भवितुमर्हति। यतः समवाय-सम्बन्धेन नीलादिकं प्रति स्वसमवायिसमवेतद्रव्यत्वसम्बन्धेन नीलादेः कारणत्वाभ्युगमे गौरवं भवति। स्वसमवायिसमवेतत्वद्रव्यत्वयोर्विशेष्यविशेषणभावविनिगमनाविरहेण गुरुतरसम्बन्धद्वयेन गुरुतरकार्यकारणभावद्वयापत्तेः।

न च स्वसमवायिसमवेतत्व-द्रव्यत्वोभयसम्बन्धेन कारणत्वकल्पने न दोष इति वाच्यं द्रव्यत्वस्य नीलादिसम्बन्धत्वे मानाभावात्। न च समवायिनि नीलादिकं प्रति स्वसमवायिसमवायसम्बन्धेन नीलादेः कारणत्वमवश्यमभ्युपगन्तव्यमन्यथा शुक्ल-तन्त्वारब्धे पटेऽपि नीलोत्पत्तिप्रसङ्गादिति वाच्यं समवायसम्बन्धेन रुपम्प्रति स्वसमवायि-समवायसम्बन्धेन रूपस्य कारणत्वाभ्युपगममात्रेणापि दोषाभावात्। शुक्लतन्त्वारब्धे पटे नीलोत्पत्तिप्रसङ्गस्य नीलत्वाद्यवच्छिन्नस्योत्पादकाभावादेवासम्भवात्। -नीलतन्त्वार-ब्धपटगतरूपे नीलत्वस्य तन्तुरूपगतनीलत्वस्य नियमकताभ्युपगमेनैवोपपत्तेः।

न च कार्ये जातिसम्बन्धस्य कारणनियम्यत्वनियमेन नीलत्वाद्यवच्छिन्नं प्रति नीलादेः कारणत्वानभ्युपगमे रूपादौ न तत्सम्भवमतोऽवयवनीलादावयविनीलादेः कारणत्वस्यापरिहार्यत्वमेवेति चेदत्रोच्यते भवतु नाम अवयवनीलादाववयविनीलादेः कारणत्वं तथापि नीलपीतादिनानारूपवदवयवारब्धेऽवयविनि नीलपीतादेर्नानारूपस्यो-त्पत्तिर्न सम्भवति नीलः पट इत्यादिप्रतीतेरेकरूपविषयकत्वकल्पने लाघवेन तत्र नानारूपोत्पत्तेरनङ्गीकरणीयतया तत्परिहारार्थं नीलादिकं प्रति नीलादिरूपादेः प्रति-बन्धकताया आवश्यकत्वात्।

न चैवं प्रतिवध्यप्रतिबन्धकभावकल्पने महागौरवं शङ्क्यं नीलपीतादिनानारूप-वदवयवारब्धेऽवयविनि पीतादिभागे नीलाद्युत्पत्तिवारणायावच्छेदकतासम्बन्धेन नीला-दिकम्प्रति समवायसम्बन्धेन नीलादिरूपस्यातिरिक्तचित्ररूपानभ्युपगममतेऽप्यावश्यक-त्वेनास्य दोषस्य 'यत्रोभयोः समो दोषः परिहारस्तयोः समः, नैकः पर्यनुयोक्तव्यस्तादृग-र्थविचारणे' इति न्यायेनोद्भावनानर्हत्वात्।

किञ्च नानारूपवदवयवारब्धे यदि नानारूपोत्पत्तिर्मन्यते तदा तत्र नानारूपाणां नानाप्रागभावकल्पने तद्ध्वंसकल्पने च महागौरवम्। अतिरिक्तचित्ररूपवादिमते चैकस्यैव चित्ररूपप्रागभावस्य तद्ध्वंसस्य च कल्पने महालाघवम्।

यदि चात्रैवमुच्येत यद् नीलादिदिर्नीलादिरूपस्यैवं जनको भवति, अतस्ततश्चित्र-रूपस्योत्पत्तिर्न सम्भवति रूपसामान्यादपि चित्ररूपोत्पत्तिर्न सम्भाव्यते रूपत्वावच्छिन्नस्य

रूपत्वाद्यवच्छिन्नम्प्रत्येव जनकत्वाच्चित्रत्वस्य कार्यमात्रवृत्तितया नियामकं विना असम्भवाच्च, तन्न समीचीनम्, नीलत्वाद्यवच्छिन्नजनकस्य नीलादेः पीतादिसहकारेण चित्रत्वाद्यवच्छिन्नजनकत्वसम्भवात् ।

दृश्यते हि पार्थक्येन विभिन्नजातीयकार्यजनकयोः परस्परसहकारेण विलक्षण-कार्यजनकत्वं शूद्राब्राह्मणयोगेन शूद्रब्राह्मणविजातीयस्य सन्तानस्योत्पत्तेः शास्त्रेषु प्रतिपादनात् ।'

# द्वितीयोऽध्यायः

## घटत्वाभावादेः प्रत्यक्षत्वविमर्शः

प्रत्यक्षता भाति यथा घटस्य
तस्याप्यभावस्य तथैव बोध्या ।
तन्निष्ठजातेरपि सा विभाति
तस्या अभावस्य च तादृशत्वम् ॥१॥

अक्षेण येन ग्रहणं तु यस्य
तन्निष्ठजातेर्ग्रहणं च तेन ।
तस्याप्यभावग्रहणं बुधेन
तेनैव दिष्टं नयतर्कवेत्रा ॥२॥

अक्षान्न जाता सुमतिप्रदिष्टा
जातेरभावस्य मतिः कदापि ।
कुक्षौ निविष्टस्य घटत्वजाते-
श्चातीन्द्रियत्वाद्रघुरेव वक्ति ॥३॥

अभावबुद्धिर्बहिरिन्द्रियेण
न वायुसंयुक्तघटस्य दिष्टा ।
अतीन्द्रियत्वात् सुधियो गिरन्ति
यथा तथैवोक्तमती रघूवता ॥४॥

सिद्धान्तसिद्धं मनुते न मानी
विद्याभिमानी सबलैकतर्कः ।
प्राचीनपक्षं चिनुते न चेयं
पक्षं स्वकीयं धवलं धिनोति ॥५॥

वस्त्रे घटत्वं न विभाति भव्यं
प्रत्यक्षतः कापि न तत्र चिन्ता ।
उल्लिख्यमाना सहजा च जाति-
र्धर्मं न कश्चिद्धरते कदापि ॥६॥

सिद्धान्तपक्षे न विभान्ति दोषा
दृष्टेश्च दोषा विलयं प्रयान्ति ।
नातो रघूक्ता सबला सुदृष्टि-
र्धृष्टाबला भाति यथा न नग्ना ॥७॥

जातेरसत्त्वं चिनुते न चक्षू-
रघूक्तिरेषापि विगर्हितव्या ।
तस्या असत्त्वं चिनुते च चक्षु-
र्मतन्न निन्द्यं सुधियामदुष्टम् ॥८॥

जिज्ञासुभिर्दृष्टिधरैर्नयज्ञै-
र्दृष्टिर्न हेया नयमश्वभूतिः ।
आस्वाद्यतोयो नयविन्दुसिन्धुः
सिञ्चत्यनेकान् नयविज्ञवृक्षान् ॥९॥



## घटत्वाभावादेः प्रत्यक्षाप्रत्यक्षत्वविषये दीधितिकृन्मतविमर्शः

प्राचीननैयायिकैर्घटत्वाद्यभावस्य लौकिकप्रत्यक्षत्वमभ्युपगम्यते, येनेन्द्रियेण यद् गृह्यते तद्गतजातेस्तदभावस्य च तेनैवेन्द्रियेण ग्रहणं भवतीति नियमात्। घटत्वादिकमेतन्नियमानुसारेण घटादौ चक्षुर्ग्राह्यमतः पटादौ घटत्वाद्यभावस्य चक्षुषा ग्रहणं निर्विवादम् ।

परन्तु[1] दीधितिकारो घटत्वाद्यभावस्य प्रत्यक्षत्वं न मन्यते, तस्मायमाशयः—यद् घटत्वाद्यभावस्य घटत्वत्वावच्छिन्नप्रतियोगिताकाभावत्वेन जातित्वावच्छिन्नप्रतियोगिताकाभावत्वेन वा ग्रहणं न संभवति तत्कुक्षौ प्रविष्टस्य घटत्वत्वस्य घटेतरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वविशिष्टघटनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपतया अतीन्द्रियत्वाद् घटेतरत्वेन अतीन्द्रियस्य कालादेस्तत्र संनिविष्टत्वात् । अतीन्द्रियधर्मावच्छिन्नप्रतियोगिताकाभावस्य चातीन्द्रियत्वादन्यथा वायुसंयुक्तघटो नास्तीत्याकारकस्य वायुसंयुक्तघटाभावप्रत्यक्षस्यापि दुर्निवारत्वप्रसङ्गात् । अत एव जातित्वावच्छिन्नप्रतियोगिताकाभावत्वेनापि तत्प्रत्यक्षमसम्भवि, जातित्वस्य नित्यत्वे सत्यनेकसमवेतत्वरूपत्वात्, तत्र च ध्वंसाप्रतियोगित्वरूपनित्यत्वकुक्षिप्रविष्टे ध्वंसे अतीन्द्रियस्य जन्यत्वादेः प्रवेशात् । अभावत्वमात्ररूपेण तत्प्रत्यक्षमपि नोपपदयितुं शक्यम्, प्रतियोग्यविशेषिताभावप्रत्यक्षस्याननुभवात् ।

परं दीधितिकृतो मतमिदं विचारक्षमं न प्रतिभाति अभावे स्वरूपेण घटत्वावगाहिनः पटादौ घटत्वं नास्ति इत्येवंविधस्य घटत्वाभावप्रत्यक्षस्य संभवात् । न च घटत्वस्योल्लिख्यमानतया स्वरूपतो भानं दुर्घटमिति वाच्यम्, समवायसम्बन्धेनैवोल्लिख्यमानाया जातेः स्वरूपतो भानानभ्युपगमात् । उक्तप्रत्यक्षे अभावांशे प्रतियोगितासम्बन्धेन घटत्वस्य स्वरूपत उल्लेखसंभवात् ।

न च समवायेनेव अन्यसम्बन्धेनाप्युल्लिख्यमानाया जातेः स्वरूपतो भानं न भवतीति शक्यमभ्युपगन्तुम्, अयं गौरिति स्वरूपतो गोत्वप्रकारकव्यवसायग्राहिणो इमं जानामीत्याकारकस्य विषयितासम्बन्धेन स्वरूपतो गोत्वोल्लेखिनोऽनुव्यवसायस्यानुपपत्तिप्रसंगात् ।

---

१—घटत्वादेश्चाभावो न घटत्वत्वादिना रूपेण प्रत्यक्षस्तस्यातीन्द्रियत्वात् । एवं जातित्वादिना रूपेणापीति सर्वथैवाप्रत्यक्षः । पदार्थतत्त्वनिरूपणे पृ० सं० ४८ ।

न च घटत्वे घटत्वाभावप्रतियोगित्वं घटत्वत्वावच्छिन्नमेव मन्तव्यं ध्वंसप्रागभावीयप्रतियोगिताभिन्नप्रतियोगितानां धर्मावच्छिन्नत्वनियमादतः प्रतियोगिविशेषिताभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणतया घटत्वाभावबुद्धेः पूर्वं घटत्वत्वेन घटत्वोपस्थितेरावश्यकतयोक्तप्रत्यक्षे घटत्वस्य स्वरूपतो भानं दुर्घटमिति वाच्यं घटत्वत्वेन घटत्वोपस्थितावपि तस्यातीन्द्रियपदार्थघटितत्वेनातीन्द्रियतया तदुपेक्ष्य प्रत्यक्षे स्वरूपतो घटत्वभाने बाधकाभावात् ।

न च कदाचित्स्वरूपतो घटत्वविषयकस्य घटप्रत्यक्षस्य कदाचिच्च जातित्वेन घटत्वविषयकस्य जातिमानित्याकारकप्रत्यक्षस्योपपत्तये स्वरूपतस्तत्प्रकारकप्रत्यक्षे स्वरूपतस्तद्विषयकज्ञानस्य जातित्वेन तत्प्रकारप्रत्यक्षे व जातित्वेन तद्विषयकज्ञानस्य कारणताया आवश्यकतया घटत्वत्वेन घटत्वोपस्थितेरनन्तरं स्वरूपतो घटत्वावगाहिनः प्रत्यक्षस्योत्पत्तिरसंभवेति वाच्यं जातित्वस्योक्तरीत्यातीन्द्रियघटित्वेनातीन्द्रियतयोक्तरूपेण प्रत्यक्षे द्विविधकारणकल्पनाया अयौक्तिकत्वात् ।

न चोक्तद्विविधप्रत्यक्षकारणताया असंभवेऽपि कदाचिद्घटः कदाचिज्जातिमान् घटत्ववांश्चेत्यादिशाब्दबुद्ध्याद्यनुरोधेन स्वरूपतस्तत्प्रकारकबुद्धौ स्वरूपतस्तद्विषयकज्ञानस्य जातित्वघटत्वत्वादिना तत्प्रकारकबुद्धिं प्रति जातित्वघटत्वत्वादिना तद्विषयकज्ञानस्य कारणत्वकल्पनमावश्यकमेवातो व्याप्यधर्मावच्छिन्नकार्योत्पत्तौ व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्र्या अपेक्षणीयत्वेन स्वरूपतो घटत्वप्रकारकप्रत्यक्षे स्वरूपतो घटत्वप्रकारकबुद्धेः कारणीभूतस्य स्वरूपतो घटत्वज्ञानस्यावश्तकतया घटत्वत्वेन घटत्वोपस्थित्यनन्तरं स्वरूपतो घटत्वप्रकारकप्रत्यक्षस्योत्पत्तिरसंभवैवेति वाच्यं घटत्वत्वेन घटत्वज्ञानोत्पादकदशायां स्वरूपतो घटत्वज्ञानस्यापि सामग्रीसंभवे घटत्वत्वेन घटत्वज्ञानकाले स्वरूपतोऽपि घटत्वज्ञानस्य संभवेनातीन्द्रियतया घटत्वत्वमुपेक्ष्य स्वरूपतो घटत्वप्रकारकस्य प्रत्यक्षस्योत्पत्तौ बाधकाभावात् ।

अयमाशयः—यदा घटत्वत्वप्रकारकघटत्वविषयकसंस्कार एवं स्वरूपतो घटत्वप्रकारकसंस्कारः सहैव उद्बुद्धो भवति तदा घटत्वत्वेन घटत्वस्य स्वरूपतो घटत्वस्य चावगाहकं स्मरणमुपपत्तुमर्हति, तदनन्तरं च घटत्वाभावे इन्द्रियसन्निकृष्टे प्रतियोगितासम्बन्धेन स्वरूपतोऽभावांशे घटत्वप्रकारकस्य घटत्वाभावप्रत्यक्षस्योत्पत्तिर्निर्बाधं संभवति, तत्प्रत्यक्षे च स्वरूपतो घटत्वविशेषिताभावत्वेन घटत्वत्वावच्छिन्नाभाव एवोक्तप्रत्यक्षे भासितुं प्रभवति अतो दीधितिकृत्प्रदर्शितं घटत्वाभावप्रत्यक्षस्य निराकरणमयौक्तिकमेव।

न च घटत्वाभावेन सह घटत्वस्य घटत्वत्वावच्छिन्नप्रतियोगित्वमेव सम्बन्धो न तु निरवच्छिन्नप्रतियोगित्वम्, अत्यन्ताभावीयप्रतियोगिताया निरवच्छिन्नत्वे मानाभावात् । घटत्वत्वावच्छिन्नप्रतियोगित्वं चातीन्द्रियघटितघटत्वत्वघटितत्वेनातीन्द्रियमतो

घटत्वाभावप्रत्यक्षस्य तदवगाहित्वं दुर्घटम्,प्रतियोगितान्तरसम्बन्धेनोक्ताभावे घटत्वभाने च तस्य भ्रमतया ततो घटत्वाभावस्य प्रत्यक्षविषयत्वोपपादनं दुःशकमिति वाच्यं प्रतियोगितामात्रस्य प्रतियोगितात्वरूपानुगतधर्मेण संसर्गत्वाभ्युपगमेन केवलप्रतियोगितात्वेन प्रतियोगितासंसर्गकस्वरूपतो घटत्वप्रकारकघटत्वाभावप्रत्यक्षस्योत्पत्तौ बाधकाभावात् ।

न च प्रतियोगितात्वेनापि उक्तप्रतियोगित्वस्यैव तत्र भानं मन्तव्यम् । उक्तप्रतियोगित्वं चोक्तरीत्यातीन्द्रियमतः प्रतियोगितात्वेनापि प्रत्यक्षे तद्भानमसंगतमतीन्द्रियस्य वस्तुनः केनापि रूपेणैन्द्रियकत्वासंभवादिति वाच्यं प्रतियोगितायाः स्वरूपसम्बन्धरूपायाः क्वचित्प्रतियोगिरूपत्वेन क्वचिच्च प्रतियोगितावच्छेदकरूपत्वेन तयोः प्रत्यक्षयोग्यत्वायोग्यत्वाभ्यामेव प्रत्यक्षयोग्यत्वायोग्यत्वस्य मन्तव्यतया घटत्वाभावप्रतियोगितायाः प्रत्यक्षयोग्यघटस्वरूपतया प्रत्यक्षयोग्यत्वस्योचितत्वेन घटत्वत्वावच्छिन्नत्वेनैव तस्य प्रत्यक्षानर्हतया प्रतियोगितात्वमात्रेण तत्प्रत्यक्षाभ्युपगमस्य निष्प्रत्यूहं संभवात् ।



## सत्ताजातिविमर्शः

परापरा काचन भाति भव्या
काचित्परा भात्यपरापि कापि ।
विधाश्च तिस्रः परिभान्ति जातेः
प्रदीपतन्त्रे रुचिरप्रकाशाः ॥१॥

द्रव्यादिनिष्ठा भणिता परैव
सत्तेति विज्ञैः परमप्रकाशा ।
जातिर्घटत्वं कथिताऽपरा च
द्रव्यत्वजातिरपरा परा च ॥२॥

विभाति भव्यानुगतप्रतीतिः
सदाकृतिर्युक्तिमती च मान्या ।
तथैव सत्ता परिसाध्यतेऽत्र
न तर्कहीना प्रबला च सत्ता ॥३॥

पदऽवृत्तौ तु निमित्तभूतं
बुधैः प्रबोध्यं महनीयतत्त्वम् ।
सतः पदस्यापि निमित्तभूतं
सत्त्वन्न हेयं प्रतिभाचणेन ॥४॥

जातिं न सत्तां सहते मनीषी
तत्साधिका कापि न भाति भूतिः ।
मान्या वरा नास्ति तिरस्कृता सा
भार्याऽसती वंशविघातिकेव ॥५॥

जातिर्न सा सद्व्यवहारतोऽपि
जातिः सतीतिव्यवहारतश्च ।
प्रत्यक्षसिद्धा न विभाति जातिः
सत्तेति पौरस्त्यपुरःप्रवृत्ता ॥६॥

भावत्वशब्देन विसोढुमर्हा
सत्ता न नान्या परिकीर्त्तितात्र।
भावत्वबुद्धिर्भणिता प्रवुद्धै-
श्चाभावभिन्ना नयशीलधीभिः ॥७॥

भावत्वमत्रापि च मान्यमान्यं
वाऽखण्डभूतो महतामुपाधिः।
ज्ञेयत्ववच्चेति विधैव मान्या
सत्ता न जातिः परिशीलनीया ॥८॥

एवं रघूक्तः सबलावभासो
मान्यो न वा बुद्धिपरीक्षकाणाम्।
मान्यो न मे भाति विमर्शदृष्ट्या
प्रोक्तो रघूणां विपरीततर्कः ॥९॥

स्वीकृत्य भावव्यवहारभूतिं
मान्यां च वाऽसद्व्यवहारभूतिम्।
भावत्वरूपं विरलं च सत्त्वं
भावेषु वृत्तं गुरुतामुपेतम् ॥१०॥

त्यक्त्वैव मान्यं समवेतरूपं
द्रव्यादिसत्त्वं लघुताविशिष्टम्।
दोषैरनेकैरिषुभिः प्रभिन्ना
मान्या न दृष्टी रघुनाथसूरेः ॥११॥

जिज्ञासवः केऽपि परीक्षकाश्चेत्
पुण्यप्रबन्धं परिलोचयन्तु।
शङ्कासमाध्योर्विशदस्वरूपं
पश्यन्तु तत्रैव विलोडितं तत् ॥१२॥



# सत्ताजातिविषये दीधितिकृन्मतविमर्शः

प्राचीननैयायिकैर्जातिः पर-अपर-परापरभेदात्त्रैविध्यमभ्युपगतम्। या जातिः सर्वजातीनां व्यापिका सा परा जातिः, या च स्वभिन्नसर्वजातीनामव्यापिका सा अपरा जातिः, या च किञ्चिज्जातिव्यापिका किञ्चिज्जातिव्याप्या च सा परापरा जातिः एवञ्च द्रव्यगुणकर्मसु विद्यमाना सत्ता जातिः सर्वजातिव्यापकतया परा। घटत्वजातिः सर्वजातीनामव्यापकतया अपरा, द्रव्यत्वादिजातिः पृथिवीत्वाद्यपेक्षया व्यापकत्वात्सत्तापेक्षया व्याप्यत्वाच्च परापरा। तत्र सत्ता जातिः सदाकारानुगतप्रतीत्या सत्पदप्रवृत्तिनिमित्ततया अभावान्यवृत्तिप्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्यसम्बन्धावच्छिन्नकारणतावच्छेदकघटकतया च सिद्ध्यति।

दीधितिकारः[१] सत्ताजातिं नाभ्युपैति उक्तयुक्तीनां तत्साधनेऽसामर्थ्यात्। तथा हि सदाकारानुगतबुद्ध्या तत्साधनं न संभवति यतो हि तद्बुद्धेः प्रत्यक्षरूपत्वे तद्बलादतीन्द्रियेषु द्रव्यगुणकर्मसु तत्सिद्ध्यसंभवात्। तत्पदप्रवृत्तिनिमित्ततया तस्याः सिद्धिर्न भवितुमर्हति, जात्यादावपि सत्प्रयोगस्य प्रामाणिकतया तत्प्रवृत्तिनिमित्तस्य जातित्वाभ्युपगमासंभवात्। अभावान्यवृत्तिप्रतियोगितासम्बन्धेन तादात्म्यसम्बन्धेन जन्यं सत् कारणमिति कार्यकारणभावमभ्युपगम्य तद्घटककारणताच्छेदकघटकतयापि सत्तायाः सिद्धिर्दुर्घटा, द्रव्यादिसमवायान्तर्भावपदार्थेषु सद्व्यवहारानुरोधेन यावद्भाववृत्तेः कस्याश्चित्सत्तायाः स्वीकारणीयतया तस्या एवोक्तकारणतावच्छेदकघटकत्वसंभवात्।

अतोऽभावानुगतव्यवहारबलाद् अभावत्वम्, अनुगतभावव्यवहारबलाच्च भावत्वमखण्डोपाधिरूपमेव मान्यम्, भावत्वं च सत्त्वं तच्च ज्ञेयत्वादेर्घटाभावादेश्च इव

---

१—सत्ता च न द्रव्यगुणकर्मवृत्तिरेका प्रत्यक्षसिद्धा जातिः। धर्मादीनामतीन्द्रियत्वेन तत्र प्रत्यक्षायोगात्। जात्यादावपि सद् व्यवहाराच्च। घटादौ सद्व्यवहारश्च वर्तमानत्वनिबन्धनः। किन्तु भावत्वं तत्। तच्चाभावान्यत्वम्। अभावत्वमेव वानुगतप्रत्ययसिद्धोऽखण्डोपाधिः, भावत्वं वाखण्डोपाधिः। तच्च ज्ञेयत्वादिवद् घटाभावादिवच्च स्ववृत्त्यपि।

पदार्थतत्त्वनिरूपणे पृ० सं० ४८-५१

स्ववृत्तितया तेनैव तस्मिन्नपि भावव्यवहारः सद्व्यवहारश्चोपपद्यते, अभावत्वमपि भाव एव, ननु यदि अभावत्वं भावस्तदा तद्वतोऽभावत्वं दुर्घटं भावशून्यस्यैव अभावपदार्थत्वादिति चेन्न, अभावस्य भावभिन्नत्वरूपत्वात्। भेदत्वस्य भावत्वस्य चाखण्डोपाधितया भावभिन्नत्वरूपस्य अभावत्वस्य सुग्रहत्वात्।

परं दीधितिकृता क्रियमाणं सत्ताजातेर्निराकरणं विचारसहतां न धत्ते। भावव्यवहारानुरोधेन सद्व्यवहारानुरोधेन च भावत्वस्य वा भावमात्रवृत्तेः कल्पनायां गौरवात्, तदपेक्षया सदाकारप्रतीत्यनुरोधेन द्रव्यगुणकर्मसु एव सत्ताजातिमभ्युपगम्य तत एव समवाय-स्वसमवायिसमवायान्यतरसम्बन्धेन सर्वेषु भावपदार्थेषु सद्व्यवहारोपपादनस्यौचित्यात्।

न च सकलभावसाधारण्याः सत्तायाः कल्पनापेक्षया द्रव्यगुणकर्ममात्रवृत्तेः सत्तायाः कल्पने लाघवाभावोऽस्या अपि जात्यादौ सद्व्यवहारोपपत्तये सम्बन्धकल्पनाया आवश्यकत्वादिति वाच्यं सर्वभावेषु सत्तायाः कल्पने सर्वेषु तेषु तत्सम्बन्धस्यातिरिक्तस्य कल्पनायां गौरवात्। सत्ताजातेरभ्युपगमे चातिरिक्ततत्तत्सम्बन्धस्याकल्पनीयतया लाघवात्। अन्यजातिसम्बन्धतया क्लृप्तस्य समवायस्यैव द्रव्यगुणकर्मभिः साकं तत्सम्बन्धत्वसम्भवात्।

यत्तु रघुदेवेन पदार्थतत्त्वनिरूपणटीकायामिदमुक्तं यज्जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन हेतुतया द्रव्यजन्यतावच्छेदककोटिप्रविष्टतया सत्ताजातिः सिद्धचति। न च तादृशकार्यभावे मानाभाव इति वाच्यं नीलादौ स्वाश्रयसमवेतत्वसम्बन्धेन नीलरूपकारणसत्त्वात्समवायेन नीलापत्तिवारणाय तादृशकार्यकारणभावस्यावश्यकत्वात्।

न च समवायसम्बन्धेन नीलादिकं प्रति स्वाश्रयसमवेतत्वविशिष्टद्रव्यत्वसम्बन्धेन नीलादेर्हेतुत्वकल्पनान्न तादृशकार्यकारणभावकल्पनमिति वाच्यम्, स्वाश्रयसमवेतत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण कार्यकारणबाहुल्येन कारणतावच्छेदकसम्बन्धगौरवेण चातिरिक्तोपदर्शितकार्यकारणभावकल्पनस्यैवोचितत्वादिति, तन्न समचीनम्, जन्यत्वविशिष्टसत्त्वं सत्त्वविशिष्टजन्यत्वं वा द्रव्यकार्यतावच्छेदकमित्यत्र विनिगमनाविरहेण जन्यत्वविशिष्टसत्त्वावच्छिन्नं प्रति सत्त्वविशिष्टजन्यत्वावच्छिन्नं प्रति च द्रव्यत्वेनातिरिक्तकारणताद्वयकल्पनापेक्षया स्वाश्रयसमवेतत्वद्रव्यत्वोभयसम्बन्धेन नीलस्य समवायसम्बन्धेन नीलादिकं प्रति कारणत्वकल्पनेन नीले नीलाद्युत्पत्तिवारणस्यौचित्येनोक्तरीत्या द्रव्यजन्यतावच्छेदककोटिप्रविष्टतया सत्ताजातेः साधनासम्भवात्।

यच्चास्मिन् सन्दर्भ एव रघुदेवेनेदमुक्तं वस्तुतस्तु नित्यवृत्तिधर्मस्यापि कार्यतावच्छेदकत्वाङ्गीकारेण सत्त्वमात्रस्यैव द्रव्यकार्यतावच्छेदकतया जन्यत्वस्य तत्र निवेश एव

नास्तीति तदपि न युक्तं तथा सति द्रव्यजन्यतायाः सत्तया नियम्यताया अनियम्यतायाश्च पक्षद्वयस्यैव स्वीकारासम्भवात् ।

आद्यपक्षे आत्मादिर्द्रव्यजन्य इति व्यवहारस्य द्वितीयपक्षे सामान्यादिर्द्रव्यजन्य इति व्यवहारस्य च लोकशास्त्रविरुद्धस्य दुर्निवारत्वापत्तेः । न च तदधीनोत्पत्तिकत्वमेव तज्जन्यत्वव्यवहारविषय इति वाच्यं तथा सति तदतिरिक्तस्य तज्जन्यत्वस्य सत्त्वे मानाभावेन तदवच्छेदकतया सत्ताजातेः साधनासम्भवात् ।

न च द्रव्याधीनोत्पत्तिकत्वरूपद्रव्यजन्यतावच्छेदकतया सत्ता सिद्ध्यतीति वक्तुं शक्यम् उत्पत्तेराद्यक्षणसम्बन्धरूपतया देशकालव्यतिरिक्तस्य तदवच्छेदकत्वे मानाभावात्। काले वसन्ते मञ्जर्य्य उत्पद्यन्ते इत्यादिव्यवहारतो देशकालयोरेवोत्पत्त्यवच्छेदकतया प्रमीयमाणत्वात् ।



## स्पर्शविमर्शः

अव्याप्यवृत्तित्वदशामुपेतः
स्पर्शोऽपि गीतो विदुषैव तेन ।
काठिन्यकौमल्यविशिष्टभागा-
ज्जन्ये पदार्थे सफलोपलम्भात् ॥१॥

पक्षे मदीये न च दोषसत्ता
सम्बन्धसत्त्वेऽभिनवेऽभ्युपेते ।
भिन्ने च पक्षे गुरुताकरत्वात्
सम्बन्धसत्ताभिनवा न सोढा ॥२॥

पक्षे स्वकीये गुरुता न बोध्या
संसर्गसत्त्वेऽभिनवेऽभ्युपेये ।
अव्याप्यवृत्तिर्न च निन्दनीया
स्पर्शो बुधेनैव समीक्षणीयः ॥३॥

स्पर्शौ च तौ यत्र सुसिद्धमेतः
संयोगनिष्ठौ परिकल्पितौ तौ ।
अभ्यर्हणीयः सुधियां स पक्षो
दोषो नवो नास्ति विगर्हणीयः ॥४॥

नव्यस्य नव्या परिकल्प्यमाना
भव्या न भूतिः परिशोध्यमाना ।
हारो न भारो न विहारभूमि-
स्तस्या विहारो बलदो विशीर्णः ॥५॥

स्पर्शीयबोधः सुधियामदोषः
प्राच्यां विशेषप्रतिभोपपन्नः ।
नव्यो न पक्षो रघुनाथसूरेः
स्तुत्यो बुधानां नयताण्डवानाम् ॥६॥

अंशस्य भेदेन विभासमानौ
चेद् द्रव्यनिष्ठौ न तथापि हानिः।
सव्याप्यवृत्तिर्बुधमान्यमान्यो
व्यर्थप्रलापो न रघोर्विभाति ॥७॥

स्पर्शचर्चा प्रचुरप्रकर्षा
प्राचां संतर्का विमता न कापि।
संचाल्यमाने प्रबले विरोधे
रोधो न वाचाखिलतन्त्रदृष्टेः ॥८॥

## स्पर्शविषये दीधितिकृन्मतविमर्शः

दीधितिकारेण[१] रूपस्येव स्पर्शस्यापि अव्याप्यवृत्तित्वमभ्युपगतम्, तस्यायमाशयः—यदि स्पर्शोऽव्याप्यवृत्तिर्न भविष्यति तदा कोमलकठिनस्पर्शविशिष्टाभ्यामवयवाभ्यामुत्पादिते द्रव्ये कोमलभागावच्छेदेन त्वक्संयोगे काठिन्यस्य कठिनभागावच्छेदेन च त्वक्संयोगे कोमलत्वस्योपलम्भोऽनिवार्यः स्यात्।

ननु स्पर्शस्याव्याप्यवृत्तित्वाभ्युपगमेऽपि दोषोऽयमस्त्येव कोमलभागावच्छेदेन त्वक्संयुक्तेऽवयविनि काठिन्यस्य विद्यमानतया तदुपलम्भकस्य त्वक्संयुक्तसमवायस्य तत्राप्यक्षुण्णत्वादिति चेन्न, तत्तत्स्पर्शोपलम्भे तत्तत्स्पर्शावच्छेदेन त्वक्संयोगवत्समवायस्य हेतुत्वकल्पनात्।

अतः कोमलभागावच्छेदेनावयविनि त्वक्संयोगदशायां कठिनस्पर्शावच्छेदेन त्वक्संयोगस्यासत्तया कठिनस्पर्शेन सह त्वच उक्तसन्निकर्षस्याभावेन न दोषः।

न चैवं स्पर्शस्य व्याप्यवृत्तित्वपक्षेऽपि दोषोऽयमसम्भवः कोमलभागावच्छेदेन त्वक्संयोगदशायामुक्तसन्निकर्षाभावादिति वाच्यमुक्तकार्यकारणभावकल्पनाया गौरवात्। स्पर्शस्याव्याप्यावृत्तितामतेऽपि गौरवेणोक्तकार्यकारणभावमनङ्गीकृत्य स्पर्शनिष्ठविषयतासम्बन्धेन स्पार्शनप्रत्यक्षम्प्रति स्वावच्छेदकावच्छेद्यत्वसम्बन्धेन त्वक्संयोगस्य लघुतरकारणताकल्पनेनापि तदापत्तिवारणसम्भवात्। तथा हि—यदा द्रव्यस्य कोमलभागे त्वक्संयोगस्तदा स स्वावच्छेदकावच्छेद्यत्वसम्बन्धेन कोमलस्पर्श एव भवति न तु कठिनस्पर्शे। अतो न दोषः।

न च कोमलत्वकठिनत्वयोः संयोगवृत्तित्वाङ्गीकारेण कोमलकठिनभेदात्स्पर्शभेदस्यासिद्धयोक्तरीत्या स्पर्शस्याव्याप्यवृत्तित्वकल्पनं निर्युक्तिकमिति वाच्यं कोमलत्वकठिनत्वयोः संयोगनिष्ठत्वे तयोश्चाक्षुषप्रसङ्गात्।

---

१—स्पर्शोऽपि चाव्याप्यवृत्तिः। अन्यथा सुकुमारकठिनाभ्यामवयवाभ्यामारब्धेऽवयविनि सुकुमारावच्छेदेन त्वक्संयोगे काठिन्यस्याप्युपलम्भप्रसङ्गः। न च सुकुमारत्वकठिनत्वे संयोगविशेषौ चाक्षुषत्वप्रसङ्गात्। पदार्थतत्त्वनिरूपणे पृ० सं० ३५।

परन्तु स्पर्शस्य दीधितिकृतोऽव्यमव्याप्यवृत्तित्वाभ्युपगमपक्षः परीक्ष्यमाणः प्रतिष्ठान्न लभते। कोमलत्वकठिनत्वयोः संयोगनिष्ठत्वस्यैवाङ्गीकारेण प्रोक्तदिशा स्पर्शस्याव्याप्यवृत्तित्वसमर्थनासम्भवात्। तयोः संयोगनिष्ठत्वे यच्चाक्षुषत्वमापादितं तदिष्यत एव, निपुणजनानां चक्षुषैव तयोरुपलम्भस्यानुभविकत्वात्। अनुभूयत एव पक्वापक्वरसालफलयोः कोमलत्वकठिनत्वकृतो विवेकस्तदभिज्ञैः।

किञ्च कोमलत्व-कठिनत्वे यदि स्पर्शगते एव स्यातां तदापि कोमलकठिनस्पर्शाश्रयाभ्यामवयवाभ्यां जनितेऽवयविनि अव्याप्यवृत्तिः स्पर्शो न सिद्ध्यति, तत्र स्पर्शस्यानभ्युपगमेऽपि दोषाभावात्। आनुभविकस्य स्पर्शोपलम्भस्यावयवस्पर्शविषयकतयैवोपपत्तिसम्भवात्।

न च तादृशद्रव्यस्य स्पर्शशून्यत्वे स्पार्शनप्रत्यक्षं न स्यादिति शङ्क्यं स्पर्शवतस्तदवयवस्यैव तत्र स्पर्शनोपगमे दोषाभावात्।



# रसविमर्शः

अव्याप्यवृत्तिर्न रसोऽस्ति कोऽपि
प्राचां बुधानां प्रबलोऽस्ति पक्षः ।
पक्षं द्वितीयं विपरीतकोटिं
प्रस्तौति विज्ञो विदुषां पुरस्तात् ॥१॥

आम्लांशभाग्भ्यो मधुरांशभाग्भ्यो
द्रव्ये नवीने मधुरस्य भानम् ।
आम्लीयभागे प्रबलं प्रसक्त-
माम्लस्य भानं मधुरे च भागे ॥२॥

चित्रो रसस्तत्र विभाति भव्यो
दोषस्ततो नेति यदास्ति पक्षः ।
संख्या रसस्यापि षडेव बोध्या
नातो विजातीयरसस्य चर्चा ॥३॥

नानारसोपेतगुणाश्रयांशाज्-
जातं नवं नीरसमेव सत्त्वम् ।
उक्तं रघोर्भाति न तर्कयुक्तं
सिद्धे च सम्बन्धविशेषहेतौ ॥४॥

कल्प्येऽभिनव्ये प्रतिबन्धकत्वे
दोषो न पक्षे भवतोऽभिनव्ये ।
साधूक्तिरेषा न तथापि वाच्या
दुष्टैव बोध्या गुरुतामुपेता ॥५॥

रसेन हीनैर्द्व्यणुकैः प्रकल्प्ये
सत्त्वे सदा नीरसताविपत्तिः ।
मान्यं ततो न प्रतिबन्धकत्वं
यत्कल्पितं श्रीरघुनाथवेत्रा ॥६॥

इष्टो रसो बुद्धिपथावलम्बो
न व्याप्यवृत्तिर्जगति प्रसिद्धः।
धार्ष्ट्यं सुदृष्टे रघुनाथसूरे-
र्व्यर्थप्रलापं सुधियाममान्यम् ॥७॥



# रसविषये दीधितिकृन्मतविमर्शः

दीधितिकारो[१] रसस्याप्यव्याप्यवृत्तित्वमुररीकरोति । तस्यायमभिप्रायो यद्रसो यद्यव्याप्यवृत्तिर्न स्यात्तदाम्लमधुररसोपेताभ्यामवयवाभ्यामुत्पादिते द्रव्ये आम्लभागावच्छेदेन मधुररसस्य मधुरभागावच्छेदेन चाम्लरसस्योपलम्भः प्रसज्येत ।

न च विजातीयरसोपेतैरवयवैरारब्धद्रव्ये अव्याप्यवृत्तीनां विजातीयरसानामस्तित्वाभ्युपगमो निष्प्रयोजनस्तत्रैकैकजातीयरसेभ्यो विलक्षणस्य चित्ररसस्यैवाभ्युपगन्तव्यत्वात् । आम्लभागावच्छेदेन मधुररसस्य मधुरभागावच्छेदेनाम्लरसस्य चोपलम्भप्रसङ्गोऽपि न भवति । तादृशद्रव्ये व्याप्यवृत्तीनां विजातीयरसानामनभ्युपगमात् ।

अतो रसस्याव्याप्यवृत्तित्वाभ्युपगमो निरर्थक एव, नानारसाश्रयैरवयवैरारब्धं द्रव्यं नीरसमेव भवतीत्येतदपि दीधितिकारस्य मतन्न रमणीयं समवायसम्बन्धेन रसम्प्रति स्वसमवायसम्बन्धेनावयवरसस्य कारणतया रसवद्भिरवयवैरारब्धे द्रव्ये रसोत्पत्तेरपरिहार्यत्वात् । रसम्प्रति स्वसामनाधिकरण्यस्वविजातीयरससामानाधिकरण्यसम्बन्धेन रसस्य प्रतिबन्धकत्वकल्पनया तद्वारणसम्भवेऽपि एतत्कल्पनाया गौरवेण परित्याज्यत्वात् ।

किञ्च यदा विजातीयरसविशिष्टाभ्यां परमाणुभ्यां द्वयणुकमुत्पाद्यते तदा द्वयणुकेऽपि उक्तप्रतिवध्यप्रतिबन्धकवशाद्रसो नोत्पत्स्यते एवं चेदृशैर्द्व्यणुकैरारब्धे स्थूलद्रव्ये रसोपलम्भो न स्यात् ।

१—रसोऽपि चाव्याप्यवृत्तिः । अन्यथा तिक्तमधुराभ्यामारब्धेऽवयविनि तिक्तावयवावच्छेदेन रसनायोगे माधुर्योपलम्मप्रसङ्गः । नोरस एव वा तत्रावयवी । पदार्थतत्त्वनिरूपणे, पृ० सं० ३६ ।

## गन्धविमर्शः

न व्याप्यवृत्तिर्विविधोऽपि गन्धो
रघोर्मतिर्वक्ति विचित्रधैर्या ।
प्राचां विरुद्धा सबलेव धृष्टा
कृपाविहीना शिरसो व्यथेव ॥ १ ॥

सर्वत्र गन्धाखिलतामुपेतं
विजातिगन्धांशसुजन्म सत्त्वम् ।
न व्याप्यवृत्तिस्तत एव गन्धो
रघूक्तिरेषा प्रसभं ब्रवीति ॥ २ ॥

चित्रस्य गन्धस्य महाविभूती
रघूक्तबाधापरिहारभूतिः ।
न व्याप्यवृत्तिर्विविधोऽपि गन्धो
मतिर्न मान्या रघुनाथसूरेः ॥ ३ ॥

विजातिगन्धाश्रयभागभिन्नैः
सुलब्धसत्त्वं रघुणा विगन्धम् ।
विना विचारं भणितं नगण्यं
मतं न सिद्धं विपरीततर्कम् ॥ ४ ॥

भव्ये विभाव्ये प्रतिबन्धकत्वे
दृष्टिर्न हेया रघुनाथसूरेः ।
नेदं कदाचिद् वचनीयमास्ते
हेया यतः सा गुरुतामुपेता ॥ ५ ॥

निर्गन्धभूतैर्द्व्यणुकैः सुसृष्टे
द्रव्ये च निर्गन्धवरा विपत्तिः ।
कल्प्यं ततो न प्रतिबन्धकत्वं
सूरे रघोर्मान्यमतं प्रहेयम् ॥ ६ ॥

न व्याप्यवृत्तिः सुधियां निषिद्धो
गन्धः सदा मान्यधियां प्रकल्प्यः ।
प्राचां च तर्के प्रबले निरूप्ये
दोषस्य लेशोऽपि पदं न धत्ते ॥ ७ ॥

## गन्धविषये दीधितिकृन्मतविमर्शः

दीधितिकारेण[1] गन्धस्याप्यव्याप्यवृत्तित्वमभ्युपेयते। तत्रापीयमेव युक्तिर्यद् यदि गन्धो व्याप्यवृत्तिरेव स्यात्तदा विजातीयगन्धभाग्भिरवयवैरारब्धेऽवयविनि सर्वांशे सर्वगन्धोपलम्भप्रसङ्गः स्यादतस्तादृशैरवयवैस्तत्तद्भागावच्छेदेनाव्याप्यवृत्तिरेव गन्ध उत्पद्यत इत्यवश्यं मन्तव्यम्, दीधितिकारस्यैष पक्षोऽपि चित्रगन्धाभ्युपगमेन निराकर्तुं शक्यः, नानाजातीयगन्धसमवायिभिरवयवैरारब्धस्यावयविनोर्निर्गन्धत्वोपगमोऽपि तदीयो न युज्यते, गन्धवद्भिरवयवैरारब्धेऽवयविनि गन्धोत्पत्तेर्दुर्निवारत्वात्। गन्धसामान्यं प्रति स्वसामानाधिकरण्यस्वविजातीयगन्धसामानाधिकरण्योभयसम्बन्धेन गन्धसामान्यस्य प्रतिबन्धकत्वकल्पने गौरवात्। किञ्चेदृशप्रतिवध्यप्रतिबन्धकभावाभ्युपगमे निर्गन्धद्व्यणुकैरारब्धे स्थूलद्रव्ये आनुभविकस्य गन्धोपलम्भस्यानुपपत्तिरपीति विभावनीयम्।



---

१—एतेन गन्धो व्याख्यातः। पदार्थतत्त्वनिरूपणे पृ० सं० ३७।

## कर्मविमर्शः

संयोगहेतुश्च वियोगहेतुः
कर्मापि चित्रं गणितं स्वतन्त्रे ।
तद् व्याप्यवृत्ति प्रथितं पृथिव्यां
सृष्टिः समग्रा तत एव हेतोः ॥ १ ॥

संयोगसृष्टौ च विभागसृष्टौ
यत् स्वोत्तरोत्पन्नमुपेक्ष्य भावम् ।
सृष्टिं विशालां कुरुते नवीनां
तत् कर्म तर्कैकधियो विदन्ति ॥ २ ॥

कर्मत्वजातिं ब्रुवते कवीन्द्राः
कर्मापि बोध्यं चलनात्मरूपम् ।
द्रव्ये क्रियायां चलतीति बुद्धिः
सिद्धा ततः सा चलनत्वजातिः ॥ ३ ॥

उत्क्षेपणादिर्विविधः प्रपञ्चो
मञ्चस्तु तस्यैव यतस्ततश्च ।
पञ्चैव भेदाश्चलनस्य बोध्या
न्यूनातिरिक्ता न भवन्ति तेऽत्र ॥ ४ ॥

द्रव्ये च मूर्त्ते समवेतरूपं
क्षित्यम्मरुद्वह्निमनांसि तस्य ।
मूर्त्तस्य भेदा अधिका न पञ्च
न्यूना न वेति प्रविदन्ति सन्तः ॥ ५ ॥

क्वचिच्च संयोगसुखेन जातं
क्वचिद् विभागेन विभाति भव्यम् ।
अदृष्टमात्रादपि तस्य जन्म
प्रकीर्तितं नीतिविदां स्वतन्त्रे ॥ ६ ॥

प्रयत्नवज्जीवसुयोगमेत्य
शरीरचेष्टानुभवैकगम्या ।
प्रवेगवद्वायुसुयोगहेतो-
स्तरोः प्रगीता परिणामगीतिः ॥ ७ ॥

त्पात्यमानस्य सुकीचकस्य
भागाद्विभक्तात्पृथगंशभूमौ ।
ज्ञेयश्च कर्म प्रथिताद् विभागाद्
वह्नौ सदोर्ध्वज्वलनान्यदृष्टात् ॥ ८ ॥

वायोश्च तिर्यग्गमनं प्रसिद्धं
भव्याददृष्टादपरो न हेतुः ।
तद् व्याप्यवृत्तित्वविशिष्टकर्म
गायन्ति तज्ज्ञा मतिमन्नयज्ञाः ॥ ९ ॥

अव्याप्यवृत्तित्वविशिष्टकर्म
स्थूलेषु सर्वत्र बहुत्र कर्म ।
उक्ती रघोर्वक्ति विशालभूतिः
प्राप्ता नवीना प्रथितादरेव ॥ १० ॥

सर्वासु शाखासु च कम्पकाले
वृक्षस्य मूलस्य च निश्चलत्वे ।
अव्याप्यवृत्तित्वविशिष्टकर्म
वृक्षे चलो भाति ततश्च सिद्धम् ॥ ११ ॥

शाखासु बोध्यः समवेतकम्पो
दोषस्ततश्चेन्न भवेदमान्यः ।
प्राप्तो भ्रमस्तत्र कथं प्रहेयः
पन्था रघूक्तस्तत एव मान्यः ॥ १२ ॥

वृक्षे च तस्मिन् समवेतकम्पे
न व्याप्यवृत्तौ क्षतिरस्ति कापि ।
मूलेऽपि वृक्षश्चलनेन युक्तो
दोषो नवोत्थोऽपरिहार्य एव ॥ १३ ॥

एकत्र नाना चलनानि यानि
रघूक्तमार्गेऽसहनीयदोषः ।
विशेषसम्बन्धनिवेशपक्षे
विधा प्रगुर्वी नितरामुपेक्ष्या ॥ १४ ॥

न व्याप्यवृत्ताविह कोऽपि दोषः
प्राचां विवेको नवनीतिदीपः।
आलोकपुञ्जं समवाप्य तस्य
शास्त्रार्थतत्त्वं भजते प्रकाशम् ॥ १५ ॥

भव्या गुणाः केऽपि न तत्र दृष्टा
दोषा अनेके पतितास्तु तत्र।
मार्गो रघोर्गौरवमादधानो
मान्यो न हेयः सबले विपक्षे ॥ १६ ॥

न सम्मतिस्तत्र विशिष्टबुद्धेः
शिरोमणेः कल्पितनव्यतर्के।
नवाऽनवा वा विमतिर्न तत्र
विचाररेखाऽरमणीयकुब्जा ॥ १७ ॥

न सूत्रसिद्धा न च भाष्यसिद्धा
न तर्कसिद्धाऽभिनवप्रचारा।
शिरोमणेः कर्मकलापरेखा
न नीतिपक्षा धृतराष्ट्रजेव ॥ १८ ॥

अलंकृतानेकगुरूत्तमाङ्गा
समर्चिता भाष्यविशेषभङ्गा।
मनोहरोत्तुङ्गसुधीतरङ्गा
विचारगङ्गा पथिकान् पुनातु ॥ १९ ॥

सर्वाः क्रियाः सकललोककलाकलापान्
संसृज्य सृष्टिमपरामपरां च रान्ति।
लोकान् नियोज्य निजकर्मकदम्बसिन्धौ
रत्नानि कानि ददते न विचित्रभाञ्जि ॥ २० ॥

चलनता कविकर्मकलापगा
विविधतापहरा धरणीधरा।
सृजति लोककलाधरचन्द्रिकां
दहति तापकदम्बतमोऽधुना ॥ २१ ॥



## कर्मविषये दीधितिकृन्मतविमर्शः

कर्म न्यायवैशेषिकदर्शनानुसारेणैकः स्वतन्त्रः पदार्थस्तल्लक्षणं संयोगविभागयोरनपेक्षं कारणं कर्मेति। यत् संयोगविभागजनने स्वोत्तरोत्पन्नं भावं नापेक्षते तत्कर्म।

न च कर्मणा विभागजनने कर्मोत्तरोत्पन्नभावस्यानपेक्षितत्वेऽपि संयोगजनने विभागस्यापेक्षणीयतया लक्षणमिदमसंभवग्रस्तमिति वाच्यम्, विभागस्य पूर्वसंयोगनाशार्थमेवापेक्षणीयतयोत्तरसंयोगोत्पत्तौ तदनपेक्षणात्। तज्जनने पूर्वसंयोगनाशस्यैवापेक्षितत्वात्।

न च पूर्वसंयोगनाशे विभागस्यापेक्षणीयतया तत्सापेक्षतत्संयोगेऽपि विभागसापेक्षत्वमपरिहार्यमिति वाच्यं साक्षात्स्वोत्तरोत्पन्नभावानपेक्षितत्वस्य लक्षणकुक्षौ निक्षेपेण दोषाभावात्। तथा हि—कर्मण उत्पत्तेरव्यवहितोत्तरक्षण एव विभागस्योत्पत्त्या विभागजनने स्वोत्तरभावानपेक्षत्वं सुस्पष्टम्। उत्तरसंयोगजनने च स्वोत्तरोत्पन्नविभागस्यापेक्षायामपि न साक्षात्तदपेक्षत्वम्, पूर्वसंयोगनाशद्वारैव विभागस्योत्तरसंयोगजनने अपेक्षणात्।

अथवा कर्मत्वं जातिः कर्म च चलनात्मकमेवञ्च सक्रिये द्रव्ये सर्वत्र चलतीति अनुगतप्रत्ययानुरोधात्कर्मत्वापरपर्याया चलनत्वजातिः सिद्धयति। कर्म उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनभेदेन पञ्चविधम् मूर्तद्रव्यसमवेतं च। मूर्तद्रव्यं च क्षित्यप्तेजोमरुन्मनोभेदात्पञ्चविधम्। कर्म किल क्वचित्संयोगात्क्वचिच्च विभागाज्जायते, यथा प्रयत्नवदात्मसंयोगात् शरीरादौ चेष्टारूपम्, वेगवद्वाय्वादिसंयोगाद् वृक्षपरिणामादौ। विभागाच्चोत्पाद्यमानस्य वेणोरवयवविभागात्तदवयवे साक्षाददृष्टादपि क्वचित्कर्म जायते, यथा अग्नौ ऊर्ध्वज्वलनं वायोस्तिर्यग्गमनं च। नाशश्चास्य सर्वत्रोत्तरसंयोगादेव जायते सर्वं च कर्म व्याप्यवृत्ति।

किन्तु[1] दीधितिकारः स्थूलद्रव्येषु बहुत्र कर्मणो दैशिकमप्यव्याप्यवृत्तित्वमङ्गीकुरुते। मतमिदं सर्वासु शाखासु कम्पकालेऽपि मूलस्य निश्चलतया वृक्षे चलतीति प्रत्ययानुरोधान्मन्यते। यदि शाखासु दृश्यमानः कम्पः शाखासमवेत एव मन्येत तदा वृक्षश्चलतीति प्रत्ययो न जायेत, जायमानोऽपि भ्रमत्वं नातिवर्तेत चलनशून्ये वृक्षे चलनावगाहनात्।

यदि च वृक्षे प्रतीयमानं चलनं वृक्षसमवेतं मन्येत तदा तस्य व्याप्यवृत्तित्वाभ्युपगमे मूलेऽपि वृक्षश्चलनवत्तया प्रतीयेत। व्याप्यवृत्तेस्तस्य वृक्षे क्वापि भागेऽविद्यमानत्वासम्भवात्। न च वृक्षे तत्तदंशे चलनप्रत्ययार्थं तत्तदंशेऽपि चलनसमवायोऽपेक्षितोऽतो मूलातिरिक्तसर्वावयवचलनदशायां वृक्षमूले चलनस्यासमवायेन मूलांशे वृक्षे चलनप्रत्ययो न भवितुमर्हति तदंशे चलनस्य समवायाभावात्।

न च तत्तदंशे वृक्षे चलनप्रत्यये तत्तदंशसमवेतचलनस्य जनकत्वे वृक्षे चलनाभ्युपगम एव निरर्थकः स्यात्तत्तदवच्छेदेन चलनप्रत्यये तत्तदंशसमवेतचलनस्य स्वसमवायिसमवेतत्वसम्बन्धेन कारणतयैवोपपत्तेरिति वाच्यं वृक्षः समग्रश्चलतीति प्रतीत्यर्थं वृक्षेऽपि चलनस्यावश्यकल्पनीयत्वात्।

न च समग्रो वृक्षश्चलतीति प्रतीतेः सर्वावयवावच्छेदेन वृक्षश्चलतीति प्रत्ययपर्यवसायितया अवयवचलनादेव सम्भवेन तदनुरोधेन वृक्षे चलनाभ्युपगमोऽनावश्यक इति वाच्यम्, तत्तदंशेऽवच्छेदकत्वानवगाहिन्या वृक्षश्चलतीति प्रतीतेरुपपत्तये वृक्षे चलनाभ्युपगमस्यावश्यकत्वात्।

अत्र दीधितिकार इदमभिप्रैति यद् वृक्षश्चलतीति प्रत्ययानुरोधेन यदि वृक्षे व्याप्यवृत्ति चलनं मन्यते तत्तदंशे चलनप्रत्यये च तत्तदंशसमवेतचलनस्य स्वसमवायिसमवायसम्बन्धेन कारणत्वं मन्यते तदा गौरवं भवति अतो वृक्षे चलनस्याव्याप्यवृत्तित्वमभ्युपेत्यावच्छेदकतासम्बन्धेन चलनप्रत्ययेऽवच्छेदकतासम्बन्धेन वृक्षसमवेतचलनस्यैव कारणत्वमभ्युपेयम्, अवच्छेदकानवगाहिन्यां चलनप्रतीतौ च समवायसम्बन्धेन चलनस्य कारणत्वं स्वीकार्यमेवेत्येवं कार्यकारणभावलाघवानुरोधेन वृक्षादौ कर्मणोऽव्याप्यवृत्तित्वाभ्युपगमपक्षोऽवश्यमभ्युपेयः।

---

१—कर्मापि चाव्याप्यवृत्ति। चलन्तीषु सर्वासु शाखासु निश्चलमूले वृक्षे चलतीति प्रत्ययात्। शाखा एव परं चलन्ति न पुनर्वृक्ष इत्यपि प्रत्ययोऽस्तीति चेत् तस्य सर्वावयवावच्छेदेन चलनाभावो विषयो न पुनः सर्वथैव चलनाभाव उक्तप्रत्ययविरोधात्। अत एव सदा सकम्पोऽश्वत्थ इति प्रसिद्धिरपि। सर्वैश्च नीलैरारब्धेऽवयविनि नीलान्नीलं स्वस्वावच्छेदेनोत्पद्यमानमविरोधादव्यापकमेवोत्पद्यते सजातीयविजातीयेषु नानापदार्थेषु जायमानं समूहालम्बनरूपमिवैकं ज्ञानम्। पदार्थतत्त्वनिरूपणे पृ० सं० ३७–३८।

परं दीधितिकृतोऽयमभिप्रायः परीक्ष्यमाणः प्रशंसास्पदं न भवितुमर्हति यत एकैकमात्रशाखाचलने यदि वृक्षेऽव्याप्यवृत्तिचलनोत्पत्तिर्मन्येत तदा शाखाचलन-दशायां वृक्षे उत्पद्यमानस्य चलनस्य मूलाद्यवच्छेदेनोत्पत्त्यापत्तिपरिहारादवच्छेदकता-सम्बन्धेन चलनं प्रति समवायसम्बधेन चलनस्य कारणत्वं मन्तव्यम्, किं च शाखायां समवेतस्य चलनस्य शाखायामवच्छेदकतासम्बन्धेनोत्पत्त्यापत्तिपरिहारादवच्छेदकता-सम्बधेन तत्तच्चलनं प्रति समवायसम्बन्धेन तत्तच्चलनभिन्नचलनं कारणमित्यपि स्वीकार्यम् ।

एवं यदा एकस्याः शाखायाः प्रथमचलनेऽन्यस्याश्च शाखाया अनन्तरं चलनं तदा पूर्वोत्पन्नशाखाचलनाद् वृक्षे एकचलनोत्पत्त्यनन्तरमनन्तरभाविशाखान्तरचलनाद् वृक्षे चलनान्तरस्याप्युत्पत्तिर्मन्तव्या, तथा च युगपद् एकत्रानेकचलनाभ्युपगमो-ऽपरिहार्यः ।

एवं तत्तच्छाखावच्छेद्यचलनस्यावच्छेदकतासम्बन्धेन शाखान्तरे उत्पत्त्यापत्ति-परिहाराय अवच्छेदकतासम्बन्धेन तत्तदवयवावच्छेद्यं चलनं प्रति तादात्म्यसम्बन्धेन तत्तदवयवत्वेन कारणतापि मन्तव्या । किं च कस्मिंश्चिदवयवे चलति अवयवान्तरे चाचलति अवयविनि अवच्छेदकभेदेन चलनतदभावयोरुभयोः सत्त्वमङ्गीकार्यमित्येवं कर्मणोऽव्याप्यवृत्तित्वपक्षे बहुविधं महद् गौरवमत एव एतदपेक्षया लाघवात् कर्मणो व्याप्यवृत्तित्वपक्ष एव स्वीकर्तुमर्हः । एतत्पक्षे हि वृक्षे सर्वावयवचलनदशायामेव चलनो-त्पत्तिरङ्गीकार्या न तु एकैकावयवचलनदशायामपि ।

नन्वेवं शाखामात्रचलनदशायां वृक्षः शाखायां चलतीति प्रत्ययः कथं स्यात्तदानीं वृक्षे चलनस्याभावादिति चेन्नोक्तप्रतीतेः शाखासमवेतचलनस्यैव स्वसमवायिसमवे-तत्वसम्बन्धेन वृक्षेऽवगाहनेन तदुपपत्तौ कण्टकाभावात् । वृक्षः शाखायां चलति न मूले इति प्रतीतिश्च मूलासमवेतशाखासमवेतत्वाभ्यां चलनं स्वसमवायिसमवेतत्वसम्बधेन वृक्षेऽवगाहते इत्यभ्युपेयम् । एकैकावयवचलनदशायां वृक्षे चलनोत्पत्तिपरिहारस्तु चलनत्वस्य स्वाश्रयसमवायिसमवेतत्व-स्वाश्रयाभाववत्समवेतत्वोभयसम्बन्धेन प्रति-बन्धकत्वस्वीकारेण कर्त्तव्यः । एवञ्च एतन्मते कर्मणोऽवच्छेदकतासम्बन्धेनोत्पत्तेः किञ्चिन्मात्रावयवचलनदशायामवयविनि चलनानुत्पत्तेः, एवमवयविनि युपगच्चलनतद-भावयोरनङ्गीकारेण लाघवस्य सुस्पष्टतया चलनस्य व्याप्यवृत्तित्वपक्ष एव स्वच्छतया स्वीकर्तुमर्हः ।



# एकत्वसंख्याविमर्शः

एकत्वसंख्या द्विविधा प्रदिष्टा
नित्येषु नित्या कथिता सुधा सा ।
सत्त्वेष्वनित्येषु विभात्यनित्या
प्राचीनतन्त्रे प्रथिता परैव ॥ १ ॥

कुम्भे च कुम्भांशकपालनिष्ठात्
संख्याविशेषाल्लभते स्वसत्त्वम् ।
अशिप्रसूतांशगताच्च तत्त्वात्
साऽनित्यभावं भजते प्रकामम् ॥ २ ॥

अंशस्थसंख्याऽसमवायिहेतुः
कुम्भस्थसंख्याजनने प्रबोध्यः ।
प्राचां विचारः सुधियां नयानां
शास्त्रानुकूलो रमणीयतर्कः ॥ ३ ॥

शिरोमणिः स्वीकुरुते न रम्यं
विचारजातं विमतो मनीषी ।
घटस्य संख्या न कपालनिष्ठाद्
विशेषसंख्याशबलाच्च जाता ॥ ४ ॥

अंशस्थसंख्याऽसमवायिहेतुं
तिरश्चकाराखिलवेद्यवेत्ता ।
द्वित्वादिकानां च कथा तथैव
तिरस्कृता बुद्धिविशारदेन ॥ ५ ॥

प्राचां कथायामनुमानसाध्या
साध्याप्रसिद्ध्या विहता मुधा सा ।
आत्माश्रयोऽपि प्रबलो विभाति
तत्साधके दोषकथाऽकदैव ॥ ६ ॥

अहेतुता भैरवनादकारी
विभीषिका प्राच्यपथे कराला।
प्रयोजकः कोऽपि न भाति हेतु-
स्ततो न पौरस्त्यकथाप्रसङ्गः ॥ ७ ॥

चिन्त्या रघोर्नादविशेषभूति—
र्नभाति तत्रापि महाविभूतिः।
प्राचां कथायामनुमानमेव
प्राच्योक्तसिद्धौ प्रबलं प्रमाणम् ॥ ८ ॥

प्रयोजको हेतुरिह प्रभाति
बुधैकगम्यः सुधियां विचारे।
प्रवुद्धवुद्धेर्विपरीततर्का
शिरोमणेर्भाति न नीतिरेषा ॥ ९ ॥

अंशस्थसंख्याऽसमवायिहेतौ
व्याप्तिर्विचित्रा सबला सतर्का।
कुम्भीयसंख्याऽसमवायिजन्या
बाधा न धत्ते पदमत्र कापि ॥ १० ॥

प्राचां च युक्तौ निरुपाधिकत्वं
प्रयोजकं राजति तत्र हेतौ।
हेयानुमा नास्ति सदानुकूला
ऽव्या विशिष्टा नयपण्डितानाम् ॥ ११ ॥

कुम्भस्थसंख्याऽसमवायिहेतु—
र्बोध्या च सा तत्समवायिनिष्ठा।
संख्येति तज्ज्ञाः प्रवदन्ति सन्तः
श्लाध्यः स यत्नः सुधियां नयानाम् ॥ १२ ॥



# एकत्वविषये दीधितिकृन्मतविमर्शः

एकत्वं संख्याविशेषः, तच्च द्विविधं नित्यमनित्यं च, नित्यद्रव्यनिष्ठमेकत्वं नित्यमनित्यद्रव्यनिष्ठं चानित्यम्। तच्च स्वाश्रयद्रव्यस्यावयवगतैकत्वतो जायते। तथा घटगतमेकत्वं घटावयवकपालयोरेकत्वद्वयाज्जायते। अवयवगतमेकत्वञ्च अवयविगतस्यैकत्वस्यासमवायिकारणम् अवयविगतैकत्वस्य समवायिकारणे अवयविनि स्वसमवायिसमवायसम्बन्धेन विद्यमानत्वाद् अनन्यथासिद्धत्वाच्च।

दीधितिकार[1] अवयविनिष्ठैकत्वे अवयवगतैकत्वजन्यत्वमस्वीकृत्य तस्यासमवायिकारणजन्यत्वं निराकृतवान्। एवं द्वित्वादेरपि स्वाश्रयगतैकत्वजन्यत्वस्याप्रामाणिकत्वेन तस्यापि न असमवायिकारणजन्यत्वमित्यङ्गीचकार।

न च अवयविगतैकत्वादिकमसमवायिकारणजन्यं भावकार्यत्वाद् घटादिवदित्यनुमानमेव अवयविगतैकत्वादेरसमवायिकारणजन्यत्वे मानमिति वाच्यम्, असमवायिकारणजन्यत्वस्यासमवायिकारणत्वावच्छिन्नजनकतानिरूपितजन्यत्वरूपत्वे साध्याप्रसिद्धेः। असमवायिकारणत्वेन जनकताभ्युपगमस्यात्माश्रयदोषेण दुर्घटत्वात्। तथा हि–असमवायिकारणत्वेनाभिमते वस्तुनि विद्यमाना कारणता असमवायिकारणतारूपैव वाच्या, अतस्तस्या असमवायिकारणत्वावच्छिन्नत्वे आत्माश्रयो दुर्निवारः।

यदि च असमवायिकारणजन्यत्वरूपं साध्यम् असमवायिकारणनिष्ठजनकतानिरूपितजन्यत्वरूपं तदा आत्माश्रयदोषाभावेऽपि अन्योन्याश्रयापत्तिरपरिहार्या, यतो हि असमवायिकारणस्य सिद्धावेव जनकतायाम् असमवायिकारणनिष्ठत्वस्य ग्रहणं संभवति, असमवायिकारणसिद्धिश्च असमवायिकारणनिष्ठजनकतानिरूपितजन्यत्वसाध्यकानुमानादेव संभविनी अतोऽन्योन्याश्रयो विस्पष्टः। यदि च असमवायिकारणजन्यत्वरूपं साध्यं समवायस्वसमवायिसमवायान्यतरसम्बन्धावच्छिन्नकारणतानिरूपितकार्यत्वरूपमुपेयते तदा उक्तदोषपरिहारोऽपि अप्रयोजकत्वात् भावकार्यत्वे तादृशकारणतानिरूपितकार्यत्वव्याप्तौ मानाभावात्।

---

१–एकत्वं च न सासमवायिकारणकम् असमवायिकारणत्वेन कारणत्वाभावात्, भावकार्यमात्रस्यासमवायिकारणजन्यत्वे मानाभावात्।
पदार्थतत्त्वनिरूपणे पृ० सं० ३८-३९॥

न च अवयविगतैकत्वादेरसमवायिकारणजन्यत्वानभ्युपगमे अभावत्वापत्तिरसमवायिकारणाजन्यकार्यत्वेऽभावत्वव्याप्तेर्ध्वंसे दृष्टत्वादिति वाच्यम्, समवायिकारणजन्यत्वेन भावत्वसिद्ध्या असमवायिकारणाजन्यकार्यत्वेन अभावत्वानुमितेः प्रतिबन्धसम्भवात् ।

न च समवायिकारणजन्यत्वहेतुना भावकार्यत्वसिद्धौ असमवायिकारणजन्यत्वहेतुकाभावकार्यत्वसाध्यकानुमानेन सत्प्रतिपक्षत्वमिति वाच्यम्, अवयविगतैकत्वादेर्भावत्वस्य प्रत्यक्षसिद्धत्वादतोऽवयविगतैकत्वादेरसमवायिकारणजन्यत्वमयौक्तिकमेव, परं मतमिदं विचारक्षमं न भवितुमर्हति ।

यद् यद् भावकार्यं तत्तद् असमवायिकारणजन्यमिति व्याप्तौ बाधकाभावात् । तत्र यदप्रयोजकत्वमुक्तं तन्न संगच्छते निरुपाधिकत्वस्यैव प्रयोजकत्वात् । अतो भावकार्यत्वे असमवायिकारणजन्यत्वव्याप्तेर्निर्बाधितया भावकार्यत्वहेतुना अवयविगतैकत्वादौ असमवायिकारणजन्यत्वसिद्धिर्दुष्परिहरा । न च तत्र सामान्यतोऽसमवायिकारणजन्यत्वसिद्ध्यापि अवयवगतैकत्वासमवायिकारणकत्वसिद्धौ मानाभावादिति वाच्यम्, अन्यासमवायिकारणजन्यत्वबाधसहकृतेनासमवायिकारणजन्यत्वसाध्यकानुमानेनावयवगतैकत्वासमवायिकारणकत्वसिद्धेर्निष्प्रत्यूहत्वात् ।



## द्रव्यनाशविमर्शः

द्रव्यं द्विधं नित्यमनित्यमेव
तत्रापि कालात्मदिशश्च नित्याः ।
क्षित्यादिकानां परमाणवश्च
नित्यं मनः खं भणितं च तन्त्रे ॥१॥

द्रव्याणि चान्यानि मनोहराणि
नित्यानि नैवाकलितानि तानि ।
नश्यन्ति जायन्त इति ब्रुवन्ति
प्राञ्चो नयज्ञा निजनीतितन्त्रे ॥२॥

द्रव्यस्य नाशोऽसमवायिनाशा-
न्नाशात्कदाचित्समवायिनोऽपि ।
नाशः सदैव द्व्यणुकस्य बोध्यो
नाशे च तस्यासमवायिनोऽत्र ॥३॥

तन्त्वादिकस्योभयथा विनाशो
दृष्टः पदार्थस्य समग्रसृष्टौ ।
प्राचां विमर्शो विमलो विशिष्टो
द्रव्यस्य नाशस्य नयाञ्चितानाम् ॥४॥

द्रव्यस्य नाशोऽसमवायिनाशा-
न्मान्यो न नाशः समवायिनाशात् ।
धृष्टो रघुर्वक्ति विचित्रतर्को
यत्ने सतर्कः प्रबलो मनीषी ॥५॥

कदापि बोध्यः समवायिनो न
नित्यस्य नाशः परमाणुमूर्त्तेः ।
अतो न हेतुः समवायिनाशो
गीतश्च शास्त्रे द्व्यणुकस्य नाशे ॥६॥

दृष्टो हि जन्यस्य विचित्रमूर्त्तेः
सत्त्वस्य कुत्राप्यपरो विधिर्न ।
सर्वत्र नाशोऽसमवायिनाशो
हेतुर्न बोध्यः समवायिनाशः ॥७॥

घटादिनाशः समवायिसत्त्वे
बहुत्र दृष्टो व्यवहारकाले ।
अतश्च नाशोऽसमवायिनाशाद्
विधा न वैधी समवायिनाशात् ॥८॥

क्षणद्वयस्याश्रयहीनताऽत्र
पतिष्यमाणा न निवारणीया ।
निसर्गसिद्धा प्रतिभाविरुद्धा
रघूक्तपक्षे प्रबला विपत्तिः ॥९॥

प्राचां च पक्षे समवायिनाशे
द्रव्यस्य नाशेऽपि विपत्तिसत्ता ।
आधारहीनं च पदार्थसत्त्वं
मान्यं क्षणैकं न निवारणीयम् ॥१०॥

पक्षद्वयेऽप्याश्रयहीनतायाः
साम्येऽपि बोध्या गुरुताधमा क्व ।
बोध्या रघूक्तौ द्विगुणक्षणानां
सोढव्यसाध्या गुरुता स्फुटैव ॥१०॥

सर्वत्र नाशोऽसमवायिनाशा-
ज्जन्यस्य सत्त्वस्य रघूक्तिरेषा ।
दुष्टा न मान्यानुभवानधीना
लोके सदोषा प्रबलाबलेव ॥१२॥



## द्रव्यनाशकविषये दीधितिकृन्मतविमर्शः

न्यायवैशेषिकमते द्रव्यं द्विविधं नित्यमनित्यं च। पृथिव्यप्तेजोवायूनां परमाणवो गगनकालदिगात्ममनांसि च नित्यानि। द्व्यणुकादारभ्य सर्वं पृथिव्यादिद्रव्यं कार्यं नश्वरञ्च। तत्र जन्यद्रव्यस्य नाशः प्राचीननैयायिकैर्द्विधाभ्युपगतः, क्वचित्समवायिकारणनाशात् क्वचिच्चासमवायिकारणनाशात्। द्व्यणुकानां नाशोऽणुद्वयसंयोगस्यासमवायिकारणस्य नाशादेव जायते। तत्समवायिकारणस्य परमाणोर्नाशासम्भवात्।

घटादीनां नाश उभयथा भवति, यत्र कपालनाशात्कपालद्वयसंयोगनाशस्तत्र कपालद्वयसंयोगनाशकाले एव जायमानो घटनाशः समवायिकारणस्य कपालस्य नाशाज्जायते। यदा च सतोरेव कपालयोर्विभागात्संयोगनाशो भवति तदा कपालयोः सत्त्वे एव जायमानो घटनाशः कपालद्वयसंयोगरूपस्यासमवायिकारणस्य नाशाज्जायते।

न च जन्यद्रव्यनाशं प्रति परस्परं निरपेक्षयोः समवायिकारणासमवायिकारणनाशयोः कारणत्वोपगमे एकजन्यजन्यद्रव्यनाशं प्रति अपरस्य व्यतिरेकव्यभिचारेण जन्यद्रव्यनाशस्योक्तोभयजन्यत्वमसंगतमिति वाच्यं कार्यतावच्छेदककोटौ तत्तन्नाशाव्यवहितोत्तरत्वप्रवेशेन व्यभिचारवारणसंभवात्।

दीधितिकारः[१] समवायिकारणनाशस्य द्रव्यनाशकत्वमनभ्युपगम्यासमवायिकारणनाशस्यैव द्रव्यनाशकत्वं मन्यते। तस्यायमाशयः—यद् द्व्यणुकनाशं प्रति असमवायिकारणनाशस्यैव कारणत्वमवश्यं मन्तव्यं तत्र समवायिकारणनाशस्यासम्भवात्। अतः सर्वत्र असमवायिकारणनाशस्यैव जन्यद्रव्यनाशकत्वं मन्तव्यम्। किं च घटादीनां नाशोऽपि अनेकदा कपालद्वयसत्त्वे एव कपालद्वयसंयोगनाशादेव जायते। अतस्तदनुरोधेनापि असमवायिकारणनाशस्यैव जन्यद्रव्यनाशकत्वमुचितम्।

न चासमवायिकारणनाशस्य द्रव्यनाशजनकत्वे गौरवं यतो हि—प्रतियोगितासम्बन्धेन जन्यद्रव्यनाशं प्रति असमवायिकारणनाशस्य स्वप्रतियोगिसमवायिसमवेत-

---

१—द्रव्यनाशे च सर्वत्रासमवायिकारणनाश एव कारणं नित्यसमवेतद्रव्यनाशे क्लृप्तत्वात्। पदार्थतत्त्वनिरूपणे पृ० सं० ३९-४०।

द्रव्यत्वसम्बन्धेन कारणत्वं कल्पनीयम्। समवायिकारणनाशस्य च स्वप्रतियोगिसमवेतत्वसम्बन्धेनैव कारणत्वं कल्पनीयमतः समवायिकारणनाशस्य जन्यद्रव्यनाशजनकत्वापेक्षया असमवायिकारणनाशस्य जन्यद्रव्यनाशकत्वपक्षे गौरवं सुस्पष्टमतो द्वचणुकस्यैव नाशं प्रति असमवायिकारणनाशस्यागत्या कारणत्वं कल्पनीयम्, स्थूलद्रव्यनाशं प्रति च समवायिकारणनाशस्यैव लाघवात् कारणत्वं कल्पनीयमिति वाच्यं कपालद्वयसत्त्वे कपालद्वयसंयोगनाशाद् घटनाशस्थले स्थूलद्रव्यनाशं प्रत्यपि असमवायिकारणनाशस्य कारणत्वकल्पनस्यावश्यकतयोक्तदोषोद्भावनस्यासंगतत्वात्।

किं च समवायिकारणनाशस्य स्वप्रतियोगिसमवेतत्वसम्बन्धेन कारणतायाः कल्पनमप्यसंभवं समवायिकारणनाशदशायां स्वप्रतियोगिसमवेतत्वस्य जन्यद्रव्ये दुर्घटत्वात्। किं च समवायिकारणनाशस्थलेऽपि असमवायिकारणनाशस्यावश्यकतया सर्वत्र तस्यैव जन्यद्रव्यनाशं प्रति कारणत्वमुचितमन्यथा समवायिकारणासमवायिकारणनाशयोः कार्यतावच्छेदककोटौ तत्तद्व्यवहितोत्तरत्वप्रवेशेन गौरवात्।

परं दीधितिकारस्य मतमिदं विचार्यमाणं सत् प्रतिष्ठां न प्राप्तुमर्हति, असमवायिकारणनाशस्यैव जन्यद्रव्यनाशकत्वाभ्युपगमे समवायिकारणनाशादसमवायिकारणनाशस्थले जन्यद्रव्यस्य क्षणद्वयमाश्रयं विना अवस्थितेरभ्युपगमापत्तेः।

न च समवायिकारणनाशाज्जन्यद्रव्यनाशस्य स्वीकारपक्षेऽपि क्षणैकमाश्रयं विना जन्यद्रव्यस्यास्तित्वाभ्युपगमोऽनिवार्य एवेति वाच्यम्, एकस्य क्षणस्यातिसूक्ष्मतया तन्मात्रं निराश्रयस्य जन्यद्रव्यस्यास्तित्वसंभवेऽपि ततो द्विगुणकालं क्षणद्वयं यावन्निराश्रयद्रव्यस्यास्तितताया अनुभवविरुद्धत्वात्। घटादिगतैकत्वपरिमाणादीनां घटादिनाशादेव नाश्यमानतया तस्य क्षणैकमाश्रयं विना अस्तित्वाभ्युपगमस्यापरिहार्यतया समवायिकारणनाशनाश्यस्य जन्यद्रव्यस्यापि क्षणैकं निराश्रयसत्त्वाभ्युपगमे विरोधाभावात्। जन्यद्रव्यनाशस्य समवायिकारणासमवायिकारणनाशाभ्यां परस्परनिरपेक्षाभ्यां जन्यत्वोपगमे व्यभिचारवारणाय कार्यतावच्छेदककोटौ तत्तन्नाशाव्यवहितोत्तरत्वनिवेशप्रयुक्तं यद् गौरवं विभाव्यते तन्न सम्यक्; असमवायिकारणनाशस्य समवायिकारणनिष्ठप्रत्यासत्त्या द्रव्यनाशं प्रति कारणत्वात्। समवायिकारणनाशस्य च कालनिष्ठप्रत्यासत्त्या कारणत्वोपगमात्।

अयमाशयः—यदा यत्किञ्चिदेककार्यं प्रति परस्परनिरपेक्षयोर्द्वयोः कार्योत्पत्तिमदेकदेशनिष्ठप्रत्यासत्त्या कारणत्वं भवति तदैव एकेन कार्यजननदशायामपरस्य व्यतिरेकव्यभिचारो भवति किन्तु यदि परस्परनिरपेक्षयोर्द्वयोरेककार्यं प्रति विभिन्नदेशनिष्ठप्रत्यासत्त्या कारणत्वं भवति तदा व्यभिचारो न भवितुमर्हति।

न च यदा कपालद्वयसत्त्वे एव कपालद्वयसंयोगनाशाद्घटनाशः कपालयोरुत्पद्यते तदा स नूनं कालेऽपि उत्पद्यत एव किन्तु तत्र घटसमवायिकारणीभूतकपालनाशः कालिकसम्बन्धेन नास्ति, अतः कालिकसम्बन्धेन जन्यद्रव्यनाशं प्रति कालिकसम्बन्धेन समवायिकारणनाशस्य कारणत्वोपगमेऽपि व्यभिचारो दुर्निवार इति वाच्यम्, कपालनाशाभावदशायां कपालद्वयसंयोगनाशाज्जायमानस्य घटनाशस्य कपालयोरेवोत्पत्तेरभ्युपगमेन काले तदनभ्युपगमात् ।

न चैवं तदानीं काले घटनाशानुत्पत्तौ इदानीं घटो नष्ट इति व्यवहारो न स्यादिति वाच्यं तदानीं काले घटनाशस्यानुत्पादेऽपि तत्सम्बन्धमात्रेण तत्प्रतीतेरुपपत्तिसंभवात् । यथा कपालयोरुत्पन्नस्य घटस्योत्पत्तिकाले कपालसंयुक्तभूतलखण्डाद् दूरस्थे भूतलखण्डे अनुत्पद्यमानस्यापि घटस्य संयोगसम्बन्धोत्पत्त्या तत्र भूतले घटवत्त्वव्यवहारो जायते तथैव कपालद्वयसंयोगनाशादुत्पन्नस्य घटनाशस्य काले उत्पत्तेरनभ्युपगमेऽपि कालिकसम्बन्धसंभवेन काले तत्प्रतीतिरुपपत्तुमर्हतीत्याशयः ।

तदेवं समवायिकारणनाशस्य कार्यद्रव्यनाशं प्रति जनकत्वे दोषाभावेन समवायिकारणनाशोत्तरम् असमवायिकारणनाशादुत्पद्यमानस्य नाशस्य प्रतियोगिनो घटादेः क्षणद्वयमनुभवविरुद्धस्याभ्युपमप्रसङ्गाच्चासमवायिकारणनाशादेव सर्वत्र द्रव्यनाश इति दीधितिकृन्मतं न समीचीनम् ।



## वायोर्विमर्शः

उद्भूतरूपविरही प्रबलोऽपि गन्ता
प्रत्यक्षतां प्रणुदितोऽपि न याति वायुः ।
तस्यास्तितानुमितिबोधमपेक्षमाणा
संजीवयत्यखिलसृष्टिचराचरांश्च ॥ १ ॥

सामग्र्यभावसबलं प्रतिबन्धकं च
त्वाचं च तस्य नितरां विनिहन्ति बोधम् ।
पौरस्त्यतन्त्रनिवहं परिशीलयन्तो
जानन्ति शास्त्ररसिका रमणीयरीतिम् ॥ २ ॥

ब्रूते मनीषी विपरीततर्क-
स्तर्कं रघुः पक्षधरो नवीनः ।
प्रत्यक्षमत्राखिललोकगन्तु-
र्वायोर्न मान्यो विपरीतपक्षः ॥ ३ ॥

तच्चाक्षुषं नास्ति मतं प्रमाणं
त्वाचं तु तन्नास्य कदापि हेयम् ।
त्वाचस्य तस्यात्र कथा विचित्रा
रूपञ्च तत्रेति न हातुमर्हा ॥ ४ ॥

स्पर्शस्य सत्त्वे प्रबला न बाधा
सत्त्वे च हेतौ न विरोधसत्ता ।
रोद्धुं न शक्ता विधवेव दीना
त्वाचं च वायोर्न विहन्तुमर्हम् ॥ ५ ॥

दोषैरनेकैर्विहतोऽप्यमत्र
पक्षो रघोर्भाति विषात्तकायः ।
प्राचीनपक्षः सबलः सतर्को
मान्यो न हेयः प्रतिभाधनानाम् ॥ ६ ॥

उद्भूतरूपं सुधियो विदन्ति
वाह्याक्षजद्रव्यमतौ प्रहेतुम् ।
रूपं यतो भाति न तत्र तादृक्
प्रत्यक्षवायुस्तत एव नास्ति ॥ ७ ॥



## वायोः प्रत्यक्षाप्रत्यक्षत्वविषये दीधितिकृन्मतविमर्शः

प्राचीननैयायिकैर्बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपस्य कारणत्वमभ्युपेत्य वायोरप्रत्यक्षत्वं मन्यते। ननु रूपरहितत्वाद् वायोर्बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं न स्यात् त्वाचप्रत्यक्षं तु स्यादेव त्वाचप्रत्यक्षं प्रति उद्भूतस्पर्शस्य कारणत्वादिति चेन्न, बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वस्य त्वाचप्रत्यक्षत्वव्याप्यतया तदवच्छिन्नोत्पादकसामग्र्यभावे त्वाचप्रत्यक्षत्वावच्छिन्नस्यापत्तिसंभवात्। व्याप्यधर्मावच्छिन्नकार्यजनने व्यापकधर्मावच्छिन्नकार्योत्पादकसामग्र्या अवश्यमपेक्षणीयत्वात्, अन्यथा व्याप्यतावच्छेदकावच्छिन्नसामग्रीमात्रजन्ये कार्ये व्यापकतावच्छेदकधर्मस्याप्रसिद्ध्या व्याप्यव्यापकभाव एव भज्यते।

नच द्रव्यचाक्षुषं प्रति रूपं कारण द्रव्यस्पार्शनं प्रति च स्पर्शः कारणमिति लघुभूतकार्यकारणभावद्वयमेव स्वीकार्यं बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति उद्भूतरूपस्य कारणत्वं नाङ्गीकार्यमिति कल्पनेऽपि त्रसरेणोः स्पार्शनप्रत्यक्षापत्तिवारणाय त्वाचप्रत्यक्षं प्रति उद्भूतस्पर्शस्य कारणत्वान्तरकल्पनाया आवश्यकतया तत्पक्षे गौरवस्य स्फुटत्वादिति वाच्यम्, आकाशादेर्बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षाभावप्रयोजकत्वेन रूपाभावस्य कल्पनाया आवश्यकतया तदुपपत्तये बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपस्य कारणत्वकल्पनाया आवश्यकत्वात्। अन्यथा तदभावस्य बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षाभावप्रयोजकतायाः संभवात्, कारणाभावस्यैव कार्याभावप्रयोजकतायाः क्लृप्तत्वात्।

दीधितिकारस्तु[१] द्रव्यचाक्षुषे एव रूपस्य कारणतामङ्गीकुरुते। द्रव्यस्पार्शने तु स्पर्श एव तन्मते कारणम्, बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रे न किमपि कारण-

---

१–द्रव्यस्पार्शनप्रत्यक्षे स्पर्शवत्त्वमेव प्रयोजकम्। अत एव शीतो वायुरित्यादिप्रत्ययोऽपि स्पार्शनः साधु सङ्गच्छते।

त्रुटेरस्पार्शनत्वे तु प्रकृष्टतमं परिमाणमपि तथा। गौरवान्मानाभावात् त्वग्व्यापारानन्तरं वायुर्वातीति सार्वलौकिकप्रत्यक्षस्यान्यथानुपपत्त्या च रूपं तत्र न निवेशनीयम्। फूत्कारादौ च स्फुटतरप्रत्यक्षाः संख्यादयः।

चाक्षुषद्रव्यप्रत्यक्षे रूपं तथा गौरवान्मानाभावाच्च निःस्पर्शायामपि प्रभायां चलनादिप्रत्ययाच्च।

मतस्तन्नये वायोः प्रत्यक्षत्वं निर्बाधम्। न चैवमेतन्मते बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमाकाशादेः कुतो न भवतीति सन्देहे रूपाभावस्पर्शाभावोभयोर्बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षाभावं प्रति प्रयोजकत्वमत्रलभ्योक्ताभावद्वयस्य तादृशप्रत्यक्षाभावप्रयोजकत्वमिति वक्तव्यमित्येवमेतत्पक्षे गौरवं दुर्निवारमिति वाच्यं बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वस्य प्रयोजकत्वमभ्युपेत्य तदभावस्यैव तादृशप्रत्यक्षाभावं प्रति प्रयोजकत्वकल्पनयोक्तदोषाभावात्।

किन्तु दीधितिकृतो मतमेतदालोच्यमानं नौचित्यमञ्चति, कार्योत्पत्तौ कारणसामग्र्या एव प्रयोजकतया आत्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वस्य बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षरूपकार्यप्रयोजकताया असिद्धतया तदभावस्य तादृशप्रत्यक्षाभावं प्रति प्रयोजकत्वासंभवात्।

न च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे आत्मावृत्तिशब्दभिन्नविशेषगुणत्वेन कारणत्वकल्पनया नैष दोषस्तत्र कारणतावच्छेदककोटौ आत्मावृत्तित्वम् आत्मनस्तादृशप्रत्यक्षत्वापत्तिवारणाय, शब्दभिन्नत्वं चाकाशस्य तादृशप्रत्यक्षापत्तिवारणाय, गुणे विशेषत्वं च कालादेस्तादृशप्रत्यक्षापत्तिवारणाय प्रविष्टम्, तेन च तादृशप्रत्यक्षे आत्मावृत्तिशब्दभिन्नविशेषगुणस्य कारणत्वाभ्युपगमेन तादृशगुणाभावस्य तादृशप्रत्यक्षाभावप्रयोजकत्वं निर्बाधमिति वाच्यम्, आत्मावृत्तिशब्दभिन्नविशेषगुणत्वेन तादृशप्रत्यक्षं प्रति कारणत्वकल्पने गन्धरसादीनामपि बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति कारणत्वापत्तेः।

किं च विशेषगुणत्वं तद्गुणान्यतमत्वरूपमेव वाच्यं तत्तद्गुणान्यतमत्वं च तत्तद्गुणभेदकूटावच्छिन्नप्रतियोगिताकभेदरूपं, भेदकूटं च एकभेदविशिष्टापरभेदत्वेनैव निवेश्यं

---

स्पर्शोऽपि न तथा। द्रव्यस्य समवेतेन्द्रियजन्यप्रत्यक्षे तु अनात्मसमवेतशब्दरसगन्धजातीतरयोग्यधर्मसमवायित्वं तथा।

सुखादिसमवायिकारणतावच्छेदकत्वेन सिद्धमात्मत्वं जातिर्नेश्वर इति। तदीयज्ञानादिपिशाचादिसंयोगवारणाय योग्येति। विषयिधर्मासमानाधिकरणेत्यभिधाने तु शब्दो नोपादेयः।

अस्मदादिनयनसंसृष्टपित्तद्रव्यस्य परिमाणशून्यता परिमाणवत्त्वमते तु तादृशप्रत्यक्षे परिमाणवत्त्वमेव तथा। यद्वा नयनसंसृष्टपित्तद्रव्यं नीरूपमेव। अन्यथा पुरुषान्तरेण पीतिमोपलम्भापत्तिः। स्मर्यमाणस्तु पीतिमा दोषवशाच्छङ्खादावारोप्यत इति। द्रव्यं प्रत्यक्षे च शब्दरसगन्धजातीतरयोग्यधर्मसमवायित्वं तथा। रसनगतं च पित्तद्रव्यं न रूपपत्न वा स्पर्शवद्, रसना च न द्रव्यग्राहिकेति न तत् प्रत्यक्षम्। एतेन वायूपनीतसुरभिचम्पकभागोऽपि व्याख्यातः। पदार्थतत्त्वनिरूपणे पृ० सं० ४१–४७।

तथा च कूटघटकानां भेदानां विशेष्यविशेषणभावे विनिगमनाविरहेण महागौरवमेवम् आत्मावृत्तित्वमपि तत्तदात्मवृत्तित्वाभावम् आत्मवृत्तित्वघटोभयाभावं चादाय आत्मवृत्तिगुणेष्वपि आत्मावृत्तित्वप्रसक्त्या परिष्कृतम् आत्मावृत्तित्वम् ।

एवं तत्तच्छब्दभेदं शब्दघटोभयभेदं चादाय शब्दे शब्दभिन्नत्वप्रसक्त्या परिष्कृतमेव शब्दभिन्नत्वं निवेशनीयमित्येवमपि महद् गौरवम्, एवमात्मवृत्तित्वशब्दभिन्नत्वयोरेकविशिष्टापरत्वेनैव निवेशः कार्य इति तयोर्विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तमपि गौरवं विद्यत एव ।

अतो बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे आत्मावृत्तिशब्दभिन्नविशेषगुणत्वेन गुरुभूतायाः कारणतायाः कल्पनापेक्षया रूपत्वेन कारणताकल्पनमेव लाघवादुचितम् । न च वायोर्बहिरिन्द्रियजन्यप्रत्यक्षतायाः सन्दिग्धतया रूपे बहिरिन्द्रियजन्यप्रत्यक्षव्यभिचारस्य सन्देहेन रूपे बहिरिन्द्रियजन्यप्रत्यक्षकारणताया निर्णयो दुर्घट इति वाच्यम्, आत्मावृत्तिशब्दभिन्नविशेषगुणत्वेन कारणत्वकल्पनापेक्षया रूपत्वेन उद्भूतरूपत्वेन वा तादृशप्रत्यक्षं प्रति कारणत्वकल्पनायां लाघवमित्येवं लाघवज्ञानरूपतर्कस्य सत्वेनोक्तव्यभिचारसन्देहस्य प्रतिबन्धकत्वासम्भवात् तर्कासहकृतव्यभिचारज्ञानस्यैव कारणतानिश्चयं प्रति प्रतिबन्धकत्वात् ।

ननु बाहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपस्येव उद्भूतस्पर्शस्यापि विनिगमनाविरहेण कारणत्वं संभवति अत ईदृशकार्यकारणभावमभ्युपेत्य वायोरिव प्रभाया अपि अप्रत्यक्षत्वं स्वीकार्यमिति चेन्न, उपरिदेशे विहङ्गम इत्यादिप्रत्यक्षप्रतीतौ उपरिदेशतया प्रभाया भानस्य निर्विवादत्वेन प्रभाया अप्रत्यक्षत्वस्य स्वीकर्तुमशक्यत्वात् । तदेवमुक्तरीत्या विचारे कृते वायोरप्रत्यक्षत्वस्योपपत्त्या दीधितिकृतो वायोः प्रत्यक्षत्ववादो नितान्तमुपहसनीय एव ।

यत्तु दीधितिकृता इदमुक्तं यच्छीतो वायुरित्याकारके स्पार्शनप्रत्यक्षे वायोर्भानानुरोधेन तस्य स्पार्शनप्रत्यक्षविषयत्वमभ्युपेयमिति बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे रूपस्य कारणत्वमसदुक्तिकमेव ततुच्छं वायोरप्रत्यक्षत्वेऽपि ज्ञानलक्षणप्रत्यासत्त्योक्तप्रत्यक्षे वायोर्भानसंभवात् ।

अयमाशयः—यदा मनुष्येण शीतस्पर्शः प्रत्यक्षीक्रियते तदानुभूयमानः शीतस्पर्शः क्वचिदाश्रितो गुणत्वादित्यनुमानेन शीतस्पर्शे वायुभिन्नसमवेतत्वाभावनिश्चयसहकृतेनानुभूयमानशीतस्पर्शाश्रयतया वायुरनुमीयतेऽनुमित्यनन्तरं शीतो वायुरिति प्रत्ययो जायते । अतस्तत्रानुमित्यात्मकज्ञानलक्षणप्रत्यासत्या वायोर्भानं भवति, वायुर्वातीति प्रत्यक्षमपि वायोः प्रत्यक्षत्वव्यवस्थापकं न भवितुमर्हति वृक्षादेः पत्रादौ चलनक्रियायां दृष्टायां तत्कारणतया तत्र स्पर्शवद्वेगवद्द्रव्याभिघातजन्यत्वमनुमीयते, तच्च द्रव्यं

द्रव्यान्तरबाधात् वायुरूपमेव । तत्र च वेगेन गतिरप्यनुमीयतेऽतो वायोर्गतेरुभयोरेवानु-मित्यात्मकज्ञानसत्त्वेन ज्ञानलक्षणप्रत्यासत्त्यैव वायुर्वातीति प्रत्यक्षं जायते, तच्च प्रत्यक्षं विशेष्यविशेषणोभयांशेऽलौकिकमेवातस्तद्बलेन वायोर्लौकिकप्रत्यक्षविषयत्वसाधनं दुर्घटमतो वायोः स्पार्शनप्रत्यक्षसमर्थनार्थं दीधितिकृता क्रियमाणः प्रयासो नितरामसंगत एव ।

न च ज्ञानलक्षणायां प्रत्यासत्तौ उक्तरीत्या शीतो वायुर्वातीत्यादिप्रत्यक्षेषु वायोर्भानोपपादनस्य दुष्करतया तस्य लौकिकस्पार्शनप्रत्यक्षविषयत्वमवश्यमभ्युपेय-मेवेति वाच्यं ज्ञानलक्षणप्रत्यासत्तोरनभ्युपगमे शुक्त्यादौ रजतत्वभ्रमस्योपपाद-यितुमशक्यत्वात् ।

अयमाशयः—शुक्तिखण्डे सौरातपमध्यवर्तिनि शुक्तित्वपरिचायकाभावदशायां रजतत्वबुद्धिर्जायते, सा च रजतत्वाभाववति रजतत्वप्रकारकतया भ्रमात्मकप्रत्यक्षरूपा, प्रत्यक्षे चेन्द्रियसन्निकृष्टस्यैवार्थस्य भानमितिनियमः, अतो रजतत्वेन सह तदानीं चक्षुषः काचन प्रत्यासत्तिर्न स्यात्तदा तदानीं जायमान इदंत्वेन शुक्तिप्रत्यक्षे रजतत्वस्य भानं न स्यात् क्लृप्तस्य चक्षुःसन्निकर्षस्य रजतत्वेऽभावात् ।

यदा च ज्ञानस्य प्रत्यासत्तित्वमभ्युपेयते तदा तत्र शुक्तौ रजतस्य चाक-चिक्यदर्शनेनोद्बोधिताद् रजत्वप्रकारकसंस्काराद् रजतत्वस्य स्मृतेरुत्पत्त्यनन्तरमेवोक्त-भ्रमात्मकप्रत्यक्षस्यानुभूयमानतया रजतत्वेन सह चक्षुषो रजतत्वस्मरणात्मकज्ञानलक्षण-प्रत्यासत्तिसंभवेनोक्तप्रत्यक्षे रजतत्वस्य भानं संभवति, तदेवं लौकिकसन्निकर्षविधुरस्य वस्तुनो भ्रमात्मकप्रत्यक्षानुरोधेन ज्ञानलक्षणा प्रत्यासत्तिरवश्यमभ्युपगन्तव्या ।

ननु ज्ञानलक्षणप्रत्यासत्त्यभ्युपगमेऽनुमितिशाब्दबोधादेर्लोपः स्यात् पर्वतो वह्नि-मान् धूमादित्यत्र पर्वतो वह्निव्याप्यधूमवानितिपरामर्शदशायां वह्निपर्वतयोरुभयो-र्ज्ञानसत्त्वेन ज्ञानलक्षणप्रत्यासत्त्या पर्वतो वह्निमानित्याकारकस्यालौकिकप्रत्यक्षस्य संभवादिति चेन्न, पर्वतो वह्निव्याप्यधूमवानितिपरामर्शानन्तरं जायमानायाः पर्वतो वह्निमानित्याकारकानुमितेर्धाराया अननुभवेन तस्यां प्रत्यक्षरूपत्वाभ्युपगमासंभवात् ।

अयमाशयः—पर्वतो वह्निमानित्याकारिका या प्रत्यक्षात्मिका बुद्धिस्तस्या धारा तावज्जायते यावत्तादृशप्रत्यक्षस्य कारणमनुवर्तते । परन्तु पर्वतो वह्निव्याप्यधूमवानि-त्याकारकनिश्चयानन्तरं जायमानायाः पर्वतो वह्निमानित्याकारकबुद्धेर्धाराया उदयो नानुभूयतेऽतस्तद्बुद्धेः प्रत्यक्षविजातीयत्वमवश्यमङ्गीकार्यं तथा चानुमितिं प्रति सिद्धेः प्रतिबन्धकतया तत्कारणीभूतस्य परामर्शस्य चोत्तरक्षणे नष्टतया कारणाभावेन तत्र तादृगबुद्धिधाराया अभाव उपपद्यते ।

यदि सा बुद्धिरलौकिकप्रत्यक्षरूपा स्यात्तदा अलौकिकप्रत्यक्षे समानाकारकनिश्चयप्रतिबन्धकतया तत्कारणीभूतज्ञानलक्षणप्रत्यासत्तेश्चाक्षुण्णतया तत्र तादृशज्ञानधाराया अभावो नैवोपपद्येत। न चानुमित्यनन्तरमनुमितिर्न स्याद् ज्ञानलक्षणायाः प्रत्यासत्तित्वेऽनुमितिसमानाकारकस्य अलौकिकप्रत्यक्षस्योपपत्तेरपरिहार्यतया अनुमित्यनन्तरं तत्समानाकारकज्ञानधाराया आपत्तिर्दुष्परिहरेति वाच्यम्, उक्तरीत्या परामर्शानन्तर जायमानाया बुद्धेः प्रत्यक्षविलक्षणत्वसिद्धया तत्सामग्र्यास्तस्याश्च लौकिकान्यप्रत्यक्षत्वावच्छिन्नं प्रति प्रतिबन्धकत्वकल्पनयोक्तापत्त्यभावात्।

तदेवं ज्ञानलक्षणप्रत्यासत्तेरावश्यकतया तत्कल्पनाया निर्दोषतया च तद्बलेन शीतो वायुः, वायुर्वातीत्यादिप्रत्ययस्योपपत्तिसंभवेन तदनुरोधाद् वायोर्लौकिकस्पार्शनप्रत्यक्षविषयताया उपपादनमसम्भवमेव। न च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वं मनोभिन्नेन्द्रियजन्यद्रव्यप्रत्यक्षत्वरूपमेव, तत्कुक्षौ च मनोभेदानुयोगितावच्छेदकतयेन्द्रियत्वं प्रविष्टमिन्द्रियत्वं च शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वरूप तथा च कार्यतावच्छेदकस्य तद्घटितत्वे महागौरवमतो मानसान्यद्रव्यप्रत्यक्षत्वस्य कार्यतावच्छेदकत्वं मन्तव्यमेवञ्च द्रव्यप्रत्यक्षे मानसान्यत्वं निवेश्यम् उत द्रव्ये आत्मभिन्नत्वं निवेश्यमित्यत्र विनिगमनाविरहेण आत्मभिन्नद्रव्यप्रत्यक्षे मानसान्यद्रव्यप्रत्यक्षे च रूपस्य कारणताद्वयं मन्तव्यमिति आकाशादेर्बहिःप्रत्यक्षाभावप्रयोजकत्वं गुरुतरस्याभावद्वयस्य मन्तव्यं स्यात्तथा च चाक्षुषद्रव्यप्रत्यक्षे रूपं कारणम्, द्रव्यस्पार्शनप्रत्यक्षे च स्पर्शः कारणमिति कार्यकारणभावद्वयमेव लाघवात्कल्पनीयमतो वायोः स्पार्शनप्रत्यक्षं दुर्निवारमिति वाच्यम्, मानसान्यत्वस्य द्रव्यप्रत्यक्षे निवेशे कृते मानसान्यत्वद्रव्यविषयकत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण मानसान्यत्वविशिष्टद्रव्यविषयकत्ववत्प्रत्यक्षत्वेन द्रव्यविषयकत्वविशिष्टमानसान्यत्वत्वप्रत्यक्षत्वेन च कार्यतायाः कल्पनीयतया कार्यकारणभावद्वयमापद्येत अतस्तदपेक्षया द्रव्ये आत्मभिन्नत्वं निवेश्य आत्मभिन्नद्रव्यविषयकप्रत्यक्षत्वावच्छिन्नं प्रति रूपस्य एकस्या एव कारणतायाः कल्पनेनोक्तदोषाभावात्।

न चैवं मानसान्यत्वमपि द्रव्य एव निवेश्यमिति नोक्तदोष इति वाच्यम्, द्रव्ये निवेशनीयस्य मानसान्यत्वस्य मानसप्रत्यक्षविषयान्यत्वरूपस्य वक्तव्यतया गौरवापत्तेः। ननु आत्मभिन्नत्वमपि ज्ञानादिमद्भिन्नत्वरूपमेव वाच्यं न तु आत्मत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपम् आत्मत्वजातौ मानाभावात्, तथा च मानसप्रत्यक्षविषयान्यत्वनिवेशापेक्षया आत्मभिन्नत्वनिवेशे लाघवाभावेन कारणतावच्छेदककोटौ द्रव्यांशे शब्दभिन्नत्वमानसान्यत्वयोर्निवेशे विनिगमनाविरहः।

न च आत्मभिन्ने सुखाद्यापत्तिवारणाय सुखादिकं प्रति आत्मनःसमवायिकारणताया आवश्यकतया सुखादिसमवायिकारणतावच्छेदकत्वेन आत्मत्वजातिसिद्धि-

निष्प्रत्यूहेति वाच्यम्, सुखादिकं प्रति कारणीभूतस्य धर्मादेरभावादेव आत्मभिन्नेषु सुखाद्यापत्तिवारणसंभवात्। न च धर्म एव अनात्मनि कुतो नोत्पद्यत इति वाच्यम्, धर्मं प्रति विहितकर्मणः स्वानुकूलकृतिमत्त्वसम्बन्धेन कारणतया तत्सम्बन्धेन तस्य अनात्मनि अभावात्।

न च यागाद्यनुकूला कृतिरेव आत्मनि कुतो नोत्पद्यत इति वाच्यम्, तादृशकृतिं प्रति कारणीभूताया इच्छायास्तत्कारणीभूतस्य ज्ञानस्य च अनात्मनि अभावात्।

न च ज्ञानमेव अनात्मनि कुतो नोत्पद्यत इति शंक्यं ज्ञानं प्रति मनःप्रतियोगिकत्वविशिष्टविजातीयसंयोगस्य समवायसम्बन्धेन कारणत्वाभ्युपगमात्। न च मनःसंयोगगते वैजात्ये मानाभाव इति वाच्यम्, ज्ञानाद्यसमवायिकारणतावच्छेदकतया तत्सिद्धेः। विजातीयो मनःप्रतियोगिकत्वविशिष्टसंयोगो मुक्तजीवेषु ईश्वरे संसारिजीवभिन्ने च न समवैतीति न तेषु ज्ञानाद्युत्पत्तिप्रसंगः। तथा च आत्मत्वजातिसिद्धेर्निर्युक्तिकतया ज्ञानादिमद्भेदत्वेनैव अनात्मतत्त्वस्य प्रवेशनीयत्वेनोक्तविनिगमनाविरहो दुर्निवार इति वाच्यम्, आत्मपदप्रवृत्तिनिमित्ततया आत्मत्वजातिसिद्धेरपरिहार्यत्वात्।

तत्साधकानुमानप्रयोगश्च इत्थम्-आत्मपदं सप्रवृत्तिनिमित्तकं साधुपदत्वाद् गवादिपदवदित्यनेनानुमानेन आत्मपदस्य जातिप्रवृत्तिनिमित्तकत्वे लाघवमित्याकारकलाघवज्ञानतर्कसहकृतेन आत्मपदे जातिप्रवृत्तिनिमित्तकत्वं साध्यते। एतत्तरजातिप्रवृत्तिनिमित्तकत्वबाधसहकृतेनानेनैवानुमानेन आत्मपदस्य द्रव्यत्वपृथिवीत्वाद्यतिरिक्तजातिप्रवृत्तिनिमित्तकत्वं साध्यते, एवं भूता जातिरेव आत्मत्वमित्युच्यते, तदेवम् आत्मत्वजातेः प्रामाणिकतया तदवच्छिन्नप्रतियोगिताकभेदरूपस्य अनात्मत्वस्य मानसप्रत्यक्षविषयान्यत्वापेक्षया लघुतरस्य प्रत्यक्षनिरूपकार्यतावच्छेदककुक्षौ द्रव्यांशे निवेशस्य विनिगमकयोग्यत्वेनोक्तस्य विनिगमनाविरहप्रसंगस्य दुर्घटत्वात्।

यत्तु दीधितिकृता आकाशादौ बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षाभावं प्रति एकप्रयोजकस्यापपत्तये समवेतेन्द्रियद्रव्यप्रत्यक्षे अनात्मसमवेतशब्दरसगन्धजातीतरयोग्यधर्मसमवायित्वस्य कारणत्वमुक्तं तन्न समीचीनं कारणशरीरे शब्दादिभिन्नसुखादिरूपधर्मसमवायित्वमादाय आत्मनः शब्दात्मकधर्मसमवायित्वमादाय आकाशस्य रसात्मकात्मधर्मसमवायित्वमादाय वायूपनीतजलभागस्य गन्धात्मकतादृशधर्मसमवायित्वमादाय वायूपनीतचम्पकभागस्य द्रव्यत्वादिरूपतादृशधर्मसमवायित्वमादाय आकाशादीनां पिशाचादिसंयोगरूपतादृशधर्मसमवायित्वमादाय पिशाचादेः प्रत्यक्षत्वापत्तिवारणाय धर्मे अनात्मसमवेतत्वस्य शब्दरसगन्धजातितरत्वस्य योग्यत्वस्य च निवेशे सत्त्वेऽपि तादृशधर्मसमवायित्वस्य कारणतायां महागौरवात्। तदपेक्षया रूपस्य कारणत्वं लाघवात्।

न च वायोः प्रत्यक्षाप्रत्यक्षत्वयोः सन्दिग्धतया व्यभिचारसन्देहेन रूपस्य समवेतेन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति कारणता दुरवधारणेति वाच्यं तादृशप्रत्यक्षे रूपस्य कारणत्वे

लाघवमिति लाघवज्ञानेन व्यभिचारसन्देहस्य कारणतानिश्चयं प्रति प्रतिबन्धकताया अनायासं वारणसंभवात्। लाघवज्ञानाद्यसहकृतव्यभिचारसन्देहस्यैव कारणतानिर्णयविघटकत्वात्।

यत्तु समवेतेन्द्रियजन्यद्रव्यप्रत्यक्षे परिमाणं कारणमित्युक्तम् आकाशादौ पवनानीतचम्पकभागादौ च परिमाणाभावादेव न तेषां चक्षुषा स्पर्शनेन वा समवेतेन्द्रियेण प्रत्यक्षापत्तिः, तदपि न समीचनम्, आकाशादेः परिमाणवत्त्वस्य प्रामाणिकतायाः पूर्वं प्रदर्शितत्वात्।



# तृतीयोऽध्यायः

## गुणत्वजातिविमर्शः

प्रत्यक्षसिद्धा भणितेषु तेषु
गुणेषु सर्वत्र गुणत्वजातिः ।
तत्रापि हेतुर्व्यवहार एव
प्राचां मतैक्यं विमतिर्न तत्र ॥ १ ॥

रूपादिका भान्ति गुणा अनेके
दृष्टानि सत्त्वानि गुणाश्रयाणि ।
सिद्धा ततश्चापि गुणत्वजातिः
प्राचीनतन्त्रे प्रमिता तथैव ॥ २ ॥

नातीन्द्रिये क्वापि गुणत्वजातिः
प्रत्यक्षसिद्धा भवतो मता चेत् ।
रूपादिमात्रे न हि वक्तुमर्हा
रूपादिभिन्नेष्वनुभूयते सा ॥ ३ ॥

प्रत्यक्षसिद्धा न गुणत्वजातिः
प्राचां प्रमादो यदि तां वदन्ति ।
तत्साधिका साधनरम्यभूति-
र्नास्ते ततः सा कृशतर्ककाया ॥ ४ ॥

साङ्कर्यदोषोपहतस्वभावा
सिद्धा प्रसिद्धा न गुणत्वजातिः ।
प्राचां मता सा दधते न सत्तां
नैवास्ति मानं सबलञ्च तस्याम् ॥ ५ ॥

अश्वस्य नोत्कृष्टगतौ गुणत्वं
विप्रादिदोषस्य वियोगभूमौ ।
सेद्धुं न शक्नोति ततो न भाति
प्राचां गुणत्वस्य विशिष्टपक्षः ॥ ६ ॥

द्रव्यं यदा वक्ति गुणैकलिङ्गा-
ल्लिङ्गं तदेवात्र बुधैर्विचिन्त्यम् ।
कस्याप्य[१]वच्छेदकताश्रयेण
सिद्धं गुणत्वं प्रथितं पृथिव्याम् ॥ ७ ॥

विभौ विभुत्वं सहसा प्रसक्तं
विचिन्त्य वाच्या न गुणत्वजातिः ।
हठम्परित्यज्य विधाय तर्कं
मतन्न हेयं सुधियः सतर्कम् ॥ ८ ॥

आपाततो भाति रघूक्ती रम्या
क्षोदक्षमं सा दधते न कम्रम् ।
प्राचां विचारस्य महाविभूति-
स्तत्रैव दृष्टिर्नयपण्डितानाम् ॥ ९ ॥

शिरोमणेर्देशिकता विचित्रा
विचारचर्चा नवतां विधत्ते ।
परीक्ष्यमाणा तनुते न तर्कं
तथापि चित्तं चिनुते स्ववाचा ॥१०॥

पूता नवा काचन तत्त्वचर्चा
भव्या रघोर्गौरवमादधाना ।
अल्पाक्षरा वाच्यततिं दधाना
कौतूहलं नो वितनोति तन्वी ॥११॥

न च शिरोमणिमण्डितकौतुकं
विदधते पवनं नयमण्डितम् ।
अहह तर्कधराधरताण्डवं
न विभवं विभुताप्रभुताकरम् ॥१२॥

---

१. गुणपदस्य शक्यतावच्छेदता ।

नव्या यदीया प्रतिभाति भूतिः
सूर्तिर्विचारस्य विशालभित्तिः ।
स्फूर्त्तिश्च तर्कस्य विशिष्टकीर्त्तिः
सृष्टिः सतर्का रमणीयरीतिः ॥१३॥

अन्वेषणीयोऽभिनवो विचारः
प्राचां विचारश्च परीक्षणीयः ।
नोपेक्षणीया बुधदत्तभित्ति-
र्भित्तिं विना भाति न भव्यभूतिः ॥१४॥

लिङ्गेन निर्दोषगुणादिनैव
भव्यानुमा लाघवबोधभाजा ।
उक्तानुमाकारणवृत्तिधर्मो
जातिर्गुणत्वं त्विहरत्यजस्रम ॥१५॥

## गुणत्वजातिविषये दीधितिकृन्मतविमर्शः

प्राचीनैर्नैयायिकै रूपादिचतुर्विंशतिगुणेषु गुणत्वनामिका जातिरभ्युपगम्यते । सा च रूपादिर्गुणो घटादिर्गुणवानित्यादिप्रत्यक्षसिद्धेति तेषां मतम् ।

[1]परं दीधितिकारो जातिमिमां न मनुते प्रमाणाभावात् । जातिरियम् उक्तप्रत्यक्षसिद्धेति प्राचीनानां कथनमसंगतं गुणत्वजातेः प्रत्यक्षसिद्धत्वोपगमे अतीन्द्रियेषु गुणेषु तत्सत्त्वासंभवात् । न च रूपादिषु गुणपदस्यानुगतव्यवहारबलात्प्रत्यक्षाप्रत्यक्ष-सर्वगुणसाधारणी गुणत्वजातिः सेद्धुमर्हति, अतीन्द्रियेष्वपि तेषु शास्त्रज्ञैर्गुणपदस्य व्यवह्रियमाणत्वादिति वाच्यम्, तुरगादेरुत्कृष्टगतौ ब्राह्मणादेर्दोषाभावेऽपि अभियुक्तानां गुणपदव्यवहारात् । प्रसिद्धा हि तुरगादेरुत्कृष्टा गतिर्गुणो ब्राह्मणादेर्दोषाभावो गुण इति व्यवहारोऽतो गुणपदव्यवहारस्य रूपादिमात्रसाधारण्या गुणत्वजातेः साधकत्वमसंभवमेव ।

न च रूपादिषु प्रत्येकं यस्य कस्यचित् कार्यस्य कारणतायाः सत्त्वात् ताः सर्वा द्रव्यकर्मान्यसामान्यवन्निष्ठकारणतात्वेनानुगतीकृत्य तादृशकारणतासामान्यावच्छेदकतया गुणत्वजातेः साधनं सुशकमिति वाच्यम्, तादृशकारणतासु प्रत्येकं रूपत्वाद्यवच्छिन्नत्वस्य सिद्धतया सिद्धसाधनप्रसंगात् ।

न चैकैककारणताया अवच्छेदके सिद्धेऽपि तादृशकारणतासामान्यस्य न किञ्चिदवच्छेदकं सिद्धमिति तत्सामान्यावच्छेदकतया गुणत्वजातिसिद्धिः संभवेति वाच्यम्, तादृशकारणतासामान्ये किञ्चिदवच्छिन्नत्वं विनापि या या कारणता सा सा किञ्चिद्धर्मावच्छिन्नेति नियमस्य संभवेन तादृशकारणतासामान्यस्य धर्मावच्छिन्नत्वकल्पनस्यायौक्तिकत्वात् ।

किं च द्रव्यकर्मेतरसामान्यवद्वृत्तित्वेन अनुगतीकृतानां कारणतानां यत्किञ्चिदेकावच्छेदकाभ्युपगमे रूपद्रव्यकर्मेतरसामान्यवद्वृत्तित्वेन अनुगतीकृतानां कारणतानामप्यवच्छेदकतयातिरिक्तधर्मस्य सिद्धिप्रसंगः । न चेष्टापत्तिस्तुल्ययुक्त्या रसद्रव्येतरसामान्यवद्वृत्तिकारणतावच्छेदकत्वेन रूपगन्धादित्रयोविंशतिगुणकर्मसाधारणजातिसिद्ध्या

---

१—एवं गुणत्वमपि न रूपादिचतुर्विंशतावेका प्रत्यक्षसिद्धा जातिः । अतीन्द्रियेषु प्रत्यक्षायोगात् । तुरगादेरुत्कृष्टगतिमत्त्वे ब्राह्मणादेश्च दोषाद्यभावेऽपि गुणव्यवहाराच्च । एकस्य कार्यतावच्छेदकस्य विरहेऽपि येन केनापि रूपेण कारणत्वाद्यनुगमय्य जातिकल्पने चातिप्रसङ्गो जातिसङ्करः सङ्करश्चेति दिक् । पदार्थतत्त्वनिरूपणे पृ० सं० ५१–५२

तयोः संकरप्रसंगात् तथाहि—रसद्रव्यकर्मेतरसामान्यवद्वृत्तिकारणतावच्छेदिका जाती रसे नास्ति किन्तु रूपद्रव्यकर्मेतरसामान्यवद्वृत्तिकारणतावच्छेदिका जातिर्वर्तते, एवं रूपद्रव्यकर्मेतरसामान्यवद्वृत्तिकारणतावच्छेदिका जाती रूपे नास्ति किन्तु रसद्रव्यकर्मेतर सामान्यवद्वृत्तिकारणतावच्छिदिका जातिस्तत्र वर्तते, इत्थं परस्पराभावसमानाधिकरणमुक्तजातिद्वयं गन्धादौ वर्तत इति तयोर्जात्योः सांकर्यं सुस्पष्टम् ।

न च असतिबाधके गुणपदशक्यतावच्छेदकत्वेन गुणत्वजातिसिद्धिः सुसंभवेति वाच्यम्, तथा सति विभुपदशक्यतावच्छेदकत्वेन विभुचतुष्टयमात्रवृत्तिजातिसिद्धिप्रसंगात् ।

परमिदं दीधितिकृन्मतं विचारसहं नास्ति, गुणलिङ्गकद्रव्यत्वानुमितौ गुणस्य हेतुतया गुणे द्रव्यत्वानुमितेरेकस्याः कारणतायाः संभवेन तदवच्छेदकतया गुणत्वजातिसिद्धौ बाधकाभावात् ।

यत्तु रघुदेवेन एतत्सम्बद्धायां पदार्थतत्त्वनिरुपणटीकायामिदमत्र बोध्यमित्यादिनेदमुक्तं यद् असति बाधके गुणपदशक्यतावच्छेदकत्वेन गुणत्वजातेः सिद्धौ बाधकाभाव इति तत्तुच्छं रुपादिषु गुणशपदशक्यत्वे प्रमाणाभावात् । व्याकरणे अदेङोः सांख्यादिदर्शनेषु सत्त्वरजस्तमःसु गुणपदव्यवहारस्य दर्शनाद्रूपादौ अदेङोः सत्त्वादौ वा गुणपदस्य शक्तिरिति निश्चये विनिगमनाविरहात् ।

न च गुणपदं सप्रवृत्तिनिमित्तिकं साधुपदत्वादित्यनुमानेन गुणपदप्रवृत्तिनिमित्ततया गुणत्वजातिसिद्धिः सुशकेति वाच्यम्, एतद्रीत्या सिद्धाया गुणत्वजाते रूपादिवृत्तित्वमित्यत्र प्रमाणाभावेन रूपादिनिष्ठायास्तस्या दुर्वचत्वादपि तु लाघवाद् बहुषु शास्त्रेषु व्यवहारप्राचुर्याच्च सत्त्वरजस्तमःस्वेव, तदाश्रयत्वमिति पक्षस्यैवौचित्यात् ।

न चैवं गुणलिङ्गकद्रव्यत्वसाध्यकानुमितिकरणतावच्छेदकतयापि गुणत्वजातिसाधनं दुःशकमतीतानागतलिङ्गकानुमित्यनुरोधेन अनुमितिं प्रति लिङ्गज्ञानस्यैव करणत्वेन द्रव्यत्वलिङ्गकानुमितिकरणताया गुणज्ञानवृत्तित्वस्यैवौचित्येन गुणे तदभावात् । ननु लिङ्गस्यातीतत्वाद्यनुरोधेन कार्याव्यवहितनियतपूर्ववृत्तित्वरूपकारणताया असम्भवेऽपि कार्याव्यवहितनियतपूर्ववृत्तिस्वस्वव्यापारान्यतरकत्वरूपकारणता संभवत्येव तथा हि—कारणता न केवलं कार्याव्यवहितनियतपूर्ववृत्तितामात्रं तथा सति यागादौ स्वर्गादिकारणत्वानुपपत्तेः स्वर्गादेरव्यवहितपूर्वं तस्याविद्यमानत्वात् । अतः कार्याव्यवहितनियतपूर्ववृत्तिस्वस्वव्यापारान्यतरकत्वरूपकारणत्वं वाच्यं तथा च स्वर्गादेः पूर्वं यागादेरविद्यमानत्वेऽपि तद्व्यापारस्यादृष्टस्य विद्यमानतयोक्तकारणत्वं संभवति, एवञ्च लिङ्गस्य ज्ञानात्मकव्यापारद्वारा कारणत्वकल्पने अतीतादिलिङ्गस्याप्यनुमितिकारणत्वं संभवति अनुमितिपूर्वमतीतादिलिङ्गस्यासत्त्वेऽपि तज्ज्ञानस्य तदीयव्यापारस्य सत्त्वादिति चेन्न, वर्तमानलिङ्गस्य स्वप्रत्यक्षद्वारानुमितिकारणत्वसंभवेऽपि

अतीतादिलिङ्गस्य स्वज्ञानद्वारा कारणत्वं न भवितुमर्हति, अतीतादेः प्रत्यक्षान्यज्ञानस्यैवानुमितिपूर्वं संभवेन तस्य चातीतादिलिङ्गाजन्यत्वेन तद्व्यापारत्वासंभवात्, तज्जन्यत्वे सति तज्जन्यजनकस्यैव तद्व्यापारत्वादिति वाच्यं घटो द्रव्यं गुणादित्यनुमानप्रयोगप्रयोज्यानुमितिकारणतानिरूपितविषयित्वसम्बन्धावच्छिन्नावच्छेदकता किञ्चिद्धर्मावच्छिन्ना कारणतानिरूपितानेकवृत्त्यवच्छेदकतात्वात्, घटत्वसाध्यकसमवेतद्रव्यत्वसम्बन्धेन कपालहेतुकानुमितिकारणतानिरूपितकपालनिष्ठविषयित्वसम्बन्धावच्छिन्नावच्छेदकतावदित्यनुमानेन जातिबाधकाभावसहकृतेनोक्तजनकताया जात्यवच्छिन्नत्वे लाघवमित्येवंविधतर्कोपबृंहितेन चोक्तानुमानेन तादृशानुमितिकारणतावच्छेदकतया गुणत्वजातिसिद्धौ बाधकाभावात् ।



## अनुभवत्वजातिविमर्शः

ब्रूते रघुर्नानुभवत्वजातिः
प्रत्यक्षनिष्ठानुमितौ न वैव ।
शाब्दे न साध्ग्रोपमितौ न सास्ति
प्राचा ऽुपास्या न च मन्तुमर्हा ।। १ ।।

स्मृतौ न मान्यानुभवत्वजाति-
स्तदन्यबोधे परिभासते सा ।
प्रबुद्धपक्षोऽनुभवैकगम्यो
नयस्य नेयः सुधियां न हेयः ।। २ ।।

अक्षेण जीवोऽननुभूतमर्थं
जानाति नेह स्मृतिभिन्नरूपम् ।
लिङ्गादिना चाननुभूतमर्थं
जानाति भव्यानुभवत्वजातिम् ।। ३ ।।

प्राचीनपक्षोऽनुभवत्वजातिं
सर्वत्र बोधे मनुते न चित्रम् ।
तर्के सयत्नः स्मरणे न वक्ति
युक्तिः समानानुभवप्रसूता ।। ४ ।।

प्राचीनमान्यां स घटीं निपात्य
घटीं नवीनां तनुते विषस्य ।
युवितं पयोधिं सहसा प्रमथ्य
तत्रैव नीता सुघटी गरस्य ।। ५ ।।

प्राचीनपक्षं विटपं ब्रवीति
जीर्णोऽसि शीर्णोऽसि धराधरोऽसि ।
छायाविहीनोऽसि विभासि नाद्य
पक्षे नवीने विटपे प्रसूते ।। ६ ।।

न पर्णपातो विटपस्य मेऽस्ति
सुपर्णतां वैभवमातनोति ।
वुवस्य कम्रं कुतुकं करोति
स चित्रशौर्यो विनिहन्ति दृष्टिम् ॥ ७ ॥

विस्फार्य चक्षुः सुधियो विदन्तु
गृह्णन्तु बुद्ध्वोत दहन्तु तत्त्वम् ।
तर्को बली चेद् दधतां प्रयत्नं
प्रत्यक्षभिन्नेऽनुभवत्वजातिम् ॥ ८ ॥

नास्तीति पक्षो बलवान्मदीयः
प्रत्यक्षभिन्नेऽनुभवत्वजातिः ।
आयान्तु कृन्तन्तु विचारयन्तु
येषां विपक्षे विभवं विभाति ॥ ९ ॥

रघूक्तदोषस्तनुते प्रकाण्डं
बिभेति नैवास्ति विचित्रनीतिः ।
हठं हठेनैव चिनोति चेत्थं
निजं नवीनं विदधाति पक्षम् ॥ १० ॥

स्मृताववृत्तिं परिकल्प्य जातिं
प्रमानुमानप्रबलेन मान्याम् ।
तयैव वृक्षं रघुनाथदत्तं
निपात्य वच्मोऽनुभवत्वजातिम् ॥ ११ ॥

जन्यस्मृतौ कारणकल्पनायां
भव्या नवा करणता च कल्प्या ।
यद्येकधर्माश्रयतां बिभर्त्ति
मान्या तदा सा जनकावलम्बा ॥ १२ ॥

धर्माश्रया कारणता प्रकल्प्या
धर्मः स एवानुभवत्वजातिः ।
मान्यानुमानेन च साध्यते सा
शङ्का समूला विहता तथैव ॥ १३ ॥

स्मृतीतरेषु प्रबलेषु तेषु
न जातिरेकानुभवत्वनाम्नी।
रघूक्तिरेषा सबला विपन्ना
मरुत्प्रवेगेण घनावलीव ॥ १४ ॥

न जातु रोषः सबलो विधेयो
विवेकहानिस्तत एव गीता।
विवेकनाशे प्रबलोऽपि मानी
न शोभते कर्मकलापदक्षः ॥ १५ ॥

स्तुत्यः स पक्षः सुधियां सतर्कः
प्राचां मतो योऽनुभवत्वजातेः।
मान्यानुमादावपि सा च जाति-
र्हेया न केनापि विशेषजातिः ॥ १६ ॥

शिरोमणेः कापि विचारकोटि-
र्नैवा न धन्या सफलैककामा।
परीक्ष्यमाणा नवतामुपेता
दिशं नवीनां ददते विचित्राम् ॥ १७ ॥

चित्रास्ति शैली नयपण्डितस्य
चित्रार्थजातं चिनुते च चेयम्।
चित्रान् बुधान् कम्पयते प्रकामं
धन्यैव लीला ललिता ललामा ॥ १८ ॥

बुद्ध्वैव भूतिं रघुनाथसूरे-
र्नव्यां च सृष्टिं प्रथितां निधाय।
बुद्धेर्विलासं ललितं सतर्कं
प्राचां मतं तत्तनुते रसालम् ॥ १९ ॥



## अनुभवत्वजातौ दीधितिकृन्मतविमर्शः

प्राचीनैर्नैयायिकैः प्रत्यक्षानुमित्युपमितिशाब्दबोधेषु अनुभवत्वनामिका ज्ञानत्व-व्याप्यैका विलक्षणा जातिरभ्युपेयते, इन्द्रियेणेव लिङ्गादिभिरपि पूर्वाननुभूतस्यार्थस्य बोधनात्, पूर्वाननुभूतार्थबोधश्च समानाकारकानुभवाजन्यतया स्मृतित्वभाजनतां प्राप्तुमशक्नुवानोऽनुभवत्वं प्रसभमाश्रयते ।

परं[१] दीधितिकारः प्रत्यक्षभिन्नज्ञानेषु स्मृतिभिन्नेष्वप्यनुभवत्वं नाभ्युपैति । न च यथा विभिन्नप्रत्यक्षव्यक्तिषु अनुभवपदव्यवहारानुरोधेन प्रत्यक्षेष्वनुभवत्वं स्वीक्रियते तथैव शब्दादिज्ञानेषु अनुभवपदव्यवहारानुरोधेन अनुभवत्वमवश्यमभ्युपेयमिति वाच्यम् अनुभवव्यवहारस्य स्मृतिभिन्नज्ञानत्वनिबन्धनत्वेनाप्युपपत्तिसंभवेन शाब्दादिज्ञानेषु अनुभवत्वजातेरभ्युपगमस्यानावश्यकत्वात् ।

न च लाघवादनुभवत्वस्यैवानुभवव्यवहारविषयत्वं स्वीकर्त्तुमुचितमिति वाच्यं शब्दादिषु प्रकारान्तरेणासिद्धस्यानुभवत्वस्य उक्तव्यवहारानुरोधेनैव सम्बन्धकल्पनापेक्षया तत्र क्लृप्तस्य स्मृत्यन्यज्ञानत्वस्यैवानुभवव्यवहारसाधनत्वकल्पने लाघवात् । अतोऽनुभवत्वं न प्रत्यक्षानुमित्यादिसाधारणी जातिः किन्तु साक्षात्कारित्वमेवानुभवत्वं तच्च प्रत्यक्षमात्रनिष्ठमेवं चानुभवत्वम्प्रत्यक्षत्वव्याप्या जातिर्नानुमित्यादिवृत्तिः ।

न च साक्षात्कारिज्ञानेऽपि तत्सत्त्वे मानाभाव इति वाच्यम्, अनुभवामीति प्रत्ययेन तत्रानुभवत्वस्य साधयितुं शक्यत्वात् । अनुभवामीतिप्रत्ययव्यतिरिक्तस्यानुभवत्वसाधकस्याभावेनानुमित्यादावनुभवत्वजातिरसंभवा तत्र तत्कल्पने आनुमानिके शब्दजे च सुखबोधेऽनुभवामीति प्रत्ययप्रसंगात् ।

दीधितिकृतो मतमिदं वैचारिकं समर्थनं प्राप्तं न प्रभवति प्रत्यक्षस्येवानुमित्यादेरपि पूर्वाननुभूतार्थविषयकत्वेन स्मृतिविलक्षणतयाऽनुमित्यादिकं स्मृतिविजातीयं पूर्वा-

---

१–शाब्दादिज्ञानेऽनुभवव्यवहारश्च स्मृत्यन्यज्ञानत्वनिबन्धनः जातिस्त्वनुभवत्वं साक्षात्कारित्वमेव । साक्षात्कारिणि ज्ञान एव तत्प्रत्ययात् । सत्यपि चानुमानिकादिसुखादिनिश्चये सुखादिकमनुभवामीति प्रत्ययोभावादिति ।
पदार्थतत्त्वनिरूपणे पृ० सं० ५२-५४ ।

ननु भूतार्थविषयकत्वात् प्रथमप्रत्यक्षवदित्यनुमानेन अनुमित्यादौ स्मृत्यवृत्तिजातेः सिद्धौ बाधकाभावेन तस्या एवानुभवत्वपदेन व्यपदेशस्य संभवतयानुभवत्वजातेरनुमित्यादि-साधारण्ये बाधकाभावात् ।

न चानुमित्यादौ स्मृतिविजातीयत्वस्यानुमितित्वादिजातिमादायापि संभवेनोक्ता-नुमानेन स्मृत्यवृत्तिजातितया तज्जातिसिद्धिर्निर्युक्तिकेति वाच्यम्, अनुमित्यादिः स्मृति-विजातीयेतिबुद्धेः स्मृत्यवृत्त्येकजातिविषयकत्वे लाघवमिति लाघवज्ञानरूपतर्कानुरोधे-नानुमित्यादिषु अनुभवत्वजातिसिद्धिसंभवात् । अन्यथोक्तप्रतीतिविषयताया अनुमिति-त्वादिनानाजातिषु कल्पने गौरवात् ।

न चोक्तप्रतीतेरेकजातिविषयकत्वेऽनुमितित्वादिजातीनामसिद्धिप्रसंग इति वाच्यम्, उक्तप्रतीत्या तदसिद्धावपि अनुमिनोमीत्यादिप्रत्ययेभ्यस्तत्सिद्धिसंभवात् । अनु-मित्यादयो मिथो विजातीयाः परस्पराजनकसामग्रीप्रभवत्वाद् घटपटादिवदित्यनुमानेनापि अनुमितित्वादिलक्षणस्य परस्परवैलक्षण्यस्य सिद्धिसंभवात् ।

किंच स्मृतिं प्रति प्रत्यक्षानुमित्यादीनां कारणत्वानुरोधेनापि प्रत्यक्षानुमिति-प्रभृतिषु काचिदेका जातिरवश्यमुपगन्तव्या अन्यथा मिथोविलक्षणानां तेषां स्मृति-कारणत्वासंभवात् । तथा च प्रत्यक्षादिनिष्ठा स्मृतिकारणता किञ्चिद्धर्मावच्छिन्नेत्य-नुमानमपि प्रत्यक्षानुमित्यादिनिष्ठायामनुभवत्वजातौ मानम् ।



## अभावाभावस्वरूपविमर्शः

अभावचर्चा यदि चर्चितव्या
नयस्य मान्या भुवने प्रसिद्धा ।
रघुस्तदा वक्ति विचित्रचर्चां
प्रसिद्धपक्षं परिहाय नव्याम् ॥ १ ॥

न कोऽप्यभावः परिभाति भव्यः
कदापि यो भावविभां बिभर्त्ति ।
तथाभ्युपेते कथमस्त्यभावः
स भाव एवेति न भाति बुद्धिः ॥ २ ॥

घटाद्यभावस्य यदास्त्यभावः
स भाव एवेति मतं बुधानाम् ।
अभाव एवेति मतं प्रशस्तं
शिरोमणिः स्वीकुरुते सयत्नः ॥ ३ ॥

अभावसत्ता न च भावसत्ता
प्रसिद्धिरेषा न विहन्तुमर्हा ।
प्रतीतिभिन्नं विमतं पुराणं
न सोढुमर्हं विपरीततर्कम् ॥ ४ ॥

वाणी रघोर्भाति विचित्रतर्का
प्राचीनरीतिं विनिहन्तुकामा ।
शास्त्रीयसिद्धान्तविरुद्धतर्का
नव्यातिनव्या परिभाति भव्या ॥ ५ ॥

मान्यं मतन्नास्ति रघुप्रदत्तं
हेयं च तद् गौरवदोषयुक्तम् ।
क्लृप्ते घटे चेद् गणना तदीया
प्राचां मते लाघवलाभलोभः ॥ ६ ॥

घटाद्यभावस्य यदास्त्यभावो
न भावरूपः स कदापि बोध्यः।
अनेकधर्मादिरिहैव कल्पे
यतः प्रसक्तो न निरोद्धुमर्हः ॥ ७ ॥

नाना पदार्थाः परिभान्ति भूमौ
तेषामभावोऽपि विभाति तत्र।
तस्याप्यभावे विविधे नवीने
चेद् गौरवं भाति कथन्न हेयम् ॥ ८ ॥

भावस्य पक्षेऽभिनवा न सत्ता
कस्यापि भिन्नस्य नवाऽनवा वा।
प्राचां मते लाघवमत्र बोध्यं
मान्यं च तद् बुद्धिमतां न हेयम् ॥ ९ ॥

बहुप्रयासै रघुणा विमृष्टो
न माननीयो गुरुतानुपेतः।
अभावपक्षोऽभिनवो विरुद्धो
न सेद्धुमर्हो विपरीतकक्षः ॥१०॥

नाभावपक्षो रघुनाथसूरे-
स्तर्काश्रितो भाति विचित्रचर्चः।
भूतिं नवां राति न बुद्धिगम्यं
प्राचां विरोधेऽपि नदा न लब्धिः ॥११॥



## अभावाभावस्य भावरूपत्वे दीधितिकृन्मतविमर्शः

प्राचीननैयायिका घटाद्यभावाभावानां लाघवाद् घटादिरूपत्वमभ्युपयन्ति परं दीधितिकारो मतमिदं नानुमन्यते-यतो हिं घटादिमति देशे घटाद्यभावो नीस्तत्येवं घटाद्यभावाभावस्याभावत्वेन अबाध्यमानः प्रत्ययो जायते। किन्तु घटाद्यभावाभावो यदि घटादिरूपः स्यात्तर्हि तत्र भावभिन्नत्वरूपस्याभावत्वस्यासत्तया अभावत्वेन तत्प्रत्ययः प्रमा न स्यात्।

न चैवं घटाभावाभावस्य घटव्यतिरिक्तत्वे तदभावाभावादीनामपि अतिरिक्तानां कल्पनीयतया अनवस्थाप्रसंग इति वाच्यम्, घटस्यानेकतया भावरूपतया च घटाभावाभावरूपत्वस्यानौचित्येऽपि घटाभावस्य अभावरूपतया एकतया च तत्र घटाभावाभावाभावत्वकल्पनस्यौचित्येन तस्य घटाभावभिन्नत्वानभ्युपगमेन अनवस्थायाः प्रसक्त्यसंभवात्।

परं[१] दीधितिकृन्मतमिदं न शोभनं घटाभावाभावस्य घटभिन्नत्वाभ्युपगमेऽतिरिक्तस्याभावस्य कल्पनायां गौरवात्। लाघवेन क्लृप्तेषु घटेष्वेव घटाभावाभावत्वकल्पनाया औचित्यात्।

न च घटस्य नानात्वेन तत्रानेकेषां घटाभावाभावत्वसम्बन्धानां कल्पनमेव गौरवग्रस्तमिति वाच्यं स्वरूपातिरिक्तस्य सम्बन्धस्याकल्पनीयतया एतद्गौरवाभावात्, अपि तु अतिरिक्तस्य घटाभावाभावस्य कल्पनायामेव गौरवं तत्र प्रमेयत्वादीनामनेकधर्माणां कल्पनीयत्वात्। घटस्वरूपत्वे तु घटे प्रमेयत्वादीनां क्लृप्ततया न तत्कल्पनामूलकस्य गौरवस्यावसरः। यदिदमुक्तं दीधितिकृता यद् घटाभावाभावस्य घटरूपत्वे घटवति देशे घटाभावो नास्तीत्येवमभावत्वेन घटाभावाभावप्रत्ययो न स्यादिति, तत्तुच्छम्, अभावत्वस्य भावभिन्नत्वस्वरूपाभ्युपगम एवोक्तदोषस्य संभवात्, भावाभावसाधारणस्याखण्डोपाधिरूपस्याभावत्वस्य स्वीकारे तद्दोषाभावात्।

---

१—एवं घटाद्यभावस्याप्यभावोऽतिरिक्त एव। घटादिमति तदभावो नास्तीत्यबाधिताभावत्वप्रत्ययात्। न चैवमनवस्था एकस्यैव घटाभावस्य स्वाभावाभावरूपत्वे विरोधाभावात्।

अन्योऽन्याभावस्यान्योन्याभावो भावत्वम्। अतिरिक्तान्योन्याभावाङ्गीकारेऽनवस्थाप्रसङ्गात्। पदार्थतत्त्वनिरूपणम् पृ० ५५-५६॥

नचाभावत्वस्य भावभिन्नत्वभिन्नस्य कल्पने गौरवं भावभिन्नत्वरूपस्य च तस्य स्वीकारे प्रोक्तप्रत्ययस्य दुःशकत्वं विस्पष्टमिति वाच्यम्, अभावत्वं भावभिन्नत्वं भावत्वं चाखण्डोपाधिरथ वा भावत्वमभावभिन्नत्वम् अभावत्वं चाखण्डोपाधिरित्यत्र विनिगमनाविरहेण भावत्वाभावत्वयोरुभयोरेवाखण्डोपाधिरूपत्वस्यैव न्याय्यत्वात् ।

नच भावत्वं नाखण्डोपाधिः किन्तु समवाय-स्वसमवायिसमवायान्तरसम्बन्धेन सत्तैव भावत्वमतोऽभावत्वं भावभिन्नत्वरूपमिति स्वीकारे दोषाभावेनोक्तप्रत्ययानुपपत्तिरूपो दोषस्तदवस्थ इति वाच्यम्, अभावत्वं भाव इति प्रतीत्यनुरोधेन भावत्वस्य सत्ताभिन्नस्यैव स्वीकरणीयत्वात् ।

अन्यथा तत्रोक्तान्यतरसम्बन्धेन सत्ताया अभावेन तत्र भावत्वबुद्धिर्न स्यात् । किंच घटाभावाभावस्य घटभिन्नत्वे घटवद्देशेन सह तस्य भिन्नसम्बन्धकल्पने गौरवम् । स्वरूपसम्बन्धपक्षेऽपि घटवद्देशस्य घटाभावाभावत्वावच्छिन्नप्रतियोगिकस्वरूपसंम्बन्धत्वकल्पने गौरवं दुर्वारम् । घटाभावाभावस्य घटरूपत्वे तु भूतलादिना सह घटसम्बन्धतया क्लृप्तेन संयोगेनैव घटाभावाभावबुद्धेः संभवान्नातिरिक्तसम्बन्धकल्पनाप्रयुक्तगौरवम्, एवं घटाभावाभावस्य घटभिन्नत्वे तस्य चक्षुःसंयुक्तविशेषणतासम्बधेन चक्षुर्ग्राह्यत्वकल्पनेऽपि गौरवम् । घटरूपत्वे तु चक्षुःसंयोगेन ग्राह्यतया लाघवम् ।



## ध्वंसप्रागभावस्य प्रागभावध्वंसस्य च विमर्शः

ध्वंसीयप्रागभावस्तु
प्रतियोगित्वमाश्रितः ।
नास्ति संशीतिलेशोऽत्र
राजते राजपद्धतिः ॥ १ ॥

ध्वंसश्च प्रागभावीयः
प्रतियोगिस्वरूपकः
संशीतिपङ्कनिर्मुक्तो
भाति पक्षः प्रभाकरः ॥ २ ॥

विचारचर्चां सुधियां सतर्कां
शिरोमणिः स्वीकुरुते न मान्याम् ।
उभावभावौ प्रतियोगिभिन्नौ
मते तदीयेऽभिनवे विचित्रे ॥ ३ ॥

उक्तावभावौ यदि भावरूपौ
तदा प्रतीतिर्विहता प्रसिद्धा ।
तस्यां च सत्यां न च भावरूपं
तयोर्विरुद्धं भवता सुसाध्यम् ॥ ४॥

भावावलम्बा भवति प्रतीति-
र्भिन्नैव नाभावपथावलम्बा ।
भावप्रमा मान्यतमा कदापि
नाभावबुद्धिर्विपरीतरूपा ॥ ५ ॥

प्राचीनतर्का विपरीतमार्गा
बुद्धिर्न मान्या विहतप्रभावा ।
तर्काञ्चिता साधुपथा न भाति
हेया ततः सा सरणिर्न साध्वी ॥ ६ ॥

नवीनमार्गापि सुखस्वभावा
रघूक्ततर्का प्रथितप्रभावा ।
अभावचर्चा न विहन्तुमर्हा
सनातनीयं सहजैव सोढा ॥ ७ ॥

अखण्डोपाधिरेवात्र
प्रागभावत्वमिष्यते ।
अभावत्वं तथैवास्ते
ध्वंसत्वं चापि तादृशम् ॥ ८ ॥

तथाभ्युपेते न च कापि हानी-
रघूक्तदोषोऽपि पदं न धत्ते ।
मतं पुराणं लघुतानुपेतं
न हेयतां गच्छति शास्त्रभूमिः ॥ ९ ॥

न वास्त्यभावस्य सुधाप्रतीतौ
नवा च बाधा रघुणा प्रदिष्टा ।
न वापि भावस्य तथा प्रतीतौ
नवाऽनवा वा बुधगम्यबाधा ॥ १० ॥

अभावगा भावपदार्थगापि
बुधैः प्रदिष्टा महनीयतर्का ।
उपाधिसत्ता पथगा समाना
न तत्र भेदोऽधिककष्टदश्च ॥ ११ ॥

तर्काश्रितो भावपथो न हेयो
हेयो न कल्पः कमनीयकक्षः ।
प्राचां न पक्षः सहते विकल्पं
कल्पं तु कस्यापि दहत्यजस्रम् ॥ १२ ॥

नव्यो रघुर्नव्यमतं ब्रवीति
प्राचीनमार्गं परिहाय याति ।
भव्यामभव्यां चिनुते न मानी
युक्तिं स्वकीयां सहजां विधत्ते ॥ १३ ॥

स भावपक्षश्च पुरातनानां
तमो निहत्यैव पथं ददाति।
प्रकाशपुञ्जं प्रबलं विधाय
दिवाकराभः कलुषं निहन्ति ॥ १४॥

अर्कः सतर्कः कमनीयकल्पः
प्राचीनपक्षो रमणीयलक्ष्यः।
पङ्कं विपक्षं सहते न दक्षः
पीयूषभक्षो न विषं भुनक्ति ॥ १५॥

रघूक्तदोषं सहसा निपीय
वरं प्रभूतं ददतेऽमृतं तद्।
नवां स्वसृष्टिं तनुते तु तन्त्रे
विचित्ररूपां रमणीयगात्राम् ॥ १६॥

तन्त्रे स्वतन्त्रो रमते दिनेशः
प्राचीनपक्षो विमलो महेशः।
प्राप्तां समस्तां विनिहन्ति बाधां
राद्धान्तसिद्धं विदुषे स राति ॥ १७॥



## ध्वंसप्रागभावस्य प्रागभावध्वंसस्य च प्रतियोगिस्वरूपत्वे दीधितिकृन्मतविमर्शः

प्राचीनैर्नैयायिकैर्ध्वंसप्रागभावस्य प्रतियोगिरूपत्वं मन्यते, तथा च घटादिध्वंसस्य प्रागभावो घटादिरूपः, घटघटध्वंसप्रागभावयोरुभयोरेव घटध्वंसे उत्पद्यमानेऽविद्यमानत्वात्। एवं प्रागभावध्वंसः प्राचीनैः प्रागभावप्रतियोगिरूप एव मन्यते तथा च घटप्रागभावध्वंसो घटस्वरूपो घटोत्पादकसामग्र्या घटस्य घटप्रागभावध्वंसस्य च युगपदेवोत्पाद्यमानत्वात्।

परं मतमिदं[1] दीधितिकृते न रोचते, स हि ध्वंसप्रागभावस्य ध्वंसप्रतियोगिनः प्रागभावध्वंसस्य च प्रागभावप्रतियोगिनो भिन्नत्वमेव मन्यते, यतो हि घटसत्त्वदशायां घटप्रागभावो घटध्वंसश्च न स्त इत्येवं घटप्रागभावध्वंसस्य घटध्वंसप्रागभावश्च चाभावत्वेन अबाधितप्रत्ययो जायते, यदि घटप्रागभावध्वंसो घटध्वंसप्रागभावश्च घटस्वरूपः स्यात्तर्हि घटस्येव तयोरप्यभावत्वेन प्रत्ययो न स्यात्। यद्येवमुच्येत यद् घटसत्त्वदशायां जायमाने उक्तप्रतीती घटप्रागभावस्य घटध्वंसस्य चात्यन्ताभावमेवावगाहेते अतस्ताभ्यां ध्वंसप्रागभावस्य प्रागभावध्वंसस्य च प्रतियोगिभिन्नत्वं न सेद्धुमर्हति तदा घटध्वंसो भविष्यतीति प्रतीत्या घटध्वंसप्रागभावस्य, एवं घटप्रागभावो नष्ट इति प्रतीत्या प्रागभावध्वंसस्य च घटातिरिक्तत्वं साधनीयम्। अयमाशयः—यदि घटध्वंसप्रागभावो घटस्वरूपः स्यात्तदा तस्य भावतया प्रागभावभिन्नत्वेन प्रागभावत्वेन तदवगाहिनी घटध्वंसो भविष्यतीति प्रतीतिर्न स्याद् यतो हि घटध्वंसो भविष्यतीतिप्रतीतिर्घटध्वंसो वर्तमानप्रागभावप्रतियोगीति प्रतीत्यात्मकतया घटध्वंसप्रागभावं प्रागभावत्वेन अवगाहते। एवं घटप्रागभावध्वंसोऽपि घटस्वरूपो न भवितुमर्हति, अन्यथा घटसत्त्वदशायां घटप्रागभावो नष्ट इति प्रतीतिर्न स्याद् यतो हि इयं प्रतीतिर्घटप्रागभावध्वंसं ध्वंसत्वेन अवगाहते, ध्वंसत्वं चाभावत्वनियतमतो घटप्रागभावध्वंसस्य घटरूपत्वे इयं प्रतीतिरसंगता स्याद् घटे अभावत्वस्य अभावेन अभावत्वव्याप्यध्वंसत्वस्याप्यभावो विद्यते, इत्येवं ध्वंसप्रागभावस्य प्रागभावध्वंसस्य च ध्वंसप्रागभावप्रतियोगिभिन्नत्वं विस्पष्टम्।

परं मतमिदं विचारसहं न भवितुमर्हति, अभावत्वस्य, प्रागभावत्वस्य, ध्वंसत्वस्य च भावाभावसाधारणाखण्डोपाधिरूपत्वमते उक्तदोषाभावेन प्रागभावध्वंसस्य ध्वंसप्रागभावस्य च प्रतियोगिरूपत्वे बाधकाभावात्।

---

१—ध्वंसप्रागभावयोश्चातिरिक्तावेव प्रागभावध्वंसौ घटादेः सत्त्वकाले तस्य प्रागभावध्वंसौ न स्त इत्यबाधिताभावत्वप्रत्ययात्। प्रागभाव एव न पारमार्थिक इत्यन्ये। पदार्थतत्त्वनिरूपणे पृ० सं० ५६-५७॥

## प्रत्यभिज्ञायास्तत्तागोचरसंस्कारजन्यत्वम्

तत्तागोचरसंस्कारात्
प्रत्यभिज्ञां ब्रुवन्ति ते ।
नैयायिकाश्च जन्यां तां
दर्शने बहुचर्चिताम् ॥ १ ॥

प्रयोजके दुर्लभतामवाप्ते
स्मृतिर्विपत्तिर्न कदापि वाच्या ।
स्मृतेर्विभिन्ना परिकल्पिता या
बुधैर्न हेया परिमण्डिता सा ॥ २ ॥

अक्लृप्तहेतुं परिभाव्य वाणी
प्राचां न मान्या गुरुतामवाप्ता ।
तेषां विरुद्धं मतमेव मान्यं
सुस्पष्टरूपं लघुतामुपेतम् ॥ ३ ॥

छिनत्ति पक्षं प्रथितं पुराणं
शिरोमणिर्वागसिना सतर्कः ।
प्रसिद्धपक्षः सुधियां पुरातनो
न मन्तुमर्हो विपुलापकर्षः ॥ ४ ॥

तत्तास्मृतेरेव च हेतुभाव-
स्तत्रेति बोध्यो न परोऽपि हेतुः ।
प्राचां च हेतौ विलसन्ति दोषा-
स्तेषां निरासो न च कर्तुमर्हः ॥ ५ ॥

संस्कारजन्या यदि सैव मान्या
जायेत सा बन्धदशासु वध्या ।
संस्कारसत्त्वे न तु रोद्धुमर्हा
प्राचां च हेतोः सबलस्य सत्त्वात् ॥ ६ ॥

तत्तास्मृतेः कारणकल्पनायां
तस्याः स्मृतेर्बन्धकतादृशायाम् ।
जायेत यस्याः प्रतिवध्यभावो
ऽसाध्वी न मान्या रघुनाथगण्या ॥ ७ ॥

संस्कारजन्येति मतं न दुष्टं
मान्यं तदेवेति मतिर्बुधानाम् ।
चर्चा रघूक्ता परिभात्यभव्या
कम्रा च दृष्टिर्हरते मनो या ॥ ८ ॥

रघूक्तदोषस्य निरासहेतौ
प्रकल्पनीये न विभाति बाधा ।
अतो रघूक्तं विमतं न मान्यं
मतं च गण्यं सुधियां सतर्कम् ॥ ९ ॥

सर्वोऽपि पक्षो नियमेन बद्धः
सत्त्वे च तस्य प्रबलश्च पक्षः ।
प्राचां सतर्को नयतन्त्रसिद्धो
मान्यः सदा बोधविभानुपेतः ॥१०॥



## प्रत्यभिज्ञायाः तत्तागोचरसंस्कारजन्यत्वे दीधितिकृन्मतविमर्शः

प्राचीना नैयायिकाः प्रत्यभिज्ञायास्तत्तागोचरसंस्कारजन्यत्वं मन्यन्ते। न च संस्कारजन्यज्ञानत्वे तस्याः स्मृतित्वापत्तिः संस्कारजन्यज्ञानत्वस्य स्मृतित्वप्रयोजकत्वादिति वाच्यं प्रयोजकत्वस्य दुर्वचत्वात्। तथा हि—प्रयोजकत्वं यदि व्यापकत्वरूपं तदा प्रत्यभिज्ञायाः स्मृतिभिन्नत्वेऽपि तत्साधारणे संस्कारजन्यज्ञानत्वे न स्मृतित्वव्यापकताया अनुपपत्तिर्व्यापकस्य व्याप्यातिरिक्तवृत्तित्वे विरोधाभावात्। यदि प्रयोजकत्वं व्याप्यत्वरूपं तदापि प्रत्यभिज्ञायाः स्मृतिभिन्नत्वे न किञ्चिद् बाधकम्। संस्कारजन्यज्ञानत्वे स्मृतित्वव्याप्तौ प्रमाणाभावेन ततः प्रत्यभिज्ञायाः स्मृतित्वापादनस्यासंभवात्।

किन्तु[1] मतमिदं दीधितिकृतं प्रीणयितुं न प्रभवति, प्रत्यभिज्ञायास्तत्तासंस्कारजन्यत्वोपगमे उद्बोधकासमवहितात् स्मृतिप्रतिबन्धकसमवहितात् तत्तासंस्कारादपि प्रत्यभिज्ञाया उत्पत्तिप्रसङ्गात्। उद्बुद्धतत्तासंस्कारस्य च प्रत्यभिज्ञां प्रति कारणत्वं दुर्वचम्, तत्तासंस्कारोद्बोधे तत्तास्मृतेर्जन्मनः अपरिहार्यतया तत्तास्मृतेरेव प्रत्यभिज्ञां प्रति जनकत्वौचित्यात्। तस्या ज्ञानलक्षणसन्निकर्षविधया कारणत्वस्योक्तत्वात्। प्रत्यभिज्ञां प्रत्युद्बुद्धस्य तत्तासंस्कारस्याक्लृप्तकारणत्वकल्पने गौरवात्।

परं दीधितिकृतां प्रत्यभिज्ञायां तत्तास्मृतिजन्यत्वसाधिका युक्तिर्न समीचीना तत्तास्मृतिजनने तत्ताविषयकसंस्कारस्य यावन्तः सहकारिणस्तावतां प्रत्यभिज्ञोत्पत्तौ अपि तत्तासंस्कारसहकारित्वकल्पनयोद्बोधकासमवधाने स्मृतिप्रतिबन्धकसमवधाने च प्रत्यभिज्ञाया उत्पत्त्यापत्तेरसंभवात्।

यदिदमुक्तं यत्प्रत्यभिज्ञापूर्वं तत्तास्मृतिजनने तत्तासंस्कारस्य सर्वेषां सहकारिणां समवधाने तत्तास्मृतेर्जन्मनोऽनिवार्यतया प्रत्यभिज्ञायां तत्तास्मृतिजन्यत्वस्वीकार एव

१–प्रत्यभिज्ञायाश्च तत्तागोचरसंस्कार एव हेतुरिति प्राञ्चः। न च तस्याः संस्कारजन्यज्ञानत्वे स्मृत्वापत्तिः। तज्जन्यज्ञानत्वस्य तत्र प्रयोजकत्वादिति वाच्यम्, किमिदं प्रयोजकत्वं नाम, न व्यापकत्वमविरोधात्, न व्याप्यत्वं प्रमाणाभावात्।

परं त्वनुद्भूतेऽभिभूते वा तत्तासंस्कारे प्रत्यभिज्ञाया अनुत्पादेन तत्तास्मृतेरेव तद्धेतुरिति मन्तव्यम्॥ पदार्थतत्त्वनिरूपणे पृ० सं० ५७-५८।

उचित इति तदपि न समीचीनं तत्तास्मृतिसामग्रीकाले इदन्त्वप्रकारकलौकिकप्रत्यक्ष-सामग्र्या उपस्थितौ लौकिकप्रत्यक्षसामग्र्या बलवत्त्वेन तत्प्रत्यक्षोत्पत्तेरेवौचित्येन तत्प्रत्यक्षे एव तत्ताविषयकत्वस्वीकारस्यौचित्यात्। अन्यथा प्राग् 'अयमिति' प्रत्यक्षस्य, अनन्तरं च तत्तास्मृतेश्च स्वीकरणीयतया तदनन्तरमेव प्रत्यभिज्ञाया उत्पत्तिस्वीकारस्य संभवदौचित्यकत्वात्।

न चैवमभ्युपगमो युक्त इदमा सह सन्निकर्षे तत्तासंस्कारोद्बोधे चाव्यवहितो-त्तरक्षण एव प्रत्यभिज्ञाया अनुभूयमानत्वात्।

न च तत्तास्मृतिजनने तत्तासंस्कारसहकारिणां सर्वेषां प्रत्यभिज्ञां प्रति कारणत्व-कल्पने गौरवमिति वाच्यं प्रत्यभिज्ञां प्रति तेषां कारणत्वस्याकल्पनीयत्वात्।

न च तेषामसमवधानेऽपि प्रत्यभिज्ञाया उत्पत्तिप्रसङ्ग इति शङ्क्यं प्रत्यभिज्ञाया-स्तत्तास्मृतिसामग्रीसमवधानाव्यवहितोत्तरत्वनियमेन तत्तास्मृतिजनकानां प्रत्यभिज्ञां प्रत्यजनकत्वेऽपि तत्सन्निधानस्य प्रत्यभिज्ञोत्पत्तावपेक्षणीयत्वात्। यदव्यवहितोत्तरं यज्जायते तदुत्पत्तिस्तत्सन्निधानसापेक्षेति नियमात्। न चायं नियमोऽप्रयोजको निरुपा-धिकत्वस्यैव प्रयोजकत्वात्।

नन्वेवं तत्तास्मृतिजनकानां सर्वेषामन्वयव्यतिरेकानुविधानेऽपि प्रत्यभिज्ञायास्त-ज्जन्यत्वानभ्युपगमे जन्यजनकभाव एवोत्सीदेदिति चेन्न, अन्यथासिद्धत्वग्राहकासन्नि-हितस्यैवान्वयव्यतिरेकज्ञानस्य कारणताग्राहकत्वात्। अत्र तु प्रत्यभिज्ञायास्तत्ताविषय-कत्वेनैव समेषां तत्तास्मृतिजनकानामन्वयव्यतिरेकानुविधायित्वं न तु तत्ताविशिष्टे-दन्त्वावच्छिन्नविषयकप्रत्यक्षत्वरूपप्रत्यभिज्ञात्वेन, अतो न तदवच्छिन्नं प्रति तेषां कारणत्वं किन्तु अन्यथासिद्धत्वमेव। अतः प्रत्यभिज्ञायां तत्ताविषयकसंस्कारजन्यत्वे न किञ्चिद् बाधकम्।



## क्षणस्य कालोपाधित्वविमर्शः

क्षणो न भिन्नः कथितः पदार्थ-
स्तत्त्वे तदीये गुरुता दुरूहा ।
अतोऽतिरिक्तं न च तस्य सत्त्वं
क्षणस्य बोध्यं प्रतिभैकवित्तैः ॥ १ ॥

क्लृप्तैः पदार्थैर्व्यवहारजातं
संसेद्धुमर्हं न विभाति बाध्रा ।
कर्मैव मुख्यं व्यवहारहेतुः
कालस्य भेदे परिभाति भव्यम् ॥ २ ॥

क्षणश्च कर्मैव बुधैः प्रगीतं
विधा नवा नास्ति परा च कापि ।
पुराणतन्त्रे परिभाषितं त-
न्न चात्र दोषः परिभाति कोऽपि ॥ ३ ॥

क्षणश्च कर्मैव विशिष्टरूपं
शिरोमणिर्वक्ति मतं न मान्यम् ।
अनेकदोषैर्विहतं मतन्तद्
न सोढुमर्हं सुधियां मतं च ॥ ४ ॥

स्वतन्त्रसत्ता भणिता तु तस्य
क्षणस्वधर्मेण विभासिता सा ।
तस्यां च रीतौ न स दोषसत्ता
शिरोमणेर्मान्यपथो न हेयः ॥ ५ ॥

क्लिष्टा कथा गौरवगानसक्ता
प्राचां न मान्या बहुदोषबद्धा ।
मान्यं मदीयं लघुतामुपेतं
हेयं मतं नापि विशिष्टपक्षम् ॥ ६ ॥

स्वत्वप्रवेशेन मतश्च दुष्टं
मान्यं कथं तद् विपरीतपक्षम् ।
स्वतन्त्रतत्त्वे परिकल्प्यमाने
स्वत्वप्रवेशस्य न कापि शङ्का ॥ ७ ॥

सम्बन्धकुक्षौ परिलक्ष्यते तत्
स्वत्वं न कष्टं परिचेतुमर्हम् ।
स्वत्वाप्रवेशेऽपि च सेद्धुमर्हो
भिन्नक्षणो नास्ति मतं न हेयम् ॥ ८ ॥

रघूक्तवाग्भात्यतिरिक्तपक्षा
कथं न हेया गुरुतामवाप्ता ।
क्षणोऽतिरिक्तो न स मन्तुमर्हः
शिरोमणेर्दुबलतर्ककक्षः ॥ ९ ॥

क्षणश्च कर्मैव विशिष्टरूपं
नवाऽतिरिक्ता न तदीयसत्ता ।
पुरातनानां परिकल्पनैषा
विगर्हणीया न च तर्कतन्त्रा ॥१०॥



## क्षणस्य कालोपाधित्वे दीधितिकृन्मतविमर्शः

प्राचीननैयायिकैः क्षणस्यातिरिक्तपदार्थत्वं न स्वीक्रियते, किन्तु क्लृप्तपदार्थैरेव तद्व्यवहार उपपाद्यते। तत्र मुख्यतयोक्तव्यवहारोपपत्तये कर्मैवाश्रीयते। कर्मणि उत्पन्नेऽविलम्बमेव कर्मवतो द्रव्यस्य पूर्वदेशाद् विभागो जायते, विभागप्रागभावः कर्मोत्पत्तिकालोत्तरं नावतिष्ठते। कर्मपूर्वं विभागप्रागभावस्तिष्ठन्नपि कर्मणा विशिष्टो न भवति, अतः कर्मविभागप्रागभावयोः कर्मोत्पत्तिपूर्वं कर्मोत्पत्त्यनन्तरं चाविद्यमानतया ताभ्यामेव क्षणव्यवहारसमर्थनसौकर्यं विलोक्य विभागप्रागभावविशिष्टकर्मण एव क्षणपदार्थत्वं मन्यते। कर्मणि विभागप्रागभाववैशिष्ट्यं च स्वाधिकरणकालवृत्तित्व-सम्बन्धेन।

न च स्थूलकालघटितोक्तसम्बन्धेन विभागप्रागभावविशिष्टकर्मणः क्षणचतुष्टय-पर्यन्तं स्थिरत्वेन क्षणत्वानुत्पत्तिरिति वाच्यं सम्बन्धशरीरे विनश्यदवस्थवस्तुन एव कालतया निवेशात्। विनश्यदवस्थत्वं च नाशविशिष्टत्वं वैशिष्ट्यं च स्वप्रतियोगित्व-स्वविशिष्टकालवैशिष्ट्योभयसम्बन्धेन, स्ववैशिष्ट्यञ्च स्वप्रागभावाधिकरणसमयप्रागभावा-नधिकरणत्व-स्वप्रागभावाधिकरणत्वोभयसम्बन्धेन, कालवैशिष्ट्यञ्च कालिकसम्बन्धेन। एवं भूतं वस्त्वेकक्षणमेवावतिष्ठतेऽतः स्वाधिकरणेदृशवस्त्वात्मककालवृत्तित्वसम्बन्धेन विभागप्रागभावविशिष्टकर्मण एतादृशे क्षणमात्रावस्थायिनि वस्तुन्येव विद्यमानतया क्षण-त्वमुपपद्यते अतः सम्बन्धशरीरे स्थूलकालमादाय क्षणचतुष्टयावस्थायिकर्मणः क्षणत्वं नापाद्यते।

परन्तु[१] दीधितिकारो मतमेतन्नाभ्युपैति। अनभ्युपगमे च कारणं ब्रवीति यद् विभागप्रागभावविशिष्टकर्मणः प्रथमकर्मानन्तरं भाविना समानाधिकरणकर्मणा जन्यस्य

---

१—क्षणश्च क्षणिकोऽतिरिक्तः कालोपाधिः। विभागप्रागभावविशिष्टं कर्मैव तथेति चेन्न उदीच्यकर्मजन्यविभागप्रागभावविशिष्टस्य कर्मणः क्षणचतुष्टयावस्थायित्वात्। स्वजन्य-विभागप्रागभावविशिष्टं तत् तथेति चेत्तर्हि स्वत्वाननुगमादननुगमः।

जाते च विभागे कुतः क्षणव्यवहारः। विभागपूर्वसंयोगविशिष्टात्कर्मण एवेति चेत्तर्हि सुतरामननुगमः। एवं पूर्वसंयोगनाशकाले उत्तरसंयोगकालेऽपि कर्मसत्त्वे क्षणत्वं वक्तव्यमिति।

विभागस्य प्रागभावमादाय क्षणचतुष्टयपर्यन्तमवस्थिततया क्षणचतुष्टयं यावत्तस्यैकक्षणत्वापत्तिः स्यात्। अयमाशयः—

कस्मिंश्चिद् द्रव्ये उत्पन्नं कर्म स्वजन्योत्तरसंयोगस्याव्यवहितोत्तरक्षणे नश्यति, तदानीमेव तदाश्रये कर्मान्तरं सम्भाव्यते तेनोत्पाद्यमानस्य विभागस्य प्रागभावोऽनादिकालाद् द्वितीयकर्मण उत्पत्तिपर्यन्तमनुवर्ततेऽतः प्रथमकर्मणोऽधिकरणेषु चतुर्षु क्षणेषु प्रथमकर्मणि तद्वैशिष्ट्यमस्ति, अतो विभागप्रागभावावच्छिन्नकर्मणः क्षणचतुष्टयपर्यन्तं स्थायितया क्षणचतुष्टयं यावत्तस्य कर्मणः क्षणत्वापत्तिर्निष्प्रतिबन्धा।

यदि चास्य दोषस्य परिहाराय कर्मणि स्वजन्यविभागप्रागभावविशिष्टत्वं निवेश्यते तदा स्वत्वस्याननुगतत्वेन तद्घटितस्य क्षणपदार्थस्याननुगमेन क्षणपदस्याननुगतार्थत्वं स्यात्। एवं स्वजन्यविभागप्रागभावविशिष्टकर्मणः क्षणत्वे कर्मणो द्वितीयादिक्षणेषु क्षणव्यवहारो न स्यात्तदानीं स्वजन्यविभागप्रागभावस्याविद्यमानत्वेन स्वजन्यविभागप्रागभावविशिष्टस्य कर्मणोऽसत्त्वात्। यदि च द्वितीयक्षणे स्वनाश्यपूर्वसंयोगविशिष्टस्य कर्मणः क्षणत्वमभ्युपगम्य द्वितीये क्षणे क्षणव्यवहार उपपाद्येत तदा तृतीयादिक्षणेषु क्षणव्यवहारोपपत्तये अन्यान्यविशिष्टस्य कर्मणः क्षणत्वस्याभ्युपगन्तव्यतया क्षणपदार्थस्याननुगतत्वमपरिहार्यमेव स्यादतः क्षणपदस्यानुगतार्थकत्वोपपत्तये क्षणस्यातिरिक्तपदार्थस्य कालोपाधितया अङ्गीकार आवश्यकः, क्षणस्यानन्तत्वेऽपि सर्वत्र तत्रैकस्यानुगतस्य क्षणत्वधर्मस्य विद्यमानतया तेनैव रूपेण क्षणानां क्षणपदार्थत्वस्वीकारेण न क्षणपदस्याननुगतार्थकत्वप्रसङ्गः।

परं दीधितिकृतः क्षणविषयिणी सर्वेयं कथाऽसत्कथैव। तथा हि स्वजन्यविभागप्रागभावविशिष्टस्य कर्मणः क्षणत्वोपगमे स्वत्वाननुगमप्रयुक्तो यः क्षणपदार्थाननुगमः प्रदर्शितः स न संगच्छते। स्वजनकत्व-स्वप्रागभाववत्त्वोभयसम्बन्धेन विभागविशिष्टस्य कर्मणः क्षणत्वे दोषाभावात्। सम्बन्धकुक्षौ स्वत्वस्य परिचयार्थमेवोक्तत्वात्। वस्तुतो जनकताया जनकतात्वेन प्रागभावस्य च प्रागभावत्वेनैव सम्बन्धशरीरे प्रवेशात्। अन्यजनकत्वस्य अन्यप्रागभावस्य चापरसम्बन्धत्वासंभवेन दोषाभावात्। एवं जनकत्वप्रागभाववत्त्वोभयसम्बन्धेन विभागविशिष्टस्यैव कर्मणः क्षणत्वं फलति, तथा च पूर्व-

---

अदृष्टदशरथादीनां चेदानीन्तनानां दशरथवदादन्येषामपि पिशाचादिपदात् केन रूपेण पदार्थोपस्थितिरित्यवहितैः परिभावनीयं सूरिभिरितिकृतं पल्लवितेन। पदार्थत्वनिरूपणे पृ० सं० ५८-६१॥

-कर्मणि उत्तरकालभाविकर्मजन्यविभागजनकत्वस्याभावेन न तद्वैशिष्ट्यमादाय दोषः। एवं च क्षणकुक्षौ स्वत्वस्याप्रवेशेन नाननुगमो दोषः।

न च जनकत्वमपि स्वनिरूपितान्यथासिद्धिशून्यत्वे सति स्वाव्यवहितपूर्वक्षण-नियतवृत्तित्वरूपमेव भवति, अतस्तत्कुक्षौ स्वत्वप्रवेशेन अननुगमतादवस्थ्यमिति वाच्यं जनकत्वस्यापि अन्यथासिद्धिशून्यत्वाव्यवहितपूर्वक्षणनियतवृत्तित्वेतिस्वत्वाघटितोभय-सम्बन्धेन वस्तुविशिष्टत्वरूपस्य स्वीकारेण दोषाभावात्।

न चाव्यवहितपूर्वक्षणत्वं स्वत्वप्रवेशं विना दुर्वचं तस्य स्वाधिकरणसमयप्रागभा-वाधिकरणसमयप्रागभावानधिकरणत्वे सति स्वाधिकरणसमयप्रागभावाधिकरणत्वरूप-त्वादिति वाच्यम् एतत्कुक्षावपि स्वत्वस्यानिवेशात्।

न च स्वत्वाघटितस्योक्तोत्तरांशस्य सुवचत्वेऽपि पूर्वांशो दुर्वचः। अधिकरण-समयप्रागभावाधिकरणसमयप्रागभावाधिकरणत्वस्य महाप्रलयान्यसर्वकालेषु विद्यमान-तया तत्तदव्यवहितपूर्वत्वेनाभिमतेषु क्षणेषु क्षणत्वस्यासम्भवापत्तेरिति वाच्यम्, अधिकरणसमयप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वरूपाभावप्रतियोगितानिरूपि-तपरम्परीयाधिकरणनिष्ठावच्छेदकतायामितरवारकानिवेशेन तत्तदधिकरणसमयप्राग-भावाधिकरणसमयप्रागभावानधिकरणत्वसाधारणस्य स्वत्वाघटिततादृशाधिकरणत्वा-भावत्वस्य सुनिर्वाच्यत्वात्। अतो दीधितिकृतोक्तः स्वत्वाननुगमो दोषो निरुक्ते क्षणलक्षणे नोपपद्यते।

यत्पुनस्तेन स्वजन्यविभागप्रागभावविशिष्टेन कर्मणा प्रथमक्षणे स्वनाश्यपूर्व-संयोगविशिष्टेन च तेन द्वितीयक्षणे क्षणव्यवहारस्योपपादनीयतया क्षणपदस्याननुग-तार्थकत्वमुक्तं तदपि न सामीचीन्यमश्चति, सर्वेषु क्षणेषु स्वजन्यविभागप्रागभाव-विशिष्टकर्मणैव क्षणव्यवहारस्योपपादनीयत्वात्। विस्तृते जगति कर्मसमवायित्व-योग्यानन्तमूर्त्तबहुले प्रतिक्षणमेव यत्र कुत्रापि यस्य कस्यचित् कर्मण उत्पत्तेः संभवेन प्रतिक्षणमेव स्वजन्यविभागप्रागभावविशिष्टकर्मणः सौलभ्यात्। किं च क्षणपदार्थ-स्याननुगतत्वेऽपि तेषु सर्वेषु एकस्यानुगतस्याखण्डोपाधिरूपस्य क्षणत्वस्य स्वीकारेणैव क्षणपदस्यानुगतार्थकत्वसंभवेन अतिरिक्तस्य क्षणपदार्थस्याभ्युपगमो निरर्थक एव।

न च युगपदुत्पन्नेषु अनन्तेषु स्वजन्यविभागप्रागभावविशिष्टकर्मसु क्षणत्व-सम्बन्धकल्पनापेक्षया युगपदुत्पन्नानां तेषां समेषां कर्मणामुत्पत्त्या सममुत्पद्यमानमेक-मतिरिक्तक्षणमभ्युपेत्य तन्मात्रे क्षणत्वसम्बन्धकल्पने लाघवानुरोधेनातिरिक्तस्य क्षण-पदार्थस्य स्वीकरणमेवोचितमिति वाच्यमतिरिक्तक्षणपदार्थे अभ्युपगते तत्प्रागभावस्य

तद्ध्वंसस्य तदीयध्वंसप्रागभावयोश्च तत्र विभिन्नपुरुषीयज्ञानविषयत्वकल्पने घटत्वाद्य-भावानां वाच्यत्वादीनां चानन्तपदार्थानां सम्बन्धकल्पने च महागौरवापत्तेः ।

न चातिरिक्तक्षणकल्पनोक्तेः क्षणत्वरूपातिरिक्तधर्मकल्पनायामेव तात्पर्यमिति शक्यवचनमुक्तरीत्या विभागप्रागभावविशिष्टकर्मत्वस्य क्लृप्तस्यैव क्षणपदप्रवृत्ति-निमित्तत्वसंभवेन अतिरिक्तक्षणत्वकल्पनाया गौरवपराहतत्वात् ।



## स्वत्वस्य पदार्थान्तरत्वविमर्शः

स्वत्वं पदार्थान्तरतामुपेतं
ग्रन्थे स्वकीये रघुणा प्रगीतम् ।
क्लृप्तेषु कुत्रापि न भाति भव्या
मान्या च गण्या गणना तदीया ॥ १ ॥

परिष्कृतिस्तस्य न भाति भव्या
प्रकृष्टदोषैर्विहता प्रकामम् ।
अतोऽतिरिक्तं लभते स्वसत्त्वं
विराजते स्वत्वविधा स्वतन्त्रा ॥ २ ॥

न भाति भूतिः प्रतिभाधनानां
परिष्कृतौ या हरते प्रदोषम् ।
अतोऽतिरिक्ता गणना न हेया
कदापि तस्याः सुधिया धिया वा ॥ ३ ॥

वस्त्वन्तरत्वे गुरुता न हेया
स्वत्वस्य मान्ये भणिते प्रकृष्टा ।
तस्या निरासो न च युक्तियुक्तो
मान्यं रघूक्तं कथमस्ति बोध्यम् ॥ ४ ॥

न कापि चर्चा लघुतामवाप्ता
रघूक्तमार्गा विपरीततर्का ।
तथापि मानी सहसा ब्रवीति
बिभेति ना गौरवतो मनीषी ॥ ५ ॥

स्वत्वस्य निर्दुष्टविधा न कापि
वाणी विभातीति रघूक्तिरेषा ।
विज्ञानताभारभरा विभाति
नाभाति तथ्यांशवचःप्रसूता ॥ ६ ॥

परिष्कृतिर्भव्यविधावलम्बा
पुरातनैः साध्यसुधाकदम्बा ।
अतो न हेया बुधवर्गमान्या
न दोषलेशा परिभात्यभव्या ॥ ७ ॥

परिष्कृतिर्भाति न भव्यरूपा
रघूक्तिरूपा सरला सदोषा ।
तया न सर्वत्र सुधा स्वतायाः
विगर्हितव्या तत एव साग्नि ॥ ८ ॥

प्राचीनतान्त्रीयविधा स्वतायाः
मान्या सदा लाघवभूतिभव्या ।
नातः पृथङ्मान्यविधा स्वतायाः
हेया रघूक्तिर्गुरुतामवाप्ता ॥ ९ ॥

दृष्टिर्नवा भाति रघोरनर्घा
प्राचीनवैधीं मनुते यया न ।
दोषं च तस्याः सहते न दृष्टेः
स्फूर्तिर्बुधानां नयमण्डितानाम् ॥१०॥

प्राचां बुधानां विमलैव दृष्टिः
सृष्टिं समग्रां सहते सदोषाम् ।
मान्या सदा मान्यविधावलम्बा
लम्बक्रिया गौरवभारहारी ॥११॥



## स्वत्वस्य पदार्थान्तरत्वे दीधितिकृन्मतविमर्शः

दीधितिकृता स्वत्वस्य पदार्थान्तरत्वप्रतिष्ठापयिषया स्वकीये पदार्थतत्त्वनिरूपणग्रन्थे इत्थमुक्तम्—

'एवं स्वत्वमपि पदार्थान्तरम् : यथेष्टविनियोगयोग्यत्वं तदिति चेत्कोऽसौ विनियोगो, भक्षणादिकमिति चेन्न परकीयेऽप्यन्नादौ तत्संभवात्, शास्त्रनिषिद्धं तदिति चेत् किं तच्छास्त्रं ? परस्वं नाददीतेत्यादिकमिति चेत् स्वत्वाप्रतीतौ कथं तत्प्रवृत्तिस्तस्मात्स्वत्वमतिरिक्तमेव, प्रमाणं च तत्र परस्वं नाददीतेत्यादिकं शास्त्रमेव, तच्च प्रतिग्रहोपादानक्रयणपित्रादिमरणैर्जन्यते दानादिभिश्च नाश्यते कारणानामेकशक्तिमत्त्वात्कार्याणां वैजात्याद्वा कार्यकारणभावनिर्वाहः' ।

अत्रैवमालोच्यते—स्वत्वस्य पदार्थान्तरत्वं यथेष्टविनियोगयोग्यत्वस्य स्वत्वपदार्थत्वखण्डनेन दीधितिकृता यत्प्रतिष्ठापितं तन्नोचितं यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वाभ्युपगमे दोषाभावात् । न चोक्त एव दोषो यद् यदि विनियोगशब्देन भक्षणादिरुच्यते तदा परकीयान्नादावपि स्वत्वमापद्यते तस्यापि यथेच्छं भक्षणीयत्वादिसंभवेन तत्रापि यथेष्टविनियोगयोग्यत्वस्यानपायात् । दोषस्यास्य वारणाय यदि विनियोगे शास्त्रानिषिद्धत्वं विशेषणमुक्त्वा यथेष्टशास्त्रानिषिद्धविनियोगयोग्यत्वं स्वत्वमित्युच्यते, तदा इदमपि न संभवति, शास्त्रानिषिद्धत्वज्ञानस्य शास्त्रनिषिद्धत्वज्ञानाधीनत्वात्, तज्ज्ञानस्य च परस्वं नाददीतेत्यादिवाक्येनैव साध्यतया तद्घटकस्वपदार्थस्वत्वज्ञानसापेक्षतया अन्योन्याश्रयादितिवाच्यं स्वसमवेतादृष्टजन्ययथेष्टभक्षणादिलक्षणविनियोगयोग्यत्वस्य स्वत्वपदार्थत्वाभ्युपगमे दोषाभावात् ।

न च परकीयान्नादिभक्षणमपि भक्षयितृसमवेतादृष्टजन्यतया परकीयान्नादावपि स्वत्वापत्तिरिति वाच्यं तत्र विजातीयादृष्टाननुबन्धित्वस्य निवेशेन दोषाभावात् । तथाहि—

परकीयान्नभक्षणमपि यद्यपि भक्षयितुरदृष्टाधीनमेव परन्तु तददृष्टं स्वविजातीयाधर्मात्मकादृष्टानुबन्ध्यतः परकीयान्नभक्षणादौ भक्षयितृसमवेतविजातीयादृष्टाननुबन्ध्यदृष्टजन्यत्वाभावेन न परकीयान्नादौ स्वत्वप्रसङ्गः ।

न चेदमपि स्वत्वं ज्ञप्तौ अन्योन्याश्रयग्रस्तं यतो हि तद्घटके अदृष्टे विजातीयादृष्टाननुबन्धित्वज्ञानं विजातीयादृष्टानुबन्धित्वरूपप्रतियोगिज्ञानाधीनं तच्च विनियोगजनके

अदृष्टे विनियोगस्य शास्त्रनिषिद्धत्वज्ञानाधीनं तच्च परस्वं नाददीतेत्यादिवाक्यघटकस्वत्वपदार्थज्ञानाधीनमिति वाच्यं परस्वं नाददीतेतिशास्त्रघटकपरस्वशब्देन परस्वशब्दव्यवहार्यस्य विवक्षितत्वात्। एवं च परस्वं नाददीतेतिवाक्यस्यायमर्थो यत् परस्वशब्दव्यवहार्यनाददीतेतिनिषेधवाक्यार्थगर्भे स्वत्वस्याप्रविष्टतया न दोषः। परकीयान्नादौ परस्वशब्दव्यवहार्यत्वज्ञानं च परस्वमितिलोकव्यवहाराधीनमतो नान्योन्याश्रयः।

किं च विनियोगे निविष्टस्य यथेष्टत्वस्य निर्वचनादपि परकीयान्नादौ स्वत्वं परिहृतं भवति, तदीयविनियोगस्य यथेष्टत्वाभावात्। तथाहि—यथेष्टत्वं नाम इच्छाविशिष्टत्वं वैशिष्टयञ्च स्वजन्यत्व-स्वव्यधिकरणप्रयत्नबाधानर्हत्वोभयसम्बन्धेन, एवं च स्वकीयान्नभक्षणमेवोक्तरीत्या यथेष्टं भवितुमर्हति तस्य पुरुषान्तरप्रयत्नबाधानर्हत्वात्। परकीयान्नभक्षणं न यथेष्टं तस्य परप्रयत्नबाधार्हत्वात्।

नचैवं स्वकीयान्नादावपि स्वत्वं नोपपद्येत तद्भक्षणस्यापि साहसिकादि-यत्नतः प्रतिबन्धसंभवेनोक्तयथेष्टविनियोगयोग्यस्याभावादिति वाच्यं सम्बन्धघटकप्रयत्ने साहसिकाद्यवृत्तित्वनिवेशेन दोषस्यास्य वारणसंभवात्।

न च विनियोगयोग्यत्वस्य स्वरूपसम्बन्धविशेषात्मकस्यैव वक्तव्यतया धनादिनिष्ठस्य चैत्रादिस्वत्वस्य धनादिरूपतया उत्पन्ने धने तदुत्पत्तिर्न स्यादुत्पन्नस्योत्पत्त्ययोगात् स्वाभिन्ने स्वस्योत्पत्त्ययोगाच्च। एवं विक्रयादिना तन्नाशोऽपि न स्यात् तदभिन्नस्य धनादेर्विद्यमानतया तस्यापि विद्यमानताया आवश्यकत्वादिति वाच्यं क्रयादिना क्रीते वस्तुनि क्रेतुर्विनियोगजनकेच्छाया उत्पत्त्या तद्घटितस्वत्वस्याप्युत्पन्नत्वव्यवहारसंभवात्। एवं विक्रयेण विक्रीते वस्तुनि विक्रेतुर्विनियोगजनकेच्छाया नाशेन तद्घटितस्वत्वेऽपि नष्टत्वव्यवहारसंभवात्।

न च विक्रये जाते विक्रीते वस्तुनि विक्रेतुर्विनियोगजनिकेच्छैव न जायते, अतो विक्रयेण विक्रेतुरिच्छाया अनाशेन तद्घटितस्वत्वे नाशव्यवहारोऽनुपपन्न इति वाच्यं तत्र विक्रेतुरिच्छानुत्पादेन तदिच्छाघटितोक्तस्वत्वाभावस्यैव स्वत्वनाशत्वेन व्यवहारसंभवात्। तदेवं यथेष्टविनियोगयोग्यत्वलक्षणस्य स्वत्वस्य निर्दोषनिर्वचनसंभवेन स्वत्वस्य पदार्थान्तरत्वकल्पनमसंगतमेव निष्प्रयोजनत्वात्, उत्पत्तिविनाशशीलानामनन्तस्वत्वानां कल्पने गौरवाच्च।

यत्तु रघुदेवेन सम्बद्धभागे स्वव्याख्यायामिदमुक्तं यद् योग्यत्वस्य निर्वचनाशक्यतया तद्घटितलक्षणमनुपपन्नमिति तत्तुच्छम्, इदं योग्यमिदं न योग्यमित्यादिप्रतीतिसाक्षिकस्य स्वरूपसम्बन्धविशेषलक्षणस्य योग्यत्वस्य निर्वक्तुं शक्यत्वात्।

न च स्वरूपसम्बन्धात्मिकाया योग्यताया धनरूपत्वे क्रयपूर्वमपि परकीयधने स्वत्वव्यवहारापत्तिस्तदात्मना स्वत्वस्य तदानीमपि विद्यमानत्वात्। यदि च स्वत्वं

क्रयादिरूपं तदा धनादिना सह क्रेतुः क्रयादिसम्बन्ध एव मान्यस्तथा च क्रयनाशक्षण एव क्रीते स्वत्वस्य नाशापत्तिस्तथा च क्रयनाशोत्तरं दानविक्रयादितः पूर्वं च क्रीते क्रेतुः स्वत्वं भज्येतेति वाच्यं यथेष्टविनियोगयोग्यत्वस्य धनादिरूपत्वे दोषाभावात् ।

नचैतत्पक्षे क्रयपूर्वकालेऽपि स्वत्वव्यवहारापत्तिरूपो दोषो दर्शित एवेतिवाच्यं यथेष्टविनियोगयोग्यत्वकुक्षौ विनियोगे इच्छाया विशेषणविधया निवेशेन क्रयपूर्वकाले क्रेतुर्विनियोगेच्छाया अनुत्पत्त्या तद्घटितयोग्यत्वस्य तदानीमभावात् । विशेषणाभावे विशिष्टाभावस्य सर्वसम्मतत्वात् ।

कैश्चित्तु क्रीतधने विक्रयप्रागभावविशिष्टक्रयविनाशस्य प्रतिगृहीते धने च दानादिप्रागभावविशिष्टप्रतिग्रहादिध्वंसस्य, पैतृके धने विक्रयादिप्रागभावविशिष्टपितृध्वंसस्य स्वत्वरूपत्वमभ्युपेत्य स्वत्वस्यातिरिक्तपदार्थत्वमस्वीकृतम् । तेषामयमाशयः—यद् विक्रयो नाम इदं मूल्यग्रहणेन मम मास्तु मूल्यदानेन परस्यास्तु, इत्याकारिकेच्छा, एवं क्रयो नाम मूल्यग्रहणेन विक्रेतुर्मास्तु मूल्यदानेन ममास्तु इत्याकारिकेच्छा, तथा च यदा क्रेतुरुक्तेच्छात्मकः क्रयो जायते तदा स योग्यविभुविशेषगुणानां स्वोत्तरवर्त्तिगुणनाश्यत्वनियमेन द्वितीयक्षणे उत्पन्नाद् गुणात्तृतीयक्षणे नष्टो भवति अथ च क्रीतवतो विक्रयात्मिकाया उक्तेच्छायाः प्रागभाव उक्तेच्छाया अनुत्पत्तिं यावदवतिष्ठते तदेवं क्रयोत्तरं विक्रयपूर्वं च विक्रयप्रागभावविशिष्टक्रयविनाशसत्त्वेन क्रीते वस्तुनि तदेव स्वत्वम् ।

एवं मूल्यादिग्रहणं विना मम मास्तु मूल्यादिप्रदानं विना ब्राह्मणस्यास्तु इत्येवंविधा गवादिधनविषयिणी इच्छा दानम्, मूल्यादिग्रहणं विनापि दातुर्मास्तु मूल्यादिदानं विना च ममास्तु इत्याकारिकेच्छा च प्रतिग्रहः,प्रतिग्रहरूपाया इच्छाया ध्वंसे सति प्रतिगृहीते वस्तुनि प्रतिग्रहीतुरिच्छात्मकदानस्य प्रागभावस्तादृशेच्छानुत्पत्तिं यावदवतिष्ठते, एवं च प्रतिग्रहोत्तरं दानपूर्वं च दानप्रागभावविशिष्टप्रतिग्रहध्वंसस्तिष्ठतीति तदेव प्रतिगृहीतधनादिगतं स्वत्वम् ।

एवं च पितृमरणप्राप्ते पैतृके धने यावदुक्तेच्छात्मकदानविक्रयादिर्न भवति तावद् दानादिप्रागभावविशिष्टपितृध्वंसोऽवतिष्ठते इति तदेव पैतृकधनगतं पुत्रस्य स्वत्वम् । तच्च स्वघटकप्रागभावप्रतियोगीच्छाविषयत्वसम्बन्धेन स्वत्वव्यवहारनियामकम्, स्वघटकप्रागभावाश्रयत्वसम्बन्धेन च स्वामित्वव्यवहारनियामकमिति ।

नचैवं सति स्वत्वस्यानुगतव्यवहारो नोपपद्येत उक्तरूपाणामनुगतैकधर्मराहित्यादिति वाच्यं सर्वेषु तेषु एकस्यातिरिक्तस्वत्वत्वस्य कल्पनया तत्तदात्मकस्वत्वानामनुगतव्यवहारसंभवात् । स्वीकर्त्तव्यश्चैवंविधोऽतिरिक्तपदार्थरूपः स्वत्वत्वधर्मोऽतिरिक्तस्वत्ववादिभिरपि । अन्यथोत्पादकभेदेन आश्रयभेदेन च स्वत्वस्यानेकतया तन्मतेऽपि अनुगतः स्वत्वव्यवहारो नोपपद्येत ।

मतमिदं रघुदेवेन प्रागभावे मानाभावमुक्त्वा खण्डितं किन्तु खण्डनमिदं समीचीनं न प्रतिभाति प्रागभावस्य खण्डनासंभवात्। पाकेन युगपदुत्पद्यमानेषु समानाश्रयरूपरसगन्धस्पर्शेषु रूपप्रागभावादिजन्यत्वाभ्युपगमं विना वैजात्यस्योपपादयितुमशक्यत्वात्।

किं च विक्रयप्रागभावो विक्रयसामग्र्यभावरूपो वक्तुं शक्यतेऽतः प्रागभावे मानाभावेऽपि विक्रयप्रागभावस्थले विक्रयसामग्र्यभावं निवेश्य विक्रयसामग्र्यभावविशिष्टक्रयध्वंसस्य क्रीतवस्तुगतस्वत्वरूपत्वं सुवचम्। एवं प्रतिगृहीतधनगते उक्तस्वत्वे दानादिप्रागभावस्थले दानादिसामग्र्यभावो निवेशयितुं शक्योऽतः प्रागभावो नास्तीतिमतविशेषालम्बनेनोक्तानां ध्वंसानां स्वत्वरूपताखण्डनं न युक्तम्। परन्तु रघुदेवोक्तदोषभावेऽपि स्वत्वस्य निर्वचनमिदं संगतं न भवितुमर्हति, ध्वंसप्रागभावादेरज्ञातृभिः क्रियमाणस्य सर्वसम्मतस्य स्वत्वव्यवहारस्यानुपपत्तिप्रसङ्गात्।



## शक्तिविषयको विमर्शः

शक्तिर्मता कारणतास्वरूपा
प्राचीनतन्त्रे न विभिन्नरूपा।
यद् वस्तु यत्कार्यकरं प्रसिद्धं
तस्यैव तत्कारणता मतेति ॥ १ ॥

आपश्च मान्या जनिकाः कथन्न
दाहस्य मान्यो जनकश्च वह्निः।
प्रश्नस्य को भाति समाधिरत्र
दाहानुकूला किल वह्निशक्तिः ॥ २ ॥

एवं स्थितौ शक्तिमतोऽतिरिक्ता
शक्ति र्न मान्येति मतं न भाति।
मान्योपपाद्यं च सदैव भिन्नं
मान्या तथापादकतापि भिन्ना ॥ ३ ॥

शक्तिः कथं कारणतास्वरूपा
सिद्धैव सा शक्तिमतोऽतिरिक्ता।
अन्यत्समाधिर्विषयीकरोति
प्रश्नोऽतिरिक्तं विषयीकरोति ॥ ४ ॥

नापत्तिभीतिर्विषयस्य भेदाच्
छक्तिः सदा कारणतास्वरूपा।
प्राचां मतं नास्ति विरुद्धभावं
तर्काञ्चितं शक्तिधरं न हेयम् ॥ ५ ॥

द्विधा मता कारणता प्रशस्ता
तयोः प्रभेदोऽपि निसर्गसिद्धः।
परिष्कृतौ भेदविभा विभाति
विराजते कारणतास्वरूपा ॥ ६ ॥

मण्यादिनाश्यानलनिष्ठशक्ति-
भिन्ना न सा कारणतास्वरूपा ।
तत्सन्निधौ नश्यति सा विभिन्ना
तेषामभावे लभते च सत्त्वम् ॥ ७ ॥

मण्यादिना कारणता न नष्टा
तस्या विनाशः सुशको न भाति ।
तत्संन्निधाने जननेऽसमर्था
तेषामभावे जनयत्यजस्रम् ॥ ८ ॥

नोक्ता परैवेति मता विनष्टा
तत्सन्निधौ कार्यकरी न दृष्टा ।
तेषामभावे कुरुते तु कार्यं
लब्ध्वा पुनर्जन्म नवं नवीना ॥ ९ ॥

एवं स्थितौ सा कथितैव शक्ति-
र्यस्याश्च सत्ता विमतैव नेष्टा ।
भिन्ना न सा कारणता द्विधैव
मण्यादिनाश्या न च भाति सैव ॥१०॥

प्राचां मता कारणतैव शक्ति-
र्मान्या परा नेति विचित्रकार्या ।
कल्प्या च भिन्ना गुरुतावहैव
मान्या ततः कारणतास्वरूपा ॥११॥

शिरोमणिः स्वीकुरुते न सिद्धां
मतां च तां कारणतास्वरूपाम् ।
मता मते शक्तिमतोऽतिरिक्ता
तदीयदृष्टिविपरीतपक्षा ॥१२॥

प्रदार्थनिष्ठा जनिकैव बोध्या
यथा च वह्नौ परिभाति रम्या ।
तृणादिनिष्ठापि विभाति भव्या
मता च सैवेति रघुर्ब्रवीति ॥१३॥

तृणादितो वह्निरुदेति दृष्टो
मिथो मिलित्वा जनको न भाति ।
स्वतन्त्ररूपेण च कारणानि
मतानि तानीत्यपि नास्ति पक्षः ॥१४॥

एकां च शक्तिं परिकल्प्य तेषु
दाहानुकूलां मनुते तु भिन्नाम् ।
दिष्टां न तां कारणतास्वरूपां
ब्रूते रघुर्भिन्नपरम्पराकाम् ॥१५॥

युक्तिं नवां तत्र दधाति धीरः
प्राचीनयुक्तेर्विपरीतरूपाम् ।
मान्या न सा कारणतास्वरूपा
नान्येह पौरस्त्यपुरःप्रवृत्ता ॥१६॥

रघूक्तिरेषा गुरुतावहापि
बिभेति ना निर्भयतामुपेता ।
तिरश्चकाराभिनवाऽनवां तां
पुरातनीं कारणतास्वरूपाम् ॥१७॥

नाना पदार्था भुवने विभान्ति
सर्वत्र शक्तिः सहजा प्रसक्ता ।
एवं स्थितौ शक्तिरनन्तसत्ता
कल्प्या ततो गौरवमेव सक्तम् ॥१८॥

तद्ध्वंसभूतिः परिकल्पनीया
नाल्पैव मान्या प्रसभं प्रसक्ता ।
तत्प्रागभावादिरनन्तकक्षः
पक्षो रघोर्गौरवगानभक्तः ॥१९॥

बुधैर्न मान्यो गुरुतामुपेतः
शिरोमणेः शक्तिपदार्थपक्षः ।
अनेकदोषैः सबलैः प्रदुष्टः
कथन्न हेयो लघुता न यत्र ॥२०॥

प्राचीनपक्षे लघुता सशक्ता
घोषं विधत्ते धरते न भीतिम् ।
मान्यः स पक्षः सुधियां विमृष्टो
यत्रास्ति दोषस्य न कोऽपि लेशः ॥२१॥

शक्तिं विचित्रचरितां कथितां प्रसिद्धां
नान्यां पदार्थनिवहान् परिहाय रम्याम् ।
निर्दोषमार्गरसिका रमणीयमार्गा
विज्ञा विचारकमलं विमलं वहन्तु ॥२२॥

नव्यापि वैफल्यविधामवाप्ता
धार्या कथं श्रीरघुनाथचर्चा ।
शक्तेः परीक्षा सुधियां सुसाध्या
प्राचां तु चर्चा सफला विभातु ॥३२॥



# शक्तिविषये दीधितिकृन्मतविमर्शः

प्राचीननैयायिकैः शक्तेरतिरिक्तपदार्थत्वं न मन्यते, किन्तु तन्मते शक्तिः कारणतारूपा, यद् वस्तु यत्कार्यं प्रति कारणं भवति तत्रैव तन्निरूपितशक्तिमत्त्वव्यवहारात्। यथा दण्डो घटे शक्तो वह्निर्दाहे शक्त इत्यादि।

ननु कुतो वह्निरेव दाहजनको न जलादिरिति प्रश्नस्येदमेवोत्तरं देयं यद् यतो वह्नौ दाहानुकूला शक्तिरस्ति जलादौ नास्ति अत एव वह्निरेव दाहजनको न जलादिस्तदेवं दाहाद्यनुकूलशक्तेर्दाहादिजनकत्वस्योपपादकतयाभ्युपगमेन तयोर्भेद आवश्यकः, अभिन्ने उपपाद्योपपादकभावासंभवात्, अतः कारणतैव शक्तिरिति मतं कथं सङ्गच्छेतेति चेन्न, प्रोक्तप्रश्नस्य दाहादिफलोपधायकताविषयकत्वस्य तदुत्तरस्य च दाहादिस्वरूपयोग्यताविषयकत्वस्याभ्युपगमेन दोषाभावात्, फलोपधायकत्वस्वरूपयोग्यत्वयोर्भेदात्।

तथा हि—तत्फलतत्त्वं तदुपधायकत्वम्। तत्फलवत्ता च स्वनिरूपितान्यथासिद्धिशून्यत्व-स्वाव्यवहितपूर्वत्व-स्वसामानाधिकरण्येतत्त्रितयसम्बन्धेन। तत्स्वरूपयोग्यत्वं च तन्निरूपितान्यथासिद्धिशून्यत्वविशिष्टतदव्यवहितपूर्वनियतवृत्तितावच्छेदकधर्मवत्त्वम्, तदेवमुभयोस्तयोर्भिन्नतयोपपाद्योपपादकभावस्य निष्प्रत्यूहत्वात्।

नच तथापि कारणतया शक्तिर्न गतार्थयितुं शक्यते दाहकारणे वह्न्यादौ प्रतिबन्धकमणिमन्त्रादिसमवधाने दाहानुत्पत्तेस्तदसमवधाने च दाहाद्युत्पत्तेर्दर्शनेन मणिमन्त्रादिनाश्यां शक्तिमभ्युपेत्य शक्तिमद्वह्नित्वेन दाहं प्रति कारणताया अवश्यमभ्युपगन्तव्यत्वात्। मणिमन्त्रादिः कारणतामेवाभिहन्ति नत्वप्रामाणिकीमसतीं कार्यानुकूलां शक्तिमिति तु न वाच्यं कारणताया विघातपक्षस्य दुरुपपादत्वात्।

तथा हि उक्तयोः कारणतयोर्नैकतरस्या अपि मणिमन्त्रादिना व्युदाससंभवः, यतः प्रतिबन्धकसमवधानात्पूर्वं कार्योत्पत्तावेवोक्तत्रितयसम्बन्धेन कार्यात्मकफलवत्त्वरूपा आद्या कारणतोपपद्यतेऽतोऽनन्तरोत्तरक्षणे सन्निहितेनापि प्रतिबन्धकेन न तदपनयनसंभवः, क्वचिदपि पूर्वोत्पन्नस्य कार्यस्य प्रतिबन्धकेन अपनयनस्य विनाशस्य वाऽदर्शनात्। किं च प्रतिबन्धकेन आद्यकारणताया अपनयेऽपि न कश्चिद् दोषस्तत्कार्यं

प्रति तत्कार्यवत्त्वेन अकारणतया तत्कार्यवत्त्वविगमेऽपि क्षत्यभावात्। द्वितीयस्याः कारणताया अपि प्रतिबन्धकसन्निधानेन परिहारोपपादनमशक्यं तस्य वह्नित्वादिरूपतया अनाश्यत्वात्, प्रतिबन्धकसन्निधानोत्तरमपि प्रत्यक्षमुपलभ्यमानत्वाच्च।

न च कारणता नोक्तद्वयस्वरूपा किन्तु अतिरिक्ता सैव प्रतिबन्धकसमवधाननाश्येति वाच्यं कारणताया अतिरिक्तत्वोपगमे कारणताशब्देन शक्तेरेवाभिहितत्वात्।

न च प्रतिबन्धकसमवधानं सामग्रीं विघटयति इत्युपगमेऽपि तद्दशायां कार्योत्पत्तेर्वारयितुं शक्यतया तन्नाश्यस्य शक्तिनाम्नः पदार्थान्तरस्य कल्पना निष्प्रयोजनेति वाच्यं कारणविघटनमुखेनैव सामग्र्या विघटनस्य संभवेन प्रतिबन्धकसन्निधाने कस्यचित्कारणस्यावश्यं वाच्यत्वात्। तत्कारणं शक्तिरूपमिति न वक्तुं शक्यं शक्तेः प्रकारान्तरेणाक्लृप्तत्वात्। सामग्रीविघटनस्य च प्रतिबन्धकाभावस्य कारणत्वोपगमेन तद्विघटनद्वारैव संभवात्।

अतः कारणताभिन्नायाः शक्तेरभ्युपगमोऽप्रामाणिक एव। न चेदं तदैव वक्तुं शक्य यदा कार्यं प्रति प्रतिबन्धकाभावस्य कारणत्वं सिद्ध्येत् तच्च न संभवति प्रतिबन्धकसत्त्वेऽपि उभयाभावमादाय प्रतिबन्धकाभावस्य सन्निधानसंभवेन कार्योत्पत्तिप्रसंगात्। अतः प्रतिबन्धकत्वावच्छिन्नप्रतियोगिताकसामान्याभावत्वेनैव कारणत्वं वक्तव्यं तच्च सुतरामसंभवं प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वरूपतया प्रतिबन्धकत्वसिद्धेः प्रतिबन्धकाभावनिष्ठकारणतासिद्ध्यधीनतया कारणतायाश्च प्रतिबन्धकत्वसिद्ध्यधीनतया अन्योन्याश्रयप्रसंगादिति वाच्यं प्रतिबन्धकाभावस्य प्रतिबन्धकतावच्छेदकत्वाभिमतमणित्वाद्यवच्छिन्नाभावत्वेन कारणतायाः स्वीकारेणोक्तदोषाभावात्।

न च मण्याद्यभावस्यापि कारणता दुर्वचा, उत्तेजकसत्त्वे प्रतिबन्धकमणिसत्त्वेऽपि दाहोत्पत्तेरिति वाच्यमुत्तेजकाभावविशिष्टमणित्वादिनैव दाहं प्रति प्रतिबन्धकतयोत्तेजकाभावविशिष्टमण्याद्यभावस्य कारणत्वसंभवात्।

न च मण्यादेः प्रतिबन्धस्याजनने प्रतिबन्धकृदर्थकस्य प्रतिबन्धकशब्दस्य प्रयोगो न स्यादिति वाच्यं मण्यादौ स्वार्थकप्रत्ययान्तस्य प्रतिबन्धकशब्दस्य प्रतिबन्धाजननेऽपि प्रयोगसंभवात्। मण्यादौ प्रयुज्यमानस्य प्रतिबन्धकशब्दस्य प्रतिबन्धकृदर्थकत्वे मानाभावात्।

न च मण्यादेः प्रतिबन्धानात्मकतया स्वार्थकप्रत्ययान्तस्यापि प्रतिबन्धकशब्दस्य प्रयोगोऽनुचित इति वाच्यं सामग्र्यभावप्रयोजकाभावप्रतियोगिन एव प्रतिबन्धशब्दार्थतयाभ्युपगमात्। तथा हि मण्यादिसन्निधानदशायां सामग्र्यभावप्रयोजकोऽभावो मण्यभावरूपकारणस्याभाव एव स चाभावाभावस्य प्रतियोगिस्वरूपत्वनियमेन मणिरूप एव तदेवं

मण्यादेः प्रतिबन्धकरूपत्वसंभवेन स्वार्थकप्रत्ययान्तस्य प्रतिबन्धकशब्दस्य प्रयोगस्तत्र तत्र-निर्बाध एव ।

दीधितिकारो[१] युक्त्यन्तरेण शक्तिं साधयामास । तथा हि-तृणारणिमणिभ्यो वह्निरुत्पद्यते । तत्र त्रयाणां तेषां वह्निं प्रति मिथःसापेक्षकारणत्वं न भवितुमर्हति तेष्वेकमात्रेणापि वह्नेरुत्पद्यमानत्वात् । मिथो निरपेक्षकारणत्वमपि न संभवति त्रयाणामपि तेषां परस्परजन्यवह्निं प्रति व्यभिचारित्वात् । अतस्तृणादिषु त्रिषु वह्न्यनुकूलामेकां शक्तिमभ्युपेत्य वह्निं प्रति तेषां त्रयाणामपि वह्न्यनुकूलशक्तिमत्त्वेन एका कारणताऽभ्युपेया ।

नच वह्नित्वावच्छिन्नं प्रति तेषां परस्परनिरपेक्षकारणत्वाभ्युपगमे एव व्यभिचारः प्रसज्यतेऽतस्तृणादिजन्यवह्निषु जातिभेदं कल्पयित्वा विजातीयवह्निं प्रति तृणस्य, विजातीयवह्निं प्रति मणेः, विजातीयवह्निं प्रति अरणेश्च कारणता अभ्युपगन्तव्या । तृणादिजन्यवह्निषु अभ्युपगम्यमानं वैजात्यं च प्रत्यक्षयोग्यद्रव्याश्रितत्वेन प्रत्यक्षम्, अतः प्रत्यक्षसिद्धवैजात्यमूलककार्यकारणभावमनादृत्य अप्रामाणिकातीन्द्रिय-शक्तिकल्पनया वह्नितृणादिषु कार्यकारणभावकल्पनमयुक्तम् ।

ननु यदि तृणादिप्रभववह्निषु वैजात्यं स्यात्तदा चक्षुर्वह्निसन्निकर्षमात्रेणैव तत्प्रत्यक्षेण भाव्यं परं तन्न भवत्यतस्तत्र वैजात्यकल्पनमसंगतमिति चेन्न, वह्निगत-वैजात्यप्रत्यक्षे तृणादिजन्यत्वग्रहस्य कारणत्वाभ्युपगमेन बहिरिन्द्रियसन्निकर्षमात्रेण तत्प्रत्यक्षोपपत्तेरापादनासंभवात् ।

न च जातेः प्रत्यक्षे तदाश्रये कारणविशेषजन्यत्वग्रहस्य कारणत्वमयौक्तिकं तथा सति ब्राह्मणत्वादिजातीनां प्रत्यक्षेऽपि तदाश्रयपिण्डेषु ब्राह्मणादिजन्यत्वग्रहस्याहेतुत्वे एकत्रावस्थितेषु ब्राह्मणक्षत्रियादिपिण्डेषु तदिन्द्रियसन्निकर्षमात्रेण ब्राह्मणत्वादिग्रहणा-पत्तेरतो यथा सन्निकर्षमात्रेणागृह्यमाणानां ब्राह्मणादिजन्यत्वग्रहसापेक्षेन्द्रियग्राह्याणां ब्राह्मणत्वादिजातीनामभ्युपगमस्तथैव तृणादिप्रभववह्निषु सन्निकर्षमात्रेणागृह्यमाणानां तृणादिजन्यत्वग्रहसापेक्षेन्द्रियग्राह्याणां तार्णत्वादिजातीनामभ्युपगमो निर्बाध इति वाच्यं

---

१–एवं शक्तिरप्यतिरिच्यते । तृणारणिमण्यादिस्थले जातित्रयकल्पनामपेक्ष्य तत्तत्सम्बन्धा-नामेकशक्तिमत्त्वेन कारणत्वकल्पनाया एव लघुत्वेन न्याय्यत्वात् ।

सम्बन्धत्रितयनिष्ठैकजात्यङ्गीकारे च नोदनत्वादिना जातिसङ्करप्रसङ्गः ।

यदि चान्वयव्यतिरेकाभ्यां तृणादेरपि कारणत्वमिष्यते तदा तेषामेकशक्तिम-त्त्वेन तदस्तु तथापि जातित्रयकल्पनामपेक्ष्य शक्तिद्वयकल्पनैव लाघवेन ज्यायसीति । तेष्वपि चैकजात्यङ्गीकारे मणित्वादिना सङ्करप्रसङ्गः । पदार्थतत्त्वनिरूपणे ६५-६६ ॥

वह्निगतवैजात्यस्य त्रित्वेन कार्यकारणभावत्रयकल्पनापेक्षया वह्निं प्रति वह्न्यनुकूलशक्तिमत्त्वेन तृणादिसम्बन्धेषु लघुभूताया एकस्याः कारणताया एव कल्पनस्यौचित्यात् कार्यकारणभावलाघवस्य सर्वाभ्यर्हितत्वात्।

न च तृणादिसम्बन्धेष्वेकां जातिं कल्पयित्वा तज्जातिपुरस्कारेणैव तृणादिसम्बन्धानां कारणत्वं कल्प्यं शक्त्याख्यस्यातिरिक्तपदार्थस्य कल्पनमनुचितं क्लृप्ते जातिपदार्थेऽन्तर्भवितुमर्हेण रूपेण कारणतायाः संभवे क्लृप्तेषु पदार्थेष्वन्तर्भवितुमनर्हया कार्यानुकूलशक्त्या कारणत्वकल्पनाया अनौचित्यादिति वाच्यं नोदनत्वादिना सांकर्येण संयोगात्मकतृणादिसम्बन्धेषु वह्नित्वावच्छिन्ननिरूपितजनकतावच्छेदिकाया एकजातेःकल्पनासंभवात्। तथा हि-नोदनत्वाभाववति अभिघातात्मके तृणसंयोगे वह्निजनकतावच्छेदिका जातिरस्ति वह्निजनकतावच्छेदकजातिशून्ये घटादीनां नोदनसंयोगे नोदनत्वमस्ति, इत्थं परस्पराभावसमानाधिकरणे नोदनत्ववह्निजनकतावच्छेदकजाती उभे वह्निजनके नोदनाख्यतृणसंयोगे विद्येते अतो नोदनत्वसांकर्येण वह्निजनकतावच्छेदिकाया जातेः कल्पनमसंभवम्।

न चैवं तृणादिसम्बन्धेषु वह्निजनकतावच्छेदकजातिमनभ्युपगम्य तृणादिषु एव वह्निजनकतावच्छेदिकाया एक जातेः कल्पनया वह्निसामान्ये तृणादीनां कारणत्वमुपपादयनीयमिति वाच्यं मणित्वादिना सांकर्येण तृणादिष्वपि वह्निजनकतावच्छेदिकाया एकजातेः कल्पनाया असंभवात्। तथा हि—मणित्वं चन्द्रकान्तमणयादौ वह्निजनकतावच्छेदकजात्यभावस्य समानाधिकरणं वह्निजनकतावच्छेदिका जातिश्च तृणादौ मणित्वाभावसमानाधिकरणेति परस्पराभावसमानाधिकारणयोस्तयोर्वह्निकारणे प्रतिफलिततरणिकिरणजालके सूर्यकान्तमणौ सांकर्येण तादृशजातिकल्पनाया अनौचित्यं स्फुटम्। अतस्तृणादिषु वह्न्यनुकूलाया एकस्याः शक्तेः कल्पनयैव तृणादीनां वह्निसामान्यं प्रति कारणत्वोपपादनमुचितम्। सा च शक्तिः पदार्थान्तरम्। उत्पादविनाशशालितया नित्यद्रव्येषु मणिप्रभृतौ अन्त्यावयविन्युत्पद्यमानतया जन्यद्रव्येषु, गुणादौ उत्पत्तिविनाशवत्तया गुणादिषु च तस्या अनन्तर्भावात्।

न चैवमपि तत्साधकप्रमाणाभावात् तदभ्युपगमोऽसंगत इति वाच्यं तृणादिनिष्ठा वह्निकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वादित्यनुमानेन उक्तकारणताया व्यभिचारेण तृणत्वाद्यवच्छिन्नत्वबाधस्य सांकर्येण च तृणादिसाधारणजात्यवच्छिन्नत्वबाधस्य च सहकारेणोक्तरीत्या द्रव्यादिष्वनन्तर्भावग्रहसहकारेण च सप्तपदार्थातिरिक्तधर्मावच्छिन्नत्वानुमानपर्यवसायिना तत्साधनसंभवात्।

दीधितिकृतः शक्तिरूपातिरिक्तपदार्थसाधिकामुक्तयुक्तिमालोचयता श्रीरघुदेवन्यायालङ्कारेण अत्रेदमवधेयमित्यादिना इत्थमुक्तम्—"तृणादिसम्बन्धानामेकशक्तिमत्त्वेन तत्र हेतुत्वे फूत्काराभावदशायां वह्नित्वावच्छिन्नापत्तिः। न च फूत्कारादीनामपि

सहकारित्वकल्पनान्नानुपपत्तिरिति वाच्यं तथाप्यरणिसम्बन्धसत्त्वे फूत्कारसत्त्वे मण्याद्यसत्त्वे वह्नित्वावच्छिन्नोत्पत्त्यापत्तेः, तादृशजातित्रयमभ्युपेत्य प्रत्येकं तादृशजातित्रयावच्छिन्नं प्रति प्रत्येकतृणादीनां तृणत्वादिना हेतुतात्रयकल्पने तु नैवानुपपत्तिः, तृणत्वावच्छिन्नेन फलजनने एव फूत्कारस्य सहकारित्वाभ्युपगमात्। न च फूत्कारादिसम्बन्धानामपि एकशक्तिमत्त्वेनैव तत्र हेतुत्वे अरणिसम्बन्धकालीनफूत्कारादिसम्बन्धे तादृशशक्त्यनभ्युपगमेन न तदवच्छिन्नस्य सहकारित्वाभ्युपगमे उपदर्शितापत्तिरिति वाच्यं तथा सति तृणादिसम्बन्धानामेकशक्तिमत्त्वेन हेतुत्वे मानाभावः, तृणादिसम्बन्धाभावकालीनफूत्कारादिसम्बन्धे तादृशशक्त्यनभ्युपगमात्, तेनैवापत्तिवारणसंभवात्। यदि च विनिगमनाविरहेण तादृशोभयरूपेण हेतुत्वमिति विभाव्यते तदा तृणादिसम्बन्धकालीनवायुसंयोगानामपि एकशक्तिमत्त्वेन हेतुतामादाय विनिगमनाविरहो दुर्वार इति तस्माज्जातित्रयमभ्युपेत्य तथाविधकार्यकारणभावत्रयकल्पनमेव निराबाधसरणिमादधातीति।

श्रीरघुदेवस्यायमाशयः—यद् यदि तृणादिसम्बन्धेषु वह्न्यनुकूलशक्तिमत्त्वेन एका कारणता उच्यते तदा तृणत्वादिरूपेण तृणादेर्वह्निं प्रति अकारणतया फूत्कारादीनां वह्न्यनुकूलशक्तिमत्त्वावच्छिन्नस्यैव सहकारित्वं वाच्यं न तु तृणत्वाद्यवच्छिन्नस्य, तथा सति अरणिमन्थनस्य सूर्यकान्तमणितरणिकिरणसम्पर्कस्य चापि वह्न्यनुकूलशक्तिमत्त्वेन तृणं प्रत्यपि सहकारित्वसंभवेन तयोरेकतरस्य कस्यापि सत्त्वे फूत्काराभावेऽपि तृणतो वह्न्युत्पत्त्यापत्तिः स्यात्। यदि च तृणादिसम्बन्धानामिव फूत्कारादिसम्बन्धानामपि वह्न्यनुकूलशक्तिमत्त्वेन कारणतामभ्युपेत्यायं दोषो वार्येत तदा तृणादिसम्बन्धानां वह्न्यनुकूलशक्तिमत्त्वेन कारणत्वकल्पनं निष्प्रयोजनं स्यात्, तृणादिसम्बन्धकालीने फूत्कारादिसम्बन्ध एव वह्न्यनुकूलशक्तेरभ्युपगमेन तृणादिसम्बन्धाभावदशायां फूत्कारादिसम्बन्धेन वह्न्युत्पत्त्यापत्तेरसंभवात्।

परं रघुदेवस्येदं दीधितिकृन्मतदूषणं न सम्यक् यद्धर्माश्रयस्य यस्य यदभावप्रयुक्तयत्कार्योपधायकत्वाभावस्तत् तद्धर्माश्रयस्य तस्य सहकारीति नियमाभ्युपगमेन वह्न्यनुकूलशक्तिमतस्तृणस्य फूत्कारसम्बन्धाभावप्रयुक्तवह्न्युपधायकत्वाभाववत्त्वेन वह्निजनने तृणं प्रति फूत्कारस्य सहकारित्वसंभवेन तदभावे तृणतो वह्न्युत्पत्त्यापत्तेर्वारणसंभवात्।

किंच फूत्काराभावदशायामरणिनिर्मन्थनस्य मणिकिरणप्रतिफलनस्य चासत्त्वे यदि वह्नित्वावच्छिन्नस्योत्पत्तिरापाद्यते तदा नैतत्संभवति वह्न्यनुकूलशक्तिमत्त्वेन तृणादीन् प्रति वह्न्यनुकूलशक्तिमत्त्वेन फूत्कारनिर्मन्थनतरणिकिरणप्रतिफलनानां सहकारितयोक्तसहकारिणां सर्वेषामभावदशायां तृणमात्राद् वह्न्यापादनस्यासंभवात् सहकारिसहितस्यैव कार्योपधायकताया अभ्युपगतत्वात्।

यदि च फूत्काराभावदशायामरणिनिर्मन्थनस्य मणितरणिकिरणप्रतिफलनस्य वा सत्त्वे वह्नित्वावच्छिन्नोत्पत्तिरापाद्यते तदेष्टैव सा। निर्मथ्यमानयोररण्योस्तरणिकिरणप्रतिफलनं बिभ्रतो मणेर्वा समवधाने वह्नित्वावच्छिन्नोत्पत्तेः प्रामाणिकत्वात्।

न च तदानीं तृणतो वह्नित्वावच्छिन्नस्योत्पत्तिरापाद्यत इति वाच्यं तृणत इत्यस्य तृणत्वावच्छिन्नत इत्यर्थापत्त्यसंभवात् तृणत्वावच्छिन्नस्य वह्नित्वावच्छिन्नं प्रत्यकारणत्वात्।

यदि च तृणत इत्यस्य वह्नयनुकूलशक्तिमतस्तृणादित्यर्थस्तदापि आपत्तिर्न सङ्गता, वह्नयनुकूलशक्तिमत्त्वमात्रेण वह्निं प्रति कारणतया वह्नयनुकूलशक्तिमत्तृणत्वेन वह्निं प्रत्यकारणत्वात्।

यदि च फूत्काराभावदशायां तृणस्य वह्नयनुकूलशक्तिमत्त्वावच्छिन्नप्रयोज्योत्पत्तिकवह्निमत्त्वमापाद्यते, आपत्तिश्च यद् यद्रूपेण यत्कार्यं प्रति कारणं तत् तद्रूपावच्छिन्नप्रयोज्योत्पत्तिकतत्कार्यवदिति व्याप्तिबलेन समर्थ्यते तदापि नैषापत्तिः संभवति, येन रूपेण यत्कार्यकारणीभूतं यत्सन्निधान एव तत्कार्योपधायकं भवति तत्सन्निधान एव तत्र तदवच्छिन्नप्रयोज्योत्पत्तिकतत्कार्यवत्त्वनियमादन्यथा तुरीप्रभृतीनामसन्निधानेऽपि तन्त्वादेस्तन्तुत्वावच्छिन्नप्रयोज्योत्पत्तिकपटवत्त्वापत्तेः। तथा च वह्नयनुकूलशक्तिमत्त्वेन वह्निकारणस्य तृणस्य फूत्कारसन्निधान एव वह्नयुपधायकतया तदसन्निधानदशायां वह्नयनुकूलशक्तिमत्त्वावच्छिन्नप्रयोज्योत्पत्तिकवह्निमत्त्वस्यापादयितुमशक्यत्वात्।

न च येन रूपेण यत्कार्यकारणं यत्तत् तद्रूपावच्छिन्नसहकारिसमवधाने तदवच्छिन्नप्रयोज्योत्पत्तिकतत्कार्यवदिति नियमेन अरणिनिर्मन्थनसत्त्वे फूत्काराभावदशायामपि तृणस्य वह्निमत्त्वापत्तिर्दुर्वारेति वाच्यं तन्तुसहकारिणां तुरीवेमादीनामेकतरमात्रसत्त्वे तन्तुषु पटवत्त्वापत्तेः, यद् यद्रूपेण यत्कार्यकारणं तत् तदवच्छिन्नस्य सकलसहकारिसमवधाने तदवच्छिन्नप्रयोज्योत्पत्तिकतत्कार्यवत्त्वनियमस्याभ्युपगमे च फूत्कारदशायामपि तृणे वह्नयनुकूलशक्तिमत्त्वावच्छिन्नप्रयोज्योत्पत्तिवह्निमत्त्वस्यानुपपत्तिप्रसंगात्। वह्नयनुकूलशक्तिमत्त्वावच्छिन्नस्य सहकारिणां सर्वेषामभावात्, तदेवं तृणादिसम्बन्धानां वह्नयनुकूलशक्तिमत्त्वेन वह्निं प्रति एककारणतायाः कल्पनस्य निर्दोषत्वेन रघुदेवोद्भावितदूषणस्यान्याय्यतया दीधितिकृतः शक्तिपदार्थान्तरत्ववादोऽक्षुण्णः। अत्रोच्यते—

तृणारणिमणिषु वह्नयनुकूलशक्तिर्न सेद्धुमर्हति। नचोपन्यस्तमेव तत्प्रमाणतयोक्तमनुमानमिति वाच्यं पक्षस्य दुर्ग्रहतयोक्तानुमानसंभवात्। तथा हि-उक्तानुमाने

वह्नित्वावच्छिन्नकार्यतानिरूपिततृणारणिमणिनिष्ठकारणतैव पक्षः, सा च तृणादिषु अनुगतधर्मग्रह विना दुर्ग्रहा तृणत्वाद्यवच्छिन्नकारणता च न वह्नित्वावच्छिन्ननिरूपिता।

नन्वेवं कार्यादिसमवायिकारणतावच्छेदकतया द्रव्यत्वजातिसिद्धिरपि न स्याद् द्रव्येष्वनुगतधर्मग्रह विना कार्यादिसमवायिकारणताया ग्रहीतुमशक्यत्वात्। पृथिवीत्वावच्छिन्नकारणतायाश्च कार्यत्वाद्यवच्छिन्नानिरूपितत्वादिति चेन्नेष्टापत्तेः। द्रव्यत्वादिजातिसिद्धेर्द्रव्यादिपदप्रवृत्तिनिमित्ततयैव संभवात्।

न चात्र किमप्येवमेकपदं क्लृप्तं यत्प्रवृत्तिनिमित्ततया तृणारणिमणिषु अन्यूनानतिप्रसक्तः कोऽपि धर्मः शक्तिपदेन व्यवहर्त्तुमर्हः सिद्ध्येत्। अतस्तृणादिषु वह्न्यनुकूलशक्तेः सिद्धौ प्रमाणाभावेन तृणादिजन्यवह्निषु प्रत्यक्षसिद्धवैजात्याश्रयेणोक्तकार्यकरणभावत्रयकल्पनमेव वरीयः, इति दीधितिकृतः शक्तिपदार्थान्तरत्ववादो निर्युक्तिक एव।



## विप्रतिपत्तिवाक्यस्य संशीतिजनकताविमर्शः

विप्रतिपत्तिवाक्याद्धि
संशयो नाभिजायते ।
प्राचां पक्षो विभात्येष
नास्ति संशीतिरत्र नः ॥ १ ॥

वाक्यात्समुत्पन्नपरोक्षबोधो
बोध्यो न भिन्नो बुधनिश्चयोऽत्र ।
एवं स्थितौ संशयभीतिरत्र
नातो न तत्संशयकार्यकारि ॥ २ ॥

अक्षेण येन मनसा जनिता विभूतिः
संशीतिरूपकमला विमला विभाति ।
एवञ्च सा न कथिता विमता परोक्षा
बाधा न तत्र सबला प्रतिभाति कापि ॥ ३ ॥

शिरोमणिः स्वीकुरुते न पक्षं
पुरातनानां विपरीतकक्षम् ।
मतं च तत्संशयकार्यकारि
न तत्र तर्को विपरीतपक्षे ॥ ४ ॥

विचार्यमाणो न विभाति पक्षः
शिरोमणेर्दुर्बलतर्ककक्षः ।
ततश्च हेयो गुरुतामुपेतो
दृढप्रमाणाद् विहतो रघूक्तः ॥ ५ ॥

प्राचां स पक्षो दृढतामवाप्तो
हेयो न मान्यो लघुतामुपेतः ।
शास्त्रस्य राद्धान्तपथावलम्बो
भावावलम्बो महतां स पक्षः ॥ ६ ॥

यो यः परोक्षः परिभाति बोधो
बोध्यो यथार्थः स स निश्चयो नः ।
व्याप्तिः प्रसिद्धा न च कोऽपि रोधः
प्राचां न हेयस्तत एव पक्षः ॥ ७ ॥

संशीतिलक्षकं सूत्रं
संशयबोधकारकम् ।
प्रमाणत्वेन तत्प्रोक्तं
दृष्टिः सापि न शोभते ॥ ८ ॥

ना पञ्चमीह जनकत्वसुधां विधत्ते
सा भिन्नमर्थकमलं विमलं निधत्ते ।
प्राचां दिवाकरनिभं मतिदं प्रवक्ति
पक्षं ततश्च सुधियां महनीयपक्षः ॥ ९ ॥

प्रयोजकत्वमेवार्थं
ब्रूते सूत्रस्थपञ्चमी ।
एवमन्यत्रगाप्येषा
ब्रूतामर्थञ्च पञ्चमी ॥१०॥

अन्यत्र सा भाति ततो न बाधा
हेतुत्वमर्थं परिशीलयन्ती ।
दोषस्ततो भाति न भव्यभूतिः
प्राचीनपक्षस्तु निरस्तदोषः ॥११॥

ब्रूते च सा जनकतां वचनस्थरूपा
बाधेह दोषकलुषा कुलटा नटीव ।
नातस्तदर्थजनिका भणिता तु तत्र
प्राचीनपक्षकमलं विमलं विभातु ॥१२॥

रघूक्तिरुक्ता विहता नवापि
पदं न तस्याः शुभदं वरायाः ।
पुरातनानां परिभाति वामा
न हेयतां गच्छति साभिरामा ॥१३॥

संशीतिसंशयकथां कमनीयकल्पां
स्वल्पां विहाय रघुनाथपथप्रदिष्टाम् ।
मान्यां च संशयसुधां सुधियामनल्पां
गृह्णन्तु साररसिकां सरसां सगर्वाम् ॥१४॥

प्रयोजकत्वार्थकपञ्चमी सा
वचः स्थिता भाति सुधेव साध्वी ।
रघूक्तसाध्वी न च पञ्चमी सा
मतस्तु यस्या जनकत्वमर्थः ॥१५॥

अन्यत्र सूत्रे जनकत्वमर्थो
मान्यश्च तस्या न च तत्र हानिः ।
संशीतिशोभाजनके च सूत्रे
बोध्यो न तस्या जनकत्वमर्थः ॥१६॥



## विप्रतिपत्तिवाक्यस्य संशयजनकत्वविमर्शः

प्राचीननैयायिकाः शब्दो नित्यो न वेत्यादिविप्रतिपत्तिवाक्यतः शाब्दबोधात्मकसंशयस्योत्पत्तिं न मन्यते, किन्तु उक्तवाक्यघटकात् शब्दशब्दात् शब्दरूपधर्मिण उपस्थितेरेव तद्घटकान्नित्यो न वेतिभागान्नित्यत्वनित्यत्वाभावरूपकोट्योरुपस्थितौ सत्यां नित्यत्वतदभावयोर्विरोधभासिकायाः सामग्र्याः सन्निधाने सति शब्दो नित्यो न वेत्याकारको ज्ञानलक्षणसन्निकर्षाधीनः शब्दो नित्यो न वेत्याकारको मानससंशयो जायते इत्येव ते अभिप्रयन्ति यतो हि यदि उक्तसंशयो विप्रतिपत्तिवाक्यत उत्पद्येत तदा परोक्षतया संशयत्वादेव हीयेत परोक्षज्ञानत्वस्य निश्चयत्वव्याप्यत्वात्। यदा चोक्तः संशयो मानस उपेयते तदा मनोरूपेणाक्षेण जन्यतया परोक्षत्वाभावेन निश्चयत्वापत्तेरसंभवतया न तस्य संशयत्वहानिः शक्यसंभवेति।

परं[1] दीधितिकृते मतमिदं न रोचते, शब्दो नित्यो न वेतिविप्रतिपत्तिवाक्यत आहत्य शब्दधर्मिकनित्यत्वानित्यत्वप्रकारकसंशयस्याभ्युपगमसंभवात्। तथा हि-उक्तवाक्यघटकात् शब्दपदात् शब्दत्वजातिप्रकारेण शब्दस्योपस्थितेर्नित्यो न वेति भागतो नित्यत्वानित्यत्वरूपयोः कोट्योरुपस्थितेर्वाशब्देन च विरोधस्योपस्थितेः प्रादुर्भाविन शब्दे नित्यत्वानित्यत्वयोः संशयात्मकयोग्यताज्ञानादुक्तवाक्यादेव शब्दो नित्यो न वेति संशयः समुत्पद्यते, तत्र च नित्यत्वाभावे नित्यत्वस्य नित्यत्वे नित्यत्वाभावस्य वा विरोधः संसर्गविधया भासते। अत उक्तसंशयस्य शब्दो नित्यत्ववान् विरोधसम्बन्धेन नित्यत्वविशिष्टानित्यत्ववान् अथ वा विरोधसम्बन्धेन अनित्यत्वविशिष्टनित्यत्ववानित्याकारकः पर्यवस्यति। संशयश्चायं शब्दे अनित्यत्वम्, अनित्यत्वे च नित्यत्वम् अथ वा शब्दे नित्यत्वं नित्यत्वे अनित्यत्वं च विशेष्ये विशेषणं तत्रापि विशेषणान्तरमितिरीत्या-

---

१—पदजन्यधर्मिककोटिद्वयतदुभयविरोधिभानसंशयात्मकयोग्यताज्ञानसहितात् शब्दादाहत्यैव संशयः।

समानानेकेत्यादिसूत्रं प्रमाणयतो महर्षेरपि सम्मतमिदम्। एकधर्मिकनानाविरुद्धधर्मप्रकारकज्ञानत्वरूपं कोटिद्वयविरोधज्ञानसामग्रीसमाजाधीनं च संशयत्वं नीलघटत्ववन्न कार्यतावच्छेदकम्।

एवं संशयत्वशून्यज्ञानत्वरूपनिश्चयत्वमपि नीलत्वशून्यघटत्ववत् तथेति।

पदार्थतत्त्वनिरूपणे ६७-७१।

वगाहते न तु नित्यत्वविशिष्टानित्यत्ववैशिष्ट्यम् अनित्यत्वविशिष्टनित्यत्ववैशिष्ट्यं वाऽवगाहते, विशिष्टवैशिष्टचबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्य कारणतया तादृशबुद्ध्यर्थम् अपेक्षितस्यानित्यत्वं नित्यत्वविशिष्टम्, नित्यत्वमनित्यत्वविशिष्टं वा इति ज्ञानस्य पूर्वमभावात्।

न चानित्यत्वे नित्यत्वविरोधमवगाहमाने अनित्यत्वप्रकारकज्ञाने अनित्यत्वस्य धर्मिणि नित्यत्वप्रकारकत्वं न भवितुमर्हति अनित्यत्वे नित्यावृत्तित्वरूपनित्यत्वविरोधग्रहस्य नित्यत्वबुद्धौ विरोधित्वाद्, एवं नित्यत्वे अनित्यत्वविरोधमवगाहमाने ज्ञाने नित्यत्वेन गृह्यमाणे धर्मिणि अनित्यत्वप्रकारकत्वं न भवितुमर्हति नित्यत्वे अनित्यावृत्तित्वरूपानित्यत्वविरोधग्रहस्य अनित्यत्वबुद्धौ विरोधित्वादिति वाच्यं विरोधस्य संसर्गविधया भानोपगमेन संशयपूर्वं विरोधिग्रहस्यासम्भवात्। सहजायमानस्य ज्ञानस्य च सहजायमानं ज्ञानं प्रति विरोधित्वे मानाभावात्।

न च परोक्षज्ञानत्वे निश्चयत्वव्याप्यत्वसिद्धान्तः शाब्दसंशयोत्पत्तौ बाधक इति वाच्यम् उक्तसिद्धान्ते मानाभावात्, उक्तसिद्धान्ताभावस्यैव न्यायसूत्रकृत्सम्मतत्वाच्च, समानानेकधर्मोत्पत्तेः विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्शः संशय इति सूत्रे संशयकारणत्वेन विप्रतिपत्तिवाक्यस्योल्लेखात्।

न च विप्रतिपत्तिशब्दोत्तरं श्रूयमाणपञ्चम्याः प्रयोजकत्वार्थकतयाप्युपपत्तिसंभवेन ततो विप्रतिपत्तिवाक्यस्य संशयजनकत्वबोधः समर्थयितुं शक्य इति वाच्यं तथा सति समानानेकधर्मोपपत्तेरित्यादौ श्रूयमाणपञ्चमीविभक्तेरपि प्रयोजकत्वार्थकत्वसंभवेन समानधर्मादिज्ञानस्यापि संशयजनकत्वसिद्धचभावप्रसङ्गात्।

अत्रैवमालोचयितुं शक्यते यत्परोक्षज्ञानत्वे निश्चयत्वव्याप्तिर्न न्यक्कर्त्तुं शक्यते विवादानास्कन्दितेष्वनुमित्यादिपरोक्षज्ञानेषु निश्चयत्वस्य दर्शनेन परोक्षज्ञानत्वे निश्चयत्वव्याप्तेर्ग्रहणे बाधकाभावात्।

न च विप्रतिपत्तिवाक्यज्ञानोत्तरं जायमाने संशये निश्चयत्वाभाववत्तया निर्णीते परोक्षज्ञानत्वस्य सन्देहेन परोक्षज्ञानत्वे निश्चयत्वव्यभिचारस्य सन्देहोदयेन तत्र निश्चयत्वव्याप्तिनिश्चयस्य प्रतिबन्धसम्भवात् परोक्षज्ञानत्वे निश्चयत्वव्याप्तेरभ्युपगमो दुर्घट इति वाच्यं परोक्षज्ञानत्वं यदि निश्चयत्वव्यभिचारि स्यात्तदा सोपाधिकं स्याद् यतो न सोपाधिकमतो न निश्चयत्वव्यभिचारीत्येवंविधनिरुपाधिकत्वतर्केणोक्तव्यभिचारसंशयस्य निराकर्त्तुमर्हतयोक्तव्याप्तेरभ्युपगमस्याक्षुण्णत्वात्।

किञ्चोक्तवाक्याद् यदि शब्दो नित्यो न वेत्याकारकः शाब्दसंशयो मन्यते तदा तादृशशाब्दबोधे कीदृशं योग्यताज्ञानं कारणमिति वक्तव्यं न हि तत्र कोट्योर्निश्चयात्मकं योग्यताज्ञानं कारणं भवितुमर्हति नित्यत्वनिश्चयस्यानित्यत्वबुद्धौ अनित्यत्व-

निश्चयस्य नित्यत्वबुद्धौ प्रतिबन्धकत्वेन योग्यताज्ञानदेव शाब्दसंशयोत्पत्तेः प्रतिबन्धसम्भवात् ।

यदि च संशयात्मकयोग्यताज्ञानात् शाब्दसंशयोत्पत्तिर्मन्यते तदा शाब्दसंशयत्वावच्छिन्नं प्रति संशयात्मकयोग्यताज्ञानस्य कारणत्वकल्पनापत्त्या गौरवम् ।

न च संशयात्मकयोग्यताज्ञानदशायां नित्यत्वप्रकारकस्यानित्यत्वप्रकारस्य च शाब्दबोधस्य सामग्र्योः सम्बलनेन जायमानशाब्दबोधस्यार्थादेव संशयात्मकस्योपपत्त्या शाब्दसंशयं प्रति संशयात्मकयोग्यताज्ञानस्य पृथक् कारणतया अकल्पनीयतया नोक्तदोष इति वाच्यं तथा सत्यपि शाब्दबोधे एककोटौ अपरकोटेर्विरोधभानासम्भवेन तस्य संशयत्वोपगमासम्भवात् । शाब्दबोधे एककोटौ अपरकोटिविरोधस्य भानार्थमपि एककोटौ विरोधग्राहिणो योग्यताज्ञानस्यापेक्षणात् तस्य च शाब्दसंशयपूर्वमभावात् ।

न च संशयात्मकयोग्यताज्ञानस्य एककोटौ अपरकोटिविरोधावगाहितया तत एव संशयात्मके शाब्दबोधे एककोटौ अपरकोटिविरोधस्य भानं संभवतीति वाच्यं तथा सति योग्यताज्ञानस्य एक कोटौ अपरकोटिविरोधांशे निश्चयात्मकतया एककोटिमत्तया गृह्यमाणे धर्मिणि अपरकोटिमवगाहमानस्य शाब्दसंशयस्योपपत्तेः प्रतिबन्धसम्भवात् ।

न च योग्यताज्ञानस्य एककोटौ अपरकोटिविरोधांशे अपि संशयात्मकस्यैवाभ्युपगमेन नोक्तदोष इति वाच्यं साक्षाद् विशेषणांशे एव ज्ञानस्य संशयात्मकत्वस्वीकारेण धर्मिविशेषणतया भासमानायाम् एककोटौ अपरकोटेर्विरोधभानांशे संशयत्वासम्भवात् किञ्च संशये एककोटौ अपरकोटिविरोधस्य भानमपि अप्रामाणिकम् ।

न च संशये एककोटौ अपरकोटिविरोधभानानुपगमे कोट्योरविरोधग्रहदशायामपि संशयापत्तिः स्यादिति तद्वारणाय संशये एककोटौ अपरकोटिविरोधस्य भानमावश्यकं तथा च कोट्योरविरोधज्ञानस्य कोट्योर्विरोधज्ञानं प्रति प्रतिबन्धकतया तद्दशायां न संशयापत्तिरिति वाच्यं संशये पूर्वमनुपस्थितस्यापि विरोधस्य भानानुरोधेन संसर्गविधयैव तत्र तद्भानस्य अभ्युपगन्तव्यतया संशये एककोटौ अपरकोटिविरोधस्य भाने अपि एककोटौ अपरकोटेरसामानाधिकरण्यज्ञानस्य प्रतिबन्धकत्वाभावेन तद्दशायां संशयोत्पत्त्यापत्तेः परिहर्तुमशक्यत्वात् ।

न च एककोटावपरकोटेः संसर्गविधया विरोधावगाहिनिश्चयदशायां संशयापत्तिवारणाय संशये विरोधभानमावश्यकमिति वाच्यं तथाप्येककोटावपरकोटेरसामानाधिकरण्यप्रकारकनिश्चयदशायां संशयोत्पत्तेः परिहर्त्तुमशक्यत्वात् । अतः संशये विरोधभानमनभ्युपगम्य कोटिद्वयप्रकारतानिरूपितविशेष्यतयोरभेदमवच्छेद्यावच्छेदकभावं वा मत्वा तन्निष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नतदभावनिष्ठप्रकारतानिरूपितविशेष्यताकज्ञानत्वस्य अथ वा तन्निष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नतदभावनिष्ठप्रकारता-

निरूपितविशेष्यताकज्ञानत्वस्यैव संशयत्वरूपत्वं मन्तव्यम्, एवञ्च संशयात्मकशाब्द-बोधाभ्युपगमे शाब्दसंशयत्वावच्छिन्नं प्रति संशयात्मकयोग्यताज्ञानस्य कारणत्वमवश्यं वक्तव्यं तत्तदभावप्रकारकज्ञानयोः सामग्रीसम्बलनेन तत्तदभावप्रकारकज्ञानस्योत्पत्ति-सम्भवे अपि ततस्तज्ज्ञानीयविशेष्यतयोरभिन्नत्वस्यावच्छेद्यावच्छेदकभावस्य वा असम्भ-वादिति संशयात्मकयोग्यताज्ञानस्य शाब्दसंशयं प्रति पृथक् कारणत्वकल्पनप्रयुक्तगौरवात् शाब्दबोधस्य संशयात्मकत्वपक्षः परित्याज्य एव ।

न च संशयत्वस्य प्रत्यक्षत्वव्याप्यत्वपक्षे अपि विप्रतिपत्तिज्ञानान्तरं मानससंशयोत्पत्तिर्दुरुपपादेति वाच्यं साधारणधर्मादिज्ञानतः कोटिद्वयोपस्थितिदशायां कोटिद्वयो-पस्थित्यादिसहकृतेन्द्रियस्य संशयत्वावच्छिन्नजनकतायाः क्लृप्ततया विप्रतिपत्तिवाक्यश्रव-णोत्तरं कोटिद्वयोपस्थितिसहकृतेन मनोरूपेन्द्रियेण संशयत्वावच्छिन्नोत्पत्तेः संभवेन तत्पक्षे अतिरिक्तकारणत्वस्य कल्पनाया अनावश्यकत्वात् ।

यच्च विप्रतिपत्तिवाक्यस्य संशयजनकतायां गौतमोक्तस्य संशयलक्षकसूत्रस्य साक्षित्वमुपन्यस्तं तदपि असंगतं विप्रतिपत्तिशब्दोत्तरपञ्चम्याः प्रयोजकत्वपरत्वात् । यच्च तस्या इव अन्यासां पञ्चमीनामपि प्रयोजकत्वादिपरत्वमापादितं तदपि न संगच्छते, अन्यासां पञ्चमीनां हेतुत्वार्थकत्वे बाधकाभावेन प्रयोजकत्वार्थपरतायाः स्वीकर्तुमनुचितत्वात् । विप्रतिपत्तिवाक्योत्तरश्रूयमाणायाः पञ्चम्या हेतुत्वार्थस्वीकारस्तु परोक्षज्ञानत्वे निश्चयत्वव्याप्तिनिश्चयेनोक्तरीत्या शाब्दबोधस्य संशयत्वासम्भवेन च दुष्कर इति तस्याः प्रयोजकत्वपरत्वस्यैवोचितत्वात् ।



# चतुर्थोऽध्यायः

## कारणतायाः पदार्थान्तरत्वविमर्शः

विराजते कारणता पदार्थो
नवः पृथक् कीर्त्तिकलामुपेतः ।
रघूक्तिरेषा विदुषो ब्रवीति
नवीनपक्षो विमलो विभातु ॥ १ ॥

किं कारणत्वकमलं विमलं विलीनं
कुत्रापि तत्त्वनिवहे न दधाति कान्तिम् ।
ब्रूमो वयं सकलकार्यकरं तदेव
सत्त्वं तदीयधवलं पृथगेव भाति ॥ २ ॥

अन्तर्दशा सहजतत्त्वकरस्य तस्य
कुत्रापि नास्ति रघुनाथविधैव वक्ति ।
तस्यास्ति निर्वचनवागपरा न कापि
मान्यो बुधैः सकलतत्त्वकरः पदार्थः ॥ ३ ॥

जन्यं जगच्च जनकं विमलं दधाति
सत्त्वं कथं च जगतां जनकं विनैव ।
भव्या विभूतिरपरा न परा विभाति
यस्याः प्रतापदिनपो दिवसं तनोति ॥ ४ ॥

तां कारणत्वकमलां विमलां विहाय
सृष्टिः सुधैव विपथा समवैति नाशम् ।
तद्रक्षणाय सरणिं रमणीं वरस्य
तस्यैव धन्यधरणीं परिशीलयन्तु ॥ ५ ॥

बोध्या स्वतो न जगतां रमणीयसृष्टिः
सापेक्षते स्वजनकं महितं स्वतन्त्रम् ।
तत्कारणत्वकुशलं नयमञ्चभूष्यं
मृग्यं महामतिमतां महनीयसत्त्वम् ॥ ६ ॥

दीधित्युपज्ञमहनीयमहामनीषा
ब्रूते स्वतन्त्रबलदां नयपां नवीनाम् ।
कल्यां च कोकिलकलां कमनीयकल्पां
यामन्तरा मतिमतां महतां न सृष्टिः ॥ ७ ॥

मानी महामतिगतिर्मननैकमत्या
ध्यात्वा पदार्थनिवहं कुरुते स्वसृष्टिम् ।
तां चेतनां च चिनुते चपलां च चित्रां
चण्डां विचित्रचरितां विदुषां समक्षम् ॥ ८ ॥

भावानभावविभवानभवान् भवांश्च
नम्राननम्रविविधानशुभान् शुभांश्च ।
सृष्टेः समस्तविभवान् वृणुते पदार्थान्
मान्या वरिष्ठभवकारणता स्वतन्त्रा ॥ ९ ॥

न कारणत्वं पृथगस्ति तत्त्वं
पुरातनानां विमता मतिर्न ।
नयस्य पन्थानमनुस्मरन्तः
परिष्कृतिं तस्य दृढां च चक्रुः ॥ १० ॥

दोषाः पदं न दधते गुरुता न कापि
नान्यः शिरोमणिमणिः कुरुते प्रकाशम् ।
दृष्टिर्न कापि परिभाति सुधाधरैव
प्राचां प्रकाशमणिरेव तमो निहन्ति ॥ ११ ॥

स्फीतः शिरोमणिमणिर्न च कारणत्वं
दातुं समर्थविभवः पृथगेव तत्त्वम् ।
प्राचां विचाररविरेव तमो निहन्ति
विश्वं चकास्ति निजकारणतामवाप्य ॥ १२ ॥

चेत्कारणत्वं विमलं च तत्त्वं
सत्तां स्वकीयां पृथगेव नीत्वा ।
नित्यं च वाऽनित्यविकल्पजालं
भेदद्वयं वा दधते प्रकामम् ॥ १३ ॥

नित्यं यदा तन्महती विनष्टि-
स्तन्नाशगाथा विलयं गतैव ।
निर्दोषमार्गो न विभाति कोऽपि
पक्षे विचित्रे रघुनाथसृष्टे ॥ १४ ॥

उत्पादनाशौ शबलौ तदीयौ
जन्ये च तस्मिन्नपरा विपत्तिः ।
मान्या यदा गौरवभारधारी
दुष्टां च दृष्टिं जनयत्यजस्रम् ॥ १५ ॥

न कारणत्वं पृथगस्ति तत्त्वं
नयस्य मान्यं सबलं सुसिद्धम् ।
शिरोमणेर्भाति न भव्यभूति-
र्गुरुत्वदोषैरभिभूतदृष्टिः ॥ १६ ॥



## कारणत्वस्य पदार्थान्तरत्वविमर्शः

दीधितिकारः[१] कारणतायाः पदार्थान्तरत्वं मन्यते तस्याः प्रकारान्तरेण निरूपणासम्भवात् किन्तु एतद्विषये दीधितिकृन्मतिर्न युक्ता अन्यथासिद्धिशून्यत्वे सति कार्याव्यवहितनियतपूर्ववृत्तिता कारणतेत्येवं तस्या निरूपणस्य सुकरत्वात्। कार्याव्यवहितपूर्ववृत्तित्वं च कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे कार्याव्यवहितपूर्वक्षणे वर्तमानो यः प्रतियोगिव्यधिकरणोऽभावस्तन्निरूपितकारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतो यो धर्मस्तद्वत्त्वम्।

यथा समवायसम्बन्धेन घटं प्रति स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन दण्डः कारणम् तादृशः संयोगो घटारम्भकः कपालद्वयसंयोगः, समवायश्च कार्यतावच्छेदकसम्बन्धस्तेन सम्बन्धेन घटात्मनः कार्यस्याधिकरणं कपालद्वयं तत्र घटाव्यवहितपूर्वक्षणे वर्तमानः प्रतियोगिव्यधिकरणाभावो न स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन दण्डाभावस्तदानीं तत्र तादृशसम्बन्धेन दण्डस्य विद्यमानत्वात्, किन्तु वेमाद्यभावस्तन्निरूपितकारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिता वेमादौ तस्या अनवच्छेदकं दण्डत्वमिति तदेव तादृशप्रतियोगितानवच्छेदकत्वेन रूपेण कारणत्वम्।

उक्तलक्षणे कार्यतावच्छेदकसम्बन्धेनेत्यस्यानुक्तौ संयोगादिना घटाधिकरणे भूतलादौ कारणतावच्छेदकसम्बन्धेन दण्डाभावस्य सत्त्वाद् दण्डे दण्डत्वेन कारणत्वानुपपत्तिरिति तन्निरासाय तदुक्तिः।

कार्याधिकरणे तत्र कार्यानुक्तौ समवायेन पटाधिकरणे तन्त्वादौ दण्डाभावसत्त्वाद् तद्दोषतादवस्थ्यमिति तदपाकरणाय तदुक्तिः।

कार्याव्यवहितपूर्वक्षणानुक्तौ घटाधिकरणे कपालद्वये घटोत्पत्तेश्चिरपूर्वकाले घटध्वंसकाले च दण्डाभावस्य सत्त्वात् स एव दोष इति तन्निराकरणाय तदुक्तिः।

---

१. कारणत्वं च पदार्थान्तरम्। तच्च कार्यभेदादवच्छेदकभेदाच्च भिद्यते कारणत्वत्वेनाखण्डोपाधिनानुगतं च तत्तत्कारणपदशक्यतावच्छेदकम्। ग्राहकं च तस्य क्वचिद् अन्वयव्यतिरेकदर्शनसहकृतं प्रत्यक्षं क्वचिदनुमानं क्वचिदागमिकम्॥

॥ पदार्थतत्त्वनिरूपणे पृष्ठ सं० ७१-७४ ॥

तत्र कार्यानुक्तौ यत्किञ्चिदव्यवहितपूर्वकालत्वेन घटोत्पत्तेश्चिरपूर्वकालस्य ग्रहण-सम्भवेन पुनः स एव दोषः स्यात्, अव्यवहितपदानुक्तावपि तमेव कालमादाय पुनः स एव दोष इति तदनाकरणाय तयोरुक्तिः।

घटोत्पत्ते काले तदव्यवहितोत्तरकाले च घटवति कपालद्वये घटप्रागभावस्या-सत्त्वात्तत्र घटकारणत्वानुपपत्तिः स्यादिति तद्व्युदासाय तद्वचनम्।

क्षणपदानुक्तौ घटोत्पत्तेरव्यवहितपूर्वमुत्पन्नस्य घटोत्तरकालं यावत् स्थायिनो द्रव्यात्मककालस्य घटाव्यवहितपूर्वकालतया ग्रहणसम्भवेन तत्काले घटध्वंसदशायां कपालद्वये दण्डाभावस्य सत्त्वेन दण्डस्य पूर्ववत् कारणत्वानुपपत्तिः स्यादिति निरासाय तदुक्तिः।

प्रतियोगिव्यधिकरणत्वानुक्तौ कपालयोर्विजातीयः संयोगः कपालयोर्यद्भागे ने भवति तद्भागावच्छेदेन मिथः संयुक्ते तत्कपालद्वये घटाव्यवहितपूर्वक्षणे तादृशसंयोग-सम्बन्धेन दण्डाभावस्य सत्त्वात् तद्दोषतादवस्थ्य स्यादिति तदपसारणाय तदुक्तिः।

प्रतियोगितायां कारणतावच्छेदकसम्बन्धावच्छिन्नत्वं सम्बन्धान्तरेण दण्डाभाव-मादाय दण्डस्य कारणत्वानुपपत्तिपरिहाराय प्रविष्टम्।

लाघवात्तादृशप्रतियोगित्वाभावस्य कारणतात्वे चालनीन्यायेन घटवत्सु कपाल-द्वयेषु तत्तद्दण्डाभावस्य सत्त्वेन दण्डस्य कारणत्वं नोपपद्येतेति तदुपपत्तये तादृशप्रति-योगितानवच्छेदकत्वपर्यन्तानुधावनम्।

व्याप्यवृत्तेरवच्छेदकत्वानभ्युपगमे कपालस्य तदात्म्येन घटकारणत्वानुपपत्ति-र्घटवति कपालद्वये घटाव्यवहितपूर्वक्षणावच्छेदेन सतोऽभावस्य प्रतियोगितायां तादात्म्य-सम्बन्धावच्छिन्नत्वासम्भवादिति तत्परिहाराय कार्याव्यवहितपूर्वक्षणावच्छेदेनेत्यपहाय कार्याधिकरणवृत्तितायां निरवच्छिन्नत्वं निवेश्यम्।

प्रतियोगिव्यधिकरणत्वं च प्रयोजनाभावान्न देयम्। वृत्त्यनियामकसम्बन्धस्याभाव-प्रतियोगितानवच्छेदकत्वमते विषयतादिवृत्त्यनियामकसम्बन्धेन कारणत्वोपपत्तये प्रतियोगितायां कारणतावच्छेदकसम्बन्धावच्छिन्नत्वमनिवेश्य कारणतावच्छेदकसम्ब-न्धातिरिक्तसम्बन्धावच्छिन्नत्व-कारणतावच्छेदकधर्मावच्छिन्नत्वोभयाभावः प्रवेश्यः। अतः सम्बन्धान्तरेण कारणान्यस्याभावमादाय न वृत्त्यनियामकसम्बन्धेन कारणत्वानु-पपत्तिर्न वान्यसम्बन्धेन कारणाभावमादायासम्भवापत्तिः।

प्रमेयत्वादीनां तादृशतया घटकारणतात्वापत्तिवारणायोक्तानवच्छेदकत्वमन्यथा-सिद्धतानवच्छेदकत्वेन विशेषणीयम्, प्रमेयत्वादिना दण्डादेरन्यथासिद्धतया च न दोषः।

अन्यथासिद्धत्वञ्च अवश्यक्लृप्तकार्यनियतपूर्ववृत्तिभिन्नत्व तदनवच्छेदकत्वञ्च यद्यद्धर्मावच्छिन्ने कार्यनियतपूर्ववृत्तित्वे सत्यपि कारणत्वव्यवहारो न भवति तत्तद्धर्मभेदकूटवत्त्वम् ।

एवञ्च कारणताया उक्तरूपेण निरूपयितुं शक्यतया तस्याः पदार्थान्तरत्वाभ्युपगमो निर्युक्तिक एव ।

यत्तु रघुदेव आह-यत् कारणत्वं नातिरिक्तं किन्तु कारणतावच्छेदकरूपम् । न चैवं सत्यभेदेऽवच्छेद्यावच्छेदकभावानुपपत्तिरिति वाच्यम् एकरूपेण तदनभ्युपगमात्, अत्र तु कारणतात्वेनावच्छेद्यायाः कारणताया अवच्छेदकत्वस्य स्वरूपतो दण्डत्वेऽभ्युपगमे क्षतिविरहात् । अतिरिक्तकारणत्वत्वस्य सर्वैरङ्गीकारादिति । तस्यायमाशयः—यद् दण्डादिषु विद्यमाना घटकारणता दण्डत्वादिरूपैव पदार्थान्तरभूतं कारणतात्व कारणत्वाभिन्नस्य दण्डत्वादेर्धर्मस्तेन रूपेण दण्डत्वादिरूपा कारणता अवच्छेद्या दण्डत्वं च स्वरूपतोऽवच्छेदकमतः कारणता नातिरिक्तः पदार्थः ।

इदं रघुदेवमतं कारणतात्वनाम्नोऽनतिरिक्तपदार्थस्याभ्युपगमेन न विद्वज्जनप्रीत्यावहम्, उक्तरीत्या दण्डत्वादेर्घटनियतपूर्ववृत्तितावच्छेदकत्वेन कारणत्वरूपतया दण्डत्वाद्यभिन्नकारणतायाः कार्यनियतपूर्ववृत्तितावच्छेदकत्वेनावच्छेद्यत्वस्य सम्भवतयाऽतिरिक्तकारणतात्वस्याभ्युपगतेरनावश्यकत्वात् ।

किं च कारणतात्वस्य स्वीकारेऽपि तस्याखण्डोपाधिरूपे सामान्यप्रभेदे सम्भवदन्तर्भावतया तस्यातिरिक्तपदार्थत्वकल्पनं नितरां निर्युक्तिकमेव ।

---

## कार्यतायाः पदार्थान्तरत्वविमर्शः

कार्यत्वचिन्तनपथो रघुनाथसूरे-
र्भव्यो न भूरिविभवो महनीयदृष्टेः ।
तत्रापि भान्ति विविधा गुरुतादिदोषा
निर्दोषसूक्तिरपरा च परा विभूतिः ॥ १ ॥

कार्यत्वमस्ति पृथगेव नवः पदार्थः
संशीतिलेशरजनीचरता न तत्र ।
कुत्रापि तस्य गणना भणिता न भव्या
कार्या न तत्र धिषणा विमता नवीना ॥ २ ॥

जन्यत्वधर्मधवलं न विना प्रजन्यं
सत्त्वं स्वकीयमहनीयभरं बिभर्त्ति ।
तस्यापि निर्वचनमत्र नवं न भाति
निर्दोषभूमिरपरा न विभाति तस्य ॥ ३ ॥

तत्त्वं नवं नवमते रघुनाथसूरेः
कौतूहलं मतिमतां कुरुते नवीनम् ।
तच्चेतुमत्र सुधियो मतयो न चित्राः
सर्वा विरुद्धगतयो दधते न तत्त्वम् ॥ ४ ॥

चित्रं विचित्रचरितो रघुनाथसूरि-
र्जन्यत्वजन्यचषकं प्रचकार चोष्यम् ।
तत्रस्थतन्मधुरमादकता च जन्या
नव्यां सुसृष्टिकमलां विमलां तनोति ॥ ५ ॥

दीधित्युपज्ञधवला महनीयचर्चा
जन्यत्वरूपमहिताभिनवाऽद्वितीया ।
विज्ञस्य संसृतिसुधां कमनीयकल्पां
पातुं समर्प्य कुरुते रमणीयरावम् ॥ ६ ॥

कार्यत्वसत्त्वमिह बुद्धिमतो न गम्यं
भिन्नं स्वतन्त्रमितिदीधितिदिव्यदृष्टिः ।
यस्यां परिष्कृतिसुधा सहजा न भाति
नाभाति पङ्करहितो बुधराजमार्गः ॥ ७ ॥

यस्यां च दोषतमसः सबलः कलङ्को
नास्त्येव सा मतिमतां परिभाति भूतिः ।
सैषा परिष्कृतिपथा विहरत्यजस्रं
तस्यां शिरोमणिमणिर्विलयं प्रयातः ॥ ८ ॥

या नास्ति सौम्यसरणिर्विदुषां सतर्का
या वा मनांसि सुधियां हरते न रम्या ।
यस्यां न नूतनकला कुरुते विरावं
साऽभव्यभावभरिता ग्रथिता मुधैव ॥ ६ ॥



## कार्यत्वविषये दीधितिकृन्मतस्य विमर्शः

दीधितिकारः क्लृप्तेषु पदार्थेष्वन्तर्भावमसम्भाव्य कार्यत्वमपि पदार्थान्तरत्वेनाभ्युपजगाम। तथा हि-पदार्थतत्त्वनिरूपणे तेनोक्तं यद् एतेन कार्यत्वं व्याख्यातम्। कारणत्वप्रतियोगिकत्वमेव कार्यत्वमिति चेत् कार्यत्वप्रतियोगित्वमेव कारणत्वमिति किं न रोचयेः। तस्मात्कार्यत्वं कारणत्वं चोभयमेवातिरिक्तं भिन्नं चेति कृतं पल्लवितेनेति।

तस्यायमाशयः—यद् घटादिकं दण्डादीनां कार्यमित्यादिप्रतीतिभिर्घटादिषु दण्डादिकार्यत्वं सिद्धम्। तच्च कार्यत्वं क्लृप्तेषु पदार्थेषु नान्तर्भवति, तथा हि-कार्यत्वं द्रव्यप्रभृतिषु षड्भावपदार्थेषु नान्तर्भूतं ध्वंसवृत्तित्वाद्, नाप्यभावेऽन्तर्भूतं विधिमुखप्रतीतिविषयत्वाद् निषेधमुखप्रतीत्यविषयत्वाद्वा, अतः कार्यत्वं द्रव्यादिभ्यः पदार्थान्तरमेव।

न च कारणत्वं कारणेन सह कार्यस्य पदार्थान्तरभूतः सम्बन्धः कार्यं तत्सम्बन्धस्य प्रतियोग्यतः कार्यत्वं कारणताप्रतियोगित्वरूपमेव, प्रतियोगित्वं च कार्यस्वरूपानतिरिक्तः सम्बन्धविशेष इति वाच्यं विनिगमनाविरहेणान्यथाऽपि वक्तुं शक्यत्वाद् यथा कार्यत्वं कार्येण सह कारणस्य पदार्थान्तरभूतः सम्बन्धः कारणं तत्सम्बन्धस्य प्रतियोग्यतः कारणत्वं कार्यताप्रतियोगित्वमेव प्रतियोगित्वं च कारणस्वरूपानतिरिक्तः सम्बन्धविशेष इति, अतो विनिगमनाविरहात् कार्यत्वकारणत्वयोरुभयोरेव पदार्थान्तरत्वं परस्परभिन्नत्वं चाभ्युपेयम्।

किन्तु दीधितिकृतः कार्यत्वविषयकं मतमिदमालोच्यमानं नौचित्यमञ्चति, क्लृप्तेषु पदार्थेष्वन्तर्भावयोग्यस्य तत्स्वरूपस्य निर्वक्तुं शक्यत्वात्, तथा हि-कार्यत्वं न कश्चिन्निरूपकविशेषानियन्त्रितो धर्मः किन्तु निरूपकविशेषनियन्त्रितस्तत्तत्कार्यत्वरूपः। तत्तत्कार्यत्वं च तत्तन्निष्ठान्यथासिद्धयनिरूपकत्वे सति तत्तद्व्याप्यत्वम्, तत्तद्व्याप्यत्वं च स्वव्यापकतत्तत्कत्वरूपम्, तच्च तत्तन्निष्ठाभावप्रतियोगितानिरूपितपरम्परीयावच्छेदकतारूपं ,यथा घटे दण्डनिष्ठान्यथासिद्धयनिरूपकत्वे सति घटाव्यवहितप्राक्क्षणावच्छेदेन घटवन्निष्ठाभावप्रतियोगित्वाभावरूपं स्वव्यापकदण्डकत्वरूपं दण्डव्याप्यत्वमस्तीति घटो दण्डकार्यमिति व्यपदिश्यते, एवं च निरुक्तकार्यत्वघटकयोर्विशेष्यविशेषणदलयोरभावरूपतया सप्तमपदार्थे कार्यत्वस्यान्तर्भावसम्भवेन तस्य पदार्थान्तरत्वोपगमो निरर्थकः।

न चैवं कार्यत्वस्याभावरूपत्वे तस्य विधिमुखप्रत्ययानुपपत्तिरिति वाच्यं तन्निष्ठान्यथासिद्धिनिरूपकतानवच्छेदकत्वविशिष्टतद्व्यापकतावच्छेदकधर्मस्य तत्कार्यतारूपत्वाभ्युपगमेनोक्तानुपपत्त्यभावात्। दण्डनिष्ठान्यथासिद्धिनिरूपकतानवच्छेदकत्वस्य दण्डव्यापकतावच्छेदकत्वस्य च घटत्वे सत्त्वेन घटत्वस्यैव तद्रूपाभ्यां कार्यत्वस्वरूपत्वाभ्युपगमेन कार्यत्वस्य विधिमुखप्रत्ययविषयत्वे बाधकाभावात्।

न चैवं कार्यत्वस्य निरूपकविशेषनियन्त्रितत्वेनाननुगततया कार्यपदस्यानुगतार्थकत्वं न स्यादिति वाच्य कार्यत्वस्य वस्तुविशिष्टत्वरूपताभ्युपगमात्। वैशिष्ट्यं च स्वनिष्ठान्यथासिद्धिनिरूपकतानवच्छेदकत्व-स्वव्यापकतावच्छेदकत्वोभयसम्बन्धेन।

तथा च घटत्वादिरूपस्य विभिन्नस्य कार्यतावच्छेदकधर्मस्य वस्तुविशिष्टत्वेनानुगमसम्भवान्न कार्यपदस्यानुगतार्थकत्वानुपपत्तिः।

तदेवं कार्यत्वस्य क्लृप्तेषु पदार्थेष्वन्तर्भावयोग्यस्वरूपेण निरूपयितुं शक्यतया तस्य दीधितिकृतः पदार्थान्तरत्वोपगमो निर्युक्तिक एव।



## संख्यायाः पदार्थान्तरत्वविमर्शः

वैशेषिके बुधनये महनीयतन्त्रे
द्रव्यादिसप्त सुखदा भणिताः पदार्थाः ।
न्यूना न वाधिकविधां दधते कदापि
संख्या गुणेषु गणिता न पृथक्पदार्थः ॥ १ ॥

न्याये च षोडशविधां दधते पदार्थाः
श्रीगौतमेन गणिताः परिभान्ति भव्याः ।
वैशेषिकोक्तगणना दधते महत्त्वं
तत्रैव लीननवनीतिसमस्ततत्त्वम् ॥ २ ॥

नैयायिका न विमता भणिते पदार्थे
सप्तैव ते परिलसन्ति समर्थयन्ति ।
वैशेषिकोक्तधवलाः सकलाः पदार्था
नव्या न केऽपि कपिलानुगकृष्णकृत्स्नाः ॥ ३ ॥

सप्तर्षिकल्पकमनीयकदम्बभूतिं
तत्त्वस्य तात्त्विकफलार्थमलंचकार ।
तन्त्रं विचित्रचरितं महितं प्रसिद्धं
वैशेषिकं मतिमतां प्रतिभाधनानाम् ॥ ४ ॥

नैयायिकोऽपि कुशली कुशलांस्तनोति
वैशेषिकोक्तधवलान् धवलीकरोति ।
तर्कैकमञ्चमहिमा हिमवानिवैव
पीयूषकल्पमतिगाङ्गवनं व्यनक्ति ॥ ५ ॥

प्राचां विचारमहनीयसुधाप्रसङ्गे
संख्या गुणो न विमतिः सुधियां धियां वा ।
व्यावर्त्तिका सकलवस्तुधरा प्रशस्ता
लोके चकास्ति चषकं चयनीयचित्रम् ॥ ६ ॥

संख्यां सुधां सहजतापहरामुपेत्य
मत्ता बुधा न गणयन्ति सुधासमुद्रम् ।
लुब्धा नृपा धनकरीं समवाप्य संख्यां
राजन्ति राजवरराजपदं दधानाः ॥ ७ ॥

वक्ताऽपि तां गुणसमूहधरामवाप्य
राष्ट्रस्य भव्यविभवां धरते विभूतिम् ।
भव्यश्चकास्ति बलधामकुलं दधानः
संख्या गुणो न भणितिश्चपलस्य कस्य ॥ ८ ॥

सूरी रघुर्भणितिभव्यविभूतितर्कः
संख्या गुणो न गुणवत्त्वविपत्तिसत्त्वात् ।
रूपे गुणे मतिमता रघुणैव दिष्टा
नातो गुणोऽस्ति वितता महनीयसंख्या ॥ ९ ॥

संख्या सुधा प्रवृणुते रमणीयरूपं
ख्यातं वरं मतिमतां नयतन्त्रभूमेः ।
संख्या गुणो यदि भवेद् घटते कथं सा
भव्यो गुणो न गुणवानिति दिव्यनीतिः ॥ १० ॥

संख्या विभाति भुवने भवने प्रसिद्धे
रूपेऽपि नात्र विमतिः सुधियो धियो वा ।
बाधा न कापि कुलटेव विभाति कुब्जा
भ्रान्तिस्ततो मतिमतां न धुनोत्यधन्या ॥ ११ ॥

संख्या गुणो यदि कथा प्रथिता बुधानां
प्राचां तदा न रमते गुणवत्त्वबुद्धिः ।
रूपं च नास्ति गुणवन्महतीह मान्या
रम्यैव राजति रमा रमणीयरीतिः ॥ १२ ॥

मान्यो गुणो न गुणवान् गुणवच्च सत्त्वं
न्यायो नये च रमते रमणीयरेखः ।
ब्रूते सदैव सबलो न गुणोऽस्ति संख्या
साध्वी ततश्च पृथगेव नवः पदार्थः ॥ १३ ॥

सख्या पदार्थान्तरतामुपेता
बाभाति भव्या सरसा सतीव ।
ब्रूते रघुर्नास्ति गुणश्च संख्या
प्राचां प्रमादो विमतिर्न तत्र ॥ १४ ॥

सम्वन्धभेदधवलं परिभाव्य ·पे
संख्या विभाति घटवृत्तिविचित्ररूपा।
संशीतिलेशकणिका क्षणिका वराकी
प्राचीनमार्गममलं न निहन्ति रुग्णा ॥ १५ ॥

संख्या गुणेऽपि सकले परिभाति भव्या
सम्वन्धभेदभुवना सकलप्रतीतौ।
नातश्च दोषशकलं कुरुते कलङ्कं
संख्यागुणे हिमकरे मुकुरे च रम्ये ॥ १६ ॥

रीत्यानया मतिमतां सबलः स पक्षः
संख्या गुणेषु गणिता दधते न दोषम्।
नव्याऽतिरिक्तमहिता न विभाति सत्ता
तस्याश्च कापि रघुनाथपथप्रदिष्टा ॥ १७ ॥

सम्बन्धभेदसबलस्य सुधाकरस्य
पीयूषकल्पमहनीयमहो विचित्रम्।
संख्यां सुसाधयति किं गुणनामवामां
कामां विचित्रचरितां कमनीयगात्राम् ॥ १८ ॥

एकत्वभानसकलं धरते न भेदं
द्रव्ये गुणे न भजते विपरीतभानम्।
सम्बन्धभेदरसिकः प्रबलो न पक्षः
प्राचां विचारसरणी रमणी न रौति ॥ १९ ॥

सम्बन्धभेदमधिगत्य विधाविधाने
रूपत्ववृत्तिमहिता प्रथिता प्रसंख्या।
बोधस्य भव्यविषया समवैति नाशं
नातः कदापि च गुणः प्रथिताऽपि संख्या ॥ २० ॥

रूपे सदा कवलिता विविधाऽपि संख्या
न्यायस्य खड्गविषमस्य कथाप्रसङ्गे।
रूपत्ववृत्तिरपरा न परापि कापि
संख्या प्रतीतिविषया महनीयभावा ॥ २१ ॥

प्राचां विचारसरणिः सबलाऽपि शेते
संख्या गुणोक्तिरधुना दधते न कान्तिम्।
तर्कोऽपि तथ्यकथनस्तनुते न चित्रं
संख्या गुणो न पृथगेव नवः पदार्थः ॥ २२ ॥

एकत्वसंख्या न विलक्षणास्ति
सर्वत्र सैकं दधते स्वरूपम् ।
प्राचां नये सा विविधप्रमार्गान्
धृत्वा न शोभां धरते प्रकृष्टाम् ॥ २३ ॥

मान्या गुणो न गुणवानिति भव्यभूतिः
सम्बन्धसिद्धसमवायमलङ्करोति ।
सिद्धा गुणोऽपि गुणवानिति तर्कनीतिः
पर्याप्तिपूर्णसहयोगरसारसज्ञा ॥ २४ ॥

संख्या द्विधैव कमला कमलङ्करोति
द्रव्यं च काचन मुदा वृणुते वरिष्ठा ।
भव्याऽपरा परतरं चिनुते गुणश्च
सम्बन्धमेव रसिकं सहयोगमेत्य ॥ २५ ॥

विभाति संख्या समवेतरूपा
विराजते द्रव्यसमूहनिष्ठा ।
सदैव संख्याऽसमवेतरूपा
गुणेषु कान्तिं धरते स्वकीयाम् ॥ २६ ॥

एकत्वसंख्या समवेतरूपा
द्रव्ये च नित्ये परिभाति नित्या ।
जन्ये त्वनित्या विमलैव भाति
द्वित्वादिसर्वा न कदापि नित्या ॥ २७ ॥

संख्या सदा साऽसमवेतरूपा
नित्यैव नातोऽभिनवा प्रसक्तिः ।
एवं च संख्या गुणतां श्रितैव
नाभाति संशीतिमुधाप्रसङ्गः ॥ २८ ॥

मानं न धत्तेऽसमवेतसंख्या
प्रश्नश्च नायं समुदेति नव्यः ।
संख्या गुणे भाति न तत्र शङ्का
मानं तदैवेति विलोडनीयम् ॥ २९ ॥

एकत्र योगसमवायसुधा प्रभाति
पर्याप्तियोगयमुना वृणुते गुणश्च ।
लब्ध्वा परं सहजभव्यवरं स्वकीयं
सूर्यस्य भाति तनया नयशास्त्रमूर्त्तेः ॥ ३० ॥

सम्बन्धभिन्नं समवाय संख्या
प्राचां विधायां मुदिता विभाति ।
लोकस्य वृत्तेरवहेलनेन
मान्या न हेया विपरीतमार्गा ॥ ३१ ॥

प्रकारभागे न विलक्षणा सा
संसर्गभागे च विशेष्यकल्पा ।
विशेष्यभागेऽपि विलक्षणैव
संख्यागुणे भाति न कापि बाधा ॥ ३२ ॥

संख्या गुणो न सुधियो रघुनाथसूरेः
पक्षः सदाशयसुधां कवलीकरोति ।
धत्ते वितर्ककशिपुं मधुरं न धत्ते
त्याज्यस्ततश्च नयशास्त्रविरुद्धकक्षः ॥ ३३ ॥

वचनता मधुरा न शिरोमणे-
र्मतिमतां मनसां हरणेऽबला ।
दहति सा कुलटा कुलवैभवं
वमति तर्कगरं गुरुताकरम् ॥ ३४ ॥

कृतिमतो वचनं गुणताधरं
न गुरुतागरतामलिनीकृतम् ।
न च कलङ्ककुलं भरते भुवि
लसति निर्मलगाङ्गवनायितम् ॥ ३५ ॥

संख्या प्रसिद्धा गुणतामुपेत्य
सिद्धेषु गण्येषु गुणेषु भाति ।
सर्वत्र सा भाति सुधेव भव्या
नव्या रघूक्तिर्नवलां न लाति ॥ ३६ ॥

सम्बन्धबुद्धिरमलामलला न भाति
सम्बन्धिनं सुखयते हरते मलं च ।
भव्यं पदार्थनिवहं विभवं व्यनक्ति
वाचं चिनोति चितिदां सुधियां विचित्राम् ॥ ३७ ॥

संख्यावतां स्फीतपदार्थसंख्या
प्राचां मता या च गुणस्वरूपा ।
सैवास्ति तन्त्रे रघुनाथदृष्ट्या
नव्यः पदार्थो न गुणस्वरूपा ॥ ३८ ॥

मान्यो नवो मतिमतां प्रथितः पदार्थः
संख्या गुणो न भुवने भवनेऽपि भव्ये ।
तन्त्रे नये रघुकथा सबला न भाति
तर्कच्युता भणितिभव्यविभाव्यरम्या ॥ ३९ ॥

संख्यागुणे मतिमतां सबलं प्रमाणं
संभाव्य भूतिमधुना रघुनाथसूरेः ।
बन्धे निरस्य सुधियां महतां समक्षं
ब्रूमो वयं विविधनीतिकथां प्रशस्ताम् ॥ ४० ॥



# संख्याविषये दीधितिकृन्मतविमर्शः

प्राचीननैयायिकैरभिमतं संख्याया गुणपदार्थत्वं निरस्य दीधितिकृता तस्याः पदार्थान्तरत्वं प्रतिष्ठापितम्, उक्तं च तेन यत् 'संख्या च पदार्थान्तरं न तु गुणो गुणादिष्वपि तद्वत्त्वप्रत्ययात्। न चासौ भ्रमो बाधकाभावात्। एकार्थसमवायप्रत्यासत्त्या तथा प्रत्यय इति चेन्न विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात्। घटत्वादौ चैकार्थसमवायादेकत्वप्रत्ययवद् द्वित्वाद्येकार्थसमवायाद् द्वित्वादिप्रत्ययप्रसङ्गः, रूपत्वादौ च न तत्सम्भवः।

अयमाशयः—

संख्याया अयमेक इमौ द्वौ, इत्यादिप्रत्यक्षप्रतीतिसाक्षिकाया गुणपदार्थत्वं नाभ्युपगन्तुं शक्यम्, एकं रूपं द्वे रूपे, इत्यादिरूपेण रूपादिगुणेष्वपि संख्यायाः प्रतीयमानत्वात्। संख्याया गुणत्वे इमाः प्रतीतयो न स्युः, गुणे गुणानङ्गीकारेण रूपादिगुणेषु गुणात्मिकायाः संख्यायाः सत्त्वासम्भवात्। रूपादिषु एकत्वादिप्रत्ययो भ्रम इति वक्तुं न शक्यते, एकं रूपं द्वे रूपे, इत्यादिप्रत्ययानन्तरं रूपं नैकं रूपे न द्वे इत्येवंविधबाधकप्रत्ययस्याभावेन रूपादावेकत्वादिप्रत्यये भ्रमत्वस्योपपादयितुमशक्यत्वात्।

न च घटादिगतमेकत्वादिकमेव स्वसमवायिसमवायसम्बन्धेन घटादिगतरूपादौ प्रतीयत इति वक्तुं शक्यं घटादौ रूपादौ च जायमानेष्वेकत्वादिप्रत्ययेषु एकत्वाद्यंशे वैलक्षण्याभावेन घटादौ एकत्वादिप्रत्ययः समवायगोचरो रूपादौ च स्वसमवायिसमवायगोचर इति वक्तुमशक्यत्वात्।

किं च घटत्वादौ यथा घटनिष्ठस्यैकत्वस्य स्वसमवायिसयवायसम्बन्धस्तथा घटगतद्वित्वस्यापि विद्यतेऽतो घटे धटत्वमेकमितिप्रत्ययवद् घटयोर्घटत्वद्वयमिति प्रत्ययस्याप्यतिप्रसक्तेः।

किं चैवमभ्युपगमेऽपि रूपत्वादावेकत्वप्रत्ययो दुरुपपाद एव, रूपे एकत्वस्याभावेन रूपत्वे एकत्वस्य स्वसमवायिसमवायसम्बन्धस्याप्यसम्भवादतः संख्याया गुणरूपत्वमनभ्युपगम्य पदार्थान्तरत्वमेव वाच्यमिति।

दीधितिकृतः संख्याविषयकं मतमेतन्निरूप्यमाणं तदीयनैपुण्यप्रतिष्ठापने न प्रभवति। रूपादौ रूपत्वादौ च गुणात्मिकाया अपि संख्यायाः पर्याप्तिसम्बन्धेनावगाहनसम्भवात्। गुणे समवायसम्बन्धेनैव गुणवत्ताया निषेधात्।

अयम्भावः—संख्या हि गुणः सा च द्विविधा—समवेता, असमवेता च, समवेतासंख्या द्रव्य एव तिष्ठति, असमवेता संख्या च पर्याप्तिसम्बन्धेन गुणादावपि तिष्ठति ।

समवेतसंख्यास्वेकत्वं द्विविधं नित्यमनित्यं च, नित्यगतमेकत्वं नित्यमनित्यगतमेकत्वमनित्यम् । द्वित्वादिरूपा समवेतसंख्या च सर्वाऽनित्यैव, असमवेतसंख्या च सर्वा नित्यैवातो नाद्रव्येऽपि भावकार्योत्पत्तिप्रसङ्गः ।

न चासमवेतसंख्यायां मानाभाव इति वक्तुं शक्यं गुणादावबाधितादेकत्वादिप्रत्ययात्तत्सिद्धेः ।

ननु द्रव्ये गुणे च जायमानानामेकत्वादिप्रत्ययानामवैलक्षण्येन विभिन्नसम्बन्धविषयकत्वकल्पनमयुक्तमिति चेन्न, उक्तप्रत्ययानां प्रकारांश एवावैलक्षण्यात् । संसर्गांशे च विशेष्यांश इव वैलक्षण्यस्यैवाभ्युपगमात् ।

न च द्रव्यत्वसाध्यकगुणलिङ्गकानुमितिनिरूपितगुणनिष्ठकारणतावच्छेदकतया सिद्धा गुणत्वजातिरसमवेतसंख्यायां न सम्भवति तत्र द्रव्यत्वसाध्यकानुमितिकारणताया असत्त्वात्तथा च गुणनिष्ठस्य गुणत्वजातिरूपस्य पदार्थविभाजकोपाधेरसमवेतसंख्यायामसत्त्वेन तस्या गुणेऽन्तर्भावस्यासम्भवात् संख्यायाः पदार्थान्तरत्वमेवोचितमिति वाच्यं गुणपदप्रवृत्तिनिमित्ततया सिद्धाया गुणत्वजातेरेव पदार्थविभाजकोपाधित्वाभ्युपगमेनोक्तदोषाभावात् । गुणपदप्रवृत्तिनिमित्ततया सिद्धाया गुणत्वजातेरसमवेतसंख्यायामपि स्वीकारात् । रूपादिगतमेकत्वादिकमपि गुण इत्येवंविधव्यपदेशस्य लोकसिद्धतयाऽसमवेतसंख्यायामपि गुणपदप्रवृत्तिनिमित्तस्याभ्युपगमनीयत्वात् ।



## समवायस्यैकत्वविमर्शः

संसर्गमोहमहिमा मतिमन्तमेति
सिद्धं समस्तसुधियां हरतेऽन्तरालम् ।
प्रत्यूहपुञ्जपविपातमपाकरोति
संवर्ध्य शक्तिशकलं कुरुते विशालम् ॥ १ ॥

योगेषु सिद्धः समवाययोगो
भुङ्क्ते गुणादिं प्रथितं पदार्थम् ।
तत्रैव योगी रमते रसालः
सम्बन्धिनो वैभवमादधानः ॥ २ ॥

प्राचां प्रवादः समवाय एकः
सर्वत्र नैर्मल्यकरः प्रभाति ।
नान्या विधा तस्य विभाति भव्या
दोषो न कश्चित् कुरुते कलङ्कम् ॥ ३ ॥

न्याय्यं च योगसमवायविचित्रतत्त्वे
नानात्वमत्र रमते पवते पवित्रम् ।
योगोऽयमेक इति वाग् दधते न सत्तां
गन्धादिमत्त्वमहितं सलिलस्य नेष्टम् ॥ ४ ॥

स्पर्शस्य सत्त्वं सलिले प्रसिद्धं
योगेन तेनैव गतिः परा न ।
एवं स्थितौ तत्सलिले प्रसक्तं
गन्धादिमत्त्वं न विहन्तुमर्हम् ॥ ५ ॥

नानात्वपक्षे न विभाति दोषो
गन्धस्य गन्धः सलिले न तत्र ।
मार्गो रघूक्तो धरते न दोषं
ग्राह्यस्ततो दीधितिकृद्विमर्शः ॥ ६ ॥

नानात्वपक्षे समवायसिद्धि-
नों सेद्धुमर्हा रघुणोपदिष्टा।
योगस्वरूपेण समस्तसिद्धौ
व्यर्था तदीया रमणीयचर्चा ॥ ७॥

एको विचित्रः समवाययोगः
सिद्धो लघुत्वादमलो विभाति।
दोषा रघूक्ता दधते पदन्न
योगे पवित्रे विशदे विशिष्टे ॥ ८॥

तस्मिन् विशिष्टे परिलब्धसत्त्वे
नो गन्धवत्त्वं पयसः प्रसक्तम्।
चित्रैव रीती रमते तदीया
बाधा विशिष्टा कुरुते न नादम् ॥ ९॥

दिष्टाऽपि सम्बन्धसुधा विशिष्टा
दोषान् विशेषान् हरते न वामा।
दीधित्युपज्ञं रमणीयरम्यं
ब्रूमो वयं स्वप्नकथेव हेयम् ॥ १०॥

आधारतां भिन्नकथां विचित्रां
दृष्ट्वैव दोषा दधते न सत्ताम्।
प्राचां धियां राजति राजमार्गो
सर्वेष्टसिद्धे रसिकोऽग्रगण्यः ॥ ११॥

सुसमवायसुधा धरते धरां
मतिमतां कृतिनां प्रतिमां मताम्।
बुधशिरोमणिकल्पितकामना
कुशलतालवता कुलपांसुला ॥ १२॥



## समवायविषये दीधितिकृन्मतविमर्शः

दीधितिकृता प्राचीननैयायिकाभिमतं समवायस्यैकत्वं निरस्य नानात्वं प्रतिष्ठापयितुकामेन पदार्थतत्त्वनिरूपणे इत्थमुक्तम्—

'समवायोऽपि च नैको जलादेर्गन्धादिमत्त्वप्रसङ्गात् परं तु नानैव, समवायत्वं तु पुनरनुगतमखण्डोपाधिरिति'

तस्यायमाशयः—

यत्समवायो यदि सर्वेषां गुणानां सर्वत्रैक एव सम्बन्धः स्यात्तदा गन्धस्नेहादीनां समवायस्यैकतया जलादौ स्नेहादिसमवायस्य सत्त्वेन गन्धादिसमवायस्याप्यवश्यं विद्यमानतया जलादेर्गन्धादिमत्त्वं स्याद् यो यदीययत्सम्बन्धवान् स तेन सम्बन्धेन तद्वानिति व्याप्तेरतः समवायः प्रतियोगिभेदेन भिन्न एवाभ्युपेयस्तथा च गन्धसमवायस्य स्नेहादिसमवायतो भिन्नतया तस्य जलादिवृत्तित्वे मानाभावेन जलादौ न गन्धादिमत्त्वप्रसङ्गः।

दीधितिकृता प्रतिष्ठापितः समवायनानात्ववादो विचार्यमाणो नोपपत्तुमर्हति, यतो यदि समवायो नाना स्यात्तर्हि तस्य सिद्धिरेव न स्यात् समवायसाधकत्वेनाभिमताया गुणादिविशिष्टबुद्धेः स्वरूपसम्बन्धेनैवोपपत्तिसंभवात्।

अयम्भावः—गुणक्रियादिविशिष्टबुद्धिर्विशेष्यविशेषणसम्बन्धविषया विशिष्टबुद्धित्वादित्यनुमानेनैवोक्तबुद्धेः समवायविषयकत्वं साध्यते यतो हि संयोगस्य द्रव्यमात्रनिष्ठत्वनियमेनोक्तबुद्धेः संयोगमादाय विशेष्यविशेषणसम्बन्धविषयकत्वं न स्वीकर्तुं शक्यते, वायुप्रभृतौ रूपादिमत्त्वप्रसङ्गभयेनोक्तबुद्धेः कालिकादिसम्बन्धविषयकत्वमपि न स्वीकर्तुं शक्यते, स्वरूपसम्बन्धविषयकत्वमपि अनेकेषु गुणादिषु संसर्गताख्यविषयतानां कल्पनया गौरवप्रसङ्गेन न स्वीकर्तुं शक्यतेऽतो लाघवादुक्तबुद्धेर्यत् किंचिदेकसम्बन्धविषयकत्वमेव मन्यते, स चैकः सम्बन्धः समवायशब्देन व्यपदिश्यते।

यदि पुनः समवायोऽप्यनेकः स्यात्तदोक्तबुद्धेः सांसर्गिकविषयताया अनेकेषु समवायेषु कल्पनीयतया तदपेक्षया क्लृप्तेषु गुणादिस्वरूपेष्वेवोक्तबुद्धेः संसर्गताख्यविषयतायाः कल्पनस्यौचित्यात् समवायस्योच्छेद एव स्यात्।

यद्येवमुच्येत तदुक्तबुद्धेः संसर्गताख्यविषयताया गुणादिषु कल्पने महागौरवं गुणादीनामनन्तत्वात् समवायस्य नानात्वेऽपि तत्सांसर्गिकविषयतायाः कल्पने न तादृशं गौरवम्, एकैकजातीयगुणानामेकैकस्यैव समवायस्याभ्युपगमेन गुणाद्यपेक्षया समवायस्याल्पत्वात्, तदापि समवायसिद्धिः दुःशकैव, एकैकजातीयगुणानामेकैकसमवायस्वीकारे एकघटगतरूपादेरन्यघटादिष्वस्तित्वप्रसङ्गस्य दुर्वारतापत्तेः। अन्यघटीयरूपादीनां समवायस्यैतद्घटगतरूपादीनां समवायस्य चैकत्वेऽन्यघटादिष्वप्येतद्घटगतरूपादेः सम्बन्धस्य सत्त्वेन तत्रैतद्घटगतरूपादिमत्त्वस्यापरिहार्यत्वात्, प्रतिव्यक्तिभेदेन समवायभेदाभ्युपगमे च गुणक्रियादिविशिष्टबुद्धीनां स्वरूपसम्बन्धविषयकत्वेनैवोपपादने लाघवेन ततः समवायसम्बन्धसिद्धेरत्यन्तमसम्भवात्।

न च समवायस्यैकत्वाभ्युपगमपक्षोऽप्युक्तरीत्या दोषग्रस्त एव। अतः समवायः सर्वथा त्याज्य एवेति वाच्यं समवायस्यैकत्वेऽप्युक्तापत्तिसम्भवात्। तथा हि—उक्तापत्तिर्यो यदीयसम्बन्धवान् स तेन सम्बन्धेन तद्वानिति व्याप्तेरेवोपजीविका, व्याप्तिश्चेयमसिद्धा कुण्डसंयोगस्य बदरे सत्त्वेऽपि संयोगसम्बन्धेन तत्र कुण्डवत्ताया अभावेनोक्तव्याप्तेर्व्यभिचारग्रस्तत्वात्।

न च यो यत्प्रतियोगिकयत्सम्बन्धवान् स तेन सम्बन्धेन तद्वानिति व्याप्तिस्तथा च न व्यभिचारः कुण्डबदरसंयोगस्य कुण्डप्रतियोगिकत्वाभावादिति वाच्यम्, एवमपि बदरप्रतियोगिकसंयोगस्य कुण्ड इव बदरेऽपि सत्त्वेन तत्र च संयोगसम्बन्धेन बदरस्यासत्त्वेन व्यभिचारात्।

न च यो यत्प्रतियोगिकत्वविशिष्टयत्सम्बन्धवान् स तेन सम्बन्धेन तद्वानित्येव व्याप्तेर्बदरे बदरप्रतियोगिकत्वविशिष्टसंयोगस्यानभ्युपगमेन व्यभिचाराभाव इति वाच्यम्, एवं सति गन्धस्नेहादिसमवायस्यैकत्वेऽपि जले स्नेहप्रतियोगिकत्वविशिष्टसमवायस्यैव सत्त्वेन गन्धप्रतियोगिकत्वविशिष्टसमवायस्यासत्त्वेन तत्र गन्धादिमत्त्वप्रसङ्गवारणसम्भवेन समवायैकत्ववादस्यापि निर्दोषत्वसम्भवात्।

ननु समवाये यदि गन्धप्रतियोगिकत्वं न स्याज्जले वा समवायो न स्यात्तदैव जले गन्धप्रतियोगिकत्वविशिष्टसमवायाभावो भवितुमर्हति परन्तु समवाये गन्धप्रतियोगिकत्वमप्यस्ति, एवं जले समवायोप्यस्त्यतो जले गन्धप्रतियोगिकत्वविशिष्टसमवायस्यैव सद्भावस्यौचित्येनोक्तसमाधानं न समीचीनमिति चेन्न गन्धप्रतियोगिकत्वविशिष्टसमवायवानितिप्रतीतेरेव गन्धप्रतियोगिकत्वविशिष्टसमवायस्य सद्भावसाधकत्वात्, उक्तप्रतीतेश्च जलेऽसत्त्वात्, अन्यथा बदरप्रतियोगिकत्वस्य कुण्डबदरसंयोगे सत्त्वेन संयोगस्य च तस्य बदरे सत्त्वेन तत्र बदरप्रतियोगिकत्वविशिष्टसंयोगाभ्युपगमे बदरे बदरवत्ताया दुर्निवारत्वप्रसङ्गात्।

न च युक्त्यानया गन्धादिप्रतियोगिकत्वविशिष्टसमवायस्य शुद्धसमवायाद् यदि भेदस्तदा शुद्धसमवायस्य नानात्वकल्पनमेव न्याय्यं यदि चाभेदस्तदा जले शुद्धसमवायस्य सत्त्वेन तदभिन्नस्य गन्धप्रतियोगिकत्वविशिष्टसमवायस्यापि सद्भावोऽपरिहार्य इति वाच्यं शुद्धविशिष्टयोरैक्येऽपि शुद्धसमवायाधिकरणतातो विशिष्टसमवायाधिकरणताया भिन्नत्वस्यावश्यकत्वात्, अन्यथा जलं समवायवदिति प्रतीतेरिव जलं गन्धप्रतियोगिकत्वविशिष्टसमवायवदितिप्रतीतेरपि दुर्वारत्वं स्यात् ।

न चैवं यदि विशिष्टाधिकरणताया अतिरिक्तत्वं स्वीक्रियते तर्हि तदपेक्षया समवायस्यातिरिक्तत्वकल्पनमेव समीचीनं तत्कल्पने विशिष्टाधिकरणताया अतिरिक्तायाः कल्पनस्यानावश्यकत्वादिति वाच्यं कुण्डबदरसंयोगस्यैकतयोक्तरीत्या बदरे बदरवत्तापत्तेर्वारणाय शुद्धसंयोगाधिकरणतातो बदरप्रतियोगिकत्वविशिष्टसंयोगाधिकरणताया भिन्नत्वस्वीकारस्यावश्यकत्वात् ।



## वैशिष्ट्यस्य पदार्थान्तरत्वविमर्शः

वैशिष्ट्यमेकममलं कमलं स्वतन्त्रं
सम्बन्धरूपमखिलं धरतामभावम् ।
संभूष्य तां मतिमतो रघुनाथसूरे-
र्निष्ठामपूर्वविमलां कमलां भुनक्तु ॥ १ ॥

भव्यं प्रकल्प्यमशिवं हरते स्वरूपं
तत्त्वं तदेव मनुतां न पृथक् पदार्थः ।
वैशिष्ट्ययोगमहिमा लभते न सत्त्वं
तन्त्रे शिरोमणिमणेर्विभवो न भाति ॥ २ ॥

योगस्वरूपसहजस्य विभाकरस्य
सत्ता दृढा किरणकार्मुकमादधाना ।
लक्ष्यं निपातयति भव्यविभं यदैव
सम्बन्धभूतिसमवायकथा न कार्या ॥ ३ ॥

छिन्ना न सा मतिमतामपरा विभूति-
र्वैशिष्ट्यकीर्त्तिरमरापि मरा कथं मे ।
युक्त्या यया कृतिमतां समवायसिद्धि-
र्वैशिष्ट्यसिद्धिरमृता च तयैव रीत्या ॥ ४ ॥

शिष्टा मतिश्च समवायजतामुपेता
दिव्या गुणादिसहिता कमनीयकूला ।
वैशिष्ट्यजापि विमला कमलेव कम्रा
मान्या कथं न भवतां सुधियां प्रशस्ता ॥ ५ ॥

आधारसम्बद्धविभामुपेता
बुद्धेरभावस्य विभाति माया ।
सैव प्रमाणत्वमहश्चिनोति
सम्बन्धमन्यं तनुते न साध्वी ॥ ६ ॥

सम्बद्धताभावदशास्थितोऽपि
प्रमाणसिद्धो रमते पदार्थः ।
सम्बन्धमन्यं परिधाय भव्यो
लोके स्वकीयां कलिकां दधाति ॥ ७ ॥

एवं स्थितौ भव्यकथा रघोर्न
वैशिष्ट्यसम्बन्धविभानुपेता ।
निस्तर्कशस्त्राद् विहता मुधैव
मान्या न हेया विभुताविहीना ॥ ८ ॥

आधारसम्बद्धकथां विनैव
सत्त्वं यदीयं तनुते प्रकाशम् ।
सम्बन्धभूषा रमते च तत्र
नाभावबुद्धावतिरिक्तयोगः ॥ ९ ॥

अभावसत्ता परिहाय भव्यं
नाधाररूपं रमते कदापि ।
नापेक्षते तत्र विशालचर्चां
सम्बन्धसौधस्य विषादभूता ॥१०॥

रघुकथा सरिताकुलभव्यता
न विभुतां मुदिता धरते सदा ।
परमपावनता हरणेऽबला
सबलनायकनेत्रनियन्त्रिता ॥११॥

वैशिष्ट्यनामाभिनवः स योगो
युक्तो रघूक्तो न विभाति कम्रः ।
तर्कप्रकर्षः कुरुते न रोधं
प्राचां स्वपक्षस्तनुते प्रकाशम् ॥१२॥

स्वरूपपक्षे लघुता सशक्ता
रघूक्तदृष्टौ गुरुता तथैव ।
अतो रघूक्तो विपरीतमार्गो
बुधैः प्रहेयोऽरमणीयतर्कः ॥ १३ ॥

बुधविशिष्टकथा कथिताधुना
मतिमतां मनसामवसादिका ।
मतिकला मतिदा न विभाति सा
गुरुकथा गरतागुरुताधरा ॥१४॥

अभिनवा नवताण्डवभाण्डिका
सृजति नूतननर्त्तनचण्डिका ।
नवकलां विकला विफलार्थिका
दहति विज्ञमतिर्दयिताऽधुना ॥१५॥

वैशिष्ट्यपक्षे प्रबला अनेके
दोषा विषं नीतिकुलं वमन्ति ।
प्राचां स्वरूपे गुणदा गुणास्ते
राजन्ति तन्त्रे विमला शशाङ्काः ॥१६॥



## वैशिष्ट्यस्य पदार्थान्तरत्वविषये दीधितिकृन्मतविमर्शः

दीधितिकारो वैशिष्ट्यस्य पदार्थान्तरत्वं पदार्थतत्त्वनिरूपणग्रन्थे प्रतिष्ठापयन्नित्थमाह—

'वैशिष्ट्यमपि पदार्थान्तरम्, रूपादिप्रतीतिनिमित्ततया समवायस्येवाभाववत्ताप्रतीतिनिमित्ततया तस्यापि सिद्धेः। स्वरूपसम्बन्धविशेष एव तथाप्रतीतिनिमित्तमिति चेन्न समवायोच्छेदप्रसङ्गात्, तत्रापि स्वरूपसम्बन्धविशेषस्य निमित्ततायाः सुवचत्वात्।'
अयमाशय :—

घटादौ रूपादिविशिष्टबुद्धिर्विशेष्यविशेषणसम्बन्धजन्या विशिष्टबुद्धित्वादिति प्रतीत्या यथोक्तबुद्धिजनकीभूतो घटादिभिः सह रूपादीनां समवायसम्बन्धः सिद्धचति तथैव भूतलादिकं घटाद्यभाववदितिप्रतीतिर्विशेष्यविशेषणसम्बन्धजन्या विशिष्टबुद्धित्वादित्यनुमानेन तादृशबुद्धिजनकतया भूतलादिभिः सह घटाभावादेरपि कश्चित्सम्बन्ध आवश्यकः. स च सम्बन्धः संयोगसमवायादिभिन्नो द्रव्यादिक्लृप्तपदार्थेष्वनन्तर्भूततयाऽतिरिक्तपदार्थो वैशिष्ट्यशब्देन विशेषणताविशेषशब्देन वा व्यपदेश्यः।

न चोक्तबुद्धिर्घटाद्यभावाधिकरणीभूतभूतलादिस्वरूपसम्बन्धनिमित्तकतयापि सेद्धुमर्हतीति तज्जनकतया न सम्बन्धान्तरसिद्धिरिति वाच्यं तथा सति घटादौ रूपादिविशिष्टबुद्धेरपि स्वरूपसम्बन्धनिमित्तकतायाः सम्भवेन समवायस्योच्छेदप्रसङ्गात्।

किन्तु दीधितिकारस्य मतमिदं नानुमोदनार्हम्—अभावस्याधिकरणसम्बद्धस्यैव प्रमाणसिद्धतयाऽभावाधिकरणयोर्मध्ये सम्बन्धान्तरस्यानपेक्षणात्। यः पदार्थो येन पदार्थेनासम्बद्धोऽपि प्रमाणसिद्धो भवति तेनैव सह तत्पदार्थस्य सम्बन्धान्तरकल्पनाया युक्तत्वात्तस्याधिकरणेन सह स्वभावतोऽसम्बद्धत्वात्।

एवं यथा प्रमाणेन भूतलासम्बद्धतया सिद्धस्य घटादेर्भूतलेन सह स्वभावतोऽसम्बद्धतया तयोर्मध्ये संयोगनामकं सम्बन्धान्तरमावश्यकम्। तथैव घटादिना चक्षुःसन्निकर्षस्य साक्षादेव सम्भवेन घटादिरपि कपालादिभिरसम्बद्ध एव प्रत्यक्षप्रमाणेन सिद्धयत्यतस्तस्यापि कपालादिना स्वभावेन सम्बद्धत्वमप्रामाणिकमिति कपालादिना सह तस्यापि समवायाख्यसम्बन्धान्तरमावश्यकम्।

परन्त्वभावोऽधिकरणद्वारैव चक्षुरादिना सन्निकृष्टो भवति ततश्चक्षुरादिनाऽधिकरणसम्बद्धस्यैव तस्य सिद्धतयाऽधिकरणेन सह तत्सम्बन्धस्य स्वाभाविकतया तयोर्मध्ये सम्बन्धान्तरमनावश्यकम् ।

न चैवमवयवेष्ववयविनां समवायाख्यसम्बन्धान्तरस्य सिद्धावपि द्रव्यादिना गुणादेर्द्रव्यगुणादिभिश्च जात्यादीनां समवायो न सेद्धुमर्हति गुणादिभिरधिकरणद्वारैव इन्द्रियसन्निकर्षसम्भवेनाधिकरणसम्बद्धतयैव तस्य प्रमाणसिद्धतयाऽधिकरणेन सह तस्य स्वभावतः सम्बद्धत्वादिति वाच्यमवयवैः सहावयविनां सम्बन्धतया क्लृप्तेन समवायेन गुणादिमत्त्वबुद्धेः सम्भवेन तत्र गुणादिस्वरूपे सम्बन्धत्वकल्पनायां गौरवात् ।

किं चाधिकरणेन सहासम्बद्धस्यापि यस्य सत्त्वं भवति तस्यैवाधिकरणेन सह स्वरूपातिरिक्तः सम्बन्धोऽपेक्ष्यते । यस्य चाधिकरणेन सहासम्बद्धस्य सत्त्वं न भवति तस्य स्वरूपमेव सम्बन्धो नातिरिक्तः ।

अभावो हि अधिकरणेन सह असम्बद्धो नैकक्षणमप्यवतिष्ठते, अतो अभावस्याधिकरणेन सततं सम्बद्धतया तस्य स्वरूपमेव सम्बन्ध उचितः, सम्बन्धान्तरकल्पने सम्बन्धान्तरस्य कदाचिद् अविद्यमानत्वसम्भवेऽभावस्याधिकरणसम्बद्धतासातत्यस्य हानिप्रसङ्गात्, किन्तु द्रव्यगुणादिकं न स्वाश्रयसम्बद्धमेवावतिष्ठते, आश्रयनाशान्नश्यतो द्रव्यगुणादेः क्षणकमाश्रयं विनाप्यवस्थितेः । यदि द्रव्यगुणादेरप्यधिकरणेन स्वरूपमेव सम्बन्धः स्यात्तदा अभावस्येव तस्याप्यधिकरणं विना अवस्थानं न स्यात् ।



## विषयतायाः पदार्थान्तरत्वविमर्शः

विषयताखिललोकसुधाधरा
न गणितेषु विभाति विभावरी।
रघुशशी धवलीकुरुते निशां
सहजदोषकरीं सहते नवाम् ॥ १ ॥

ज्ञानस्वरूपैव भवेद् यदा सा
ज्ञाने भ्रमत्वं सहजं समूहे।
दोषस्य नाशो न कदापि तस्य
वस्तुत्वभूतस्तत एव नव्या ॥ २ ॥

वस्तुस्वरूपे न विलक्षणा सा
बुद्धिर्विशिष्टा महनीयभावा।
तत्राप्युपायो न विभाति भव्यो
दोषस्य तस्याहरणाय क्रमः ॥ ३ ॥

दोषद्वयस्यासमभीतिदस्य
नाशाय भव्यो विभवो न भाति।
सत्तातिरिक्ता तत एव बोध्या
वस्तुत्वभूते रमणीयरम्या ॥ ४ ॥

ज्ञानस्वरूपे रघुदेवसूरि-
र्ज्ञाने भ्रमत्वं यदिदं जगाद।
भागे घटत्वे घटते विशिष्टं
सापत्तिसत्ता सहजा न भाति ॥ ५ ॥

विषयता विषयान्तरतां गता
भुवि शिरोमणिमण्डपमाश्रिता।
न सुधियां सुखदा परिकल्पिता
कुपथगा पथगापि न भासते ॥ ६ ॥

दहति तर्ककरालि चूर्णिता
मतिमतां मतिदा न विभाति सा ।
अभिनवा तरुणीव न दृष्टिगा
चलति चञ्चलताञ्चलताचला ॥ ७ ॥

भ्रमररूपे विनिवेश्य किंचिद्
दोषापनोदे न विभाति बाधा ।
ग्राह्यो न मान्यो रघुदेवसूरेः
प्राचां स पक्षो विदुषां न हेयः ॥ ८ ॥

विषयता यदि बोधधराधरा
विषयतात्वकथापि तथैव सा ।
बुधमतित्वधराधरताश्रया
विविधदोषदवाग्निरिहाखिलः ॥ ९ ॥

विषयताभवन त्रिषया गता
विषयिताभुवनं विषयिप्रभा ।
रघुकथा कृपणाऽबलतां गता
विमतपक्षविभाविभवो गतः ॥१०॥

सुरगवीविषयानुगतप्रभां
विषयतां दयितां पवतेऽधुना ।
न विषयं सदयं भरते वृथा
कपिकुले कथिता रमते यथा ॥११॥

शिरोमणिर्बुद्धिसुधासमुद्रो
न भाति भव्यो विषयत्वभिन्नम् ।
नवं पदार्थं परिकल्प्य मानी
यतो न शक्तो निजपक्षसिद्धौ ॥१२॥

विषयताविषयं परिहाय हा
विभुविभां भरते न सदानुगा ।
विषयिणं चिनुते न चरित्रपा
न नवतां धरतेऽभिनवां नवा ॥१३॥

कुत्रापि सा विषयता विषयं विहाय
नान्या मता मतिमतां मतिदैव रम्या ।
दोषाः पदं न दधते रमणीयमञ्चे
तर्काञ्चिते विषयताविषयस्वरूपे ॥१४॥

प्राचीनपक्षकमला विमला विभाति
सर्वत्र सा विषयता विषयस्वरूपा ।
कान्तिः शिरोमणिमणेर्म्रियते वराकी
पार्श्वं न तस्य सुखद विशदं प्रशस्तम् ॥१५॥

सकलदोषनिवारणकुञ्जिका
मतिमतां सुधियां महनीयता ।
विविधकल्परसायनताधरा
सृजति सृष्टिमनातुरताभरा ॥१६॥



## विषयत्वविषये दीधितिकृन्मतविमर्शः

दीधितिकृता पदार्थतत्त्वनिरूपणग्रन्थे 'एतेन ज्ञानविषयता व्याख्याता' इत्युक्त्या विषयत्वस्यापि पदार्थान्तरत्वं स्वीकृतम् : ग्रन्थोऽयं रघुदेवेन इत्थं व्याख्यातः ।

एतेन-क्लृप्तान्तर्भावासम्भवेन, व्याख्याता—अतिरिक्तत्वेन व्याख्याता, अयम्भावः— विषयताया ज्ञानस्वरूपत्वे घटपटावितिसमूहालम्बनस्य ज्ञानस्य भ्रमत्वापत्तिः, तत्र तदुभयविषयताया एकज्ञानस्वरूपत्वेन घटत्वाद्यवच्छिन्नघटत्वाद्यभाववद्वृत्तिविषयता-प्रतियोगित्वरूपभ्रमत्वस्य सत्त्वात् । विषयताया विषयस्वरूपत्वे तु घटभूतलसंयोगा-वितिसमूहालम्बनतो घटवद्भूतलमिति विशिष्टबुद्धेर्वैलक्षण्यापत्तेः ।

न च समूहालम्बनेऽधिकस्य संयोगत्वस्य भानान्न तथेति वाच्यं तथा सति घट-वद्भूतलं संयोगश्चेति ज्ञानात् तादृशसमूहालम्बनवैलक्षण्यानिर्वाहात् ।

न च विशिष्टबुद्धौ सम्बन्धसम्बन्धोऽप्यधिको भासते इति नानुपपत्तिरिति वाच्य सम्बन्धसम्बन्धमादायापि समूहालम्बनसम्भवादिति ।

एतावतेदं स्पष्टीकृतं भवति यद् विषयताया ज्ञानस्वरूपत्वस्य विषयस्वरूपत्वस्य चोक्तरीत्या दोषग्रस्ततया पदार्थान्तरत्वरूपमेव युक्तम् ।

अत्रेदं वक्तुं शक्यते यद् विषयताया ज्ञानस्वरूपत्वाभ्युपगमे दीधितिकृतः पक्षेण रघुदेवेन यदिदमुक्तं यद् विषयताया ज्ञानस्वरूपत्वे घटपटावितिज्ञानस्य घटत्वांशे भ्रमत्वापत्तिः, उक्तज्ञानस्यैकतया तदीयविषयताया अपि ज्ञानात्मकत्वेन एकतया या विषयता घटनिष्ठा सैव पटनिष्ठापि, एवं या विषयता पटत्वनिष्ठप्रकारतानिरूपिता सैव घटत्वनिष्ठप्रकारतानिरूपिताऽपि, अतः पटनिष्ठविषयतायामपि घटत्वनिष्ठप्रकारता-निरूपितत्वसत्त्वेनोक्तज्ञानस्य घटत्वनिष्ठप्रकारतानिरूपितघटत्वाभाववन्निष्ठविशेष्यता-कत्वात्, तन्न समीचीनम्, उक्तसमूहालम्बनज्ञानस्य दोषाजन्यतया भ्रमत्वस्वरूपे दोष-जन्यत्वस्य निवेशेनोक्तापत्तिवारणसम्भवात् ।

न च भ्रमत्वशरीरे दोषजन्यत्वप्रवेशेऽपि रजतत्वेन पुरोवर्त्तिशुक्तिशकलं घटपटौ चावगाहमाने घटपटौ इदं रजतं चेति समूहालम्बनज्ञाने घटादौ घटत्वाद्यंशेऽपि भ्रमत्वा-पत्तिस्तस्य पुरोवर्त्तिरजतत्वांशे भ्रमात्मकतया दोषजन्यत्वस्य घटत्वाभाववत्पटनिष्ठ-विशेष्यतानिरूपितघटत्वनिष्ठप्रकारताकत्वस्य च सत्त्वादिति वाच्यं भ्रमत्वघटके प्रकार-

त्वविशेष्यत्वयोर्निरूप्यनिरूपकभावे दोषप्रयोज्यत्वस्य निवेशेनोक्तापत्त्यभावात्, तथा हि तत्प्रकारकभ्रमत्वं नाम—दोषप्रयोज्यतन्निष्ठप्रकारतानिरूप्यत्ववत् तदभाववन्निष्ठविशेष्यताकज्ञानत्वम्, उक्तज्ञाने पटनिष्ठविशेष्यतावृत्तौ घटत्वनिष्ठप्रकारतानिरूप्यत्वे न दोषप्रयोज्यत्वं किन्तु घटपटनिष्ठविषयतयोरभेदप्रयोज्यत्वमतो न तत्र घटत्वाद्यंशे भ्रमत्वापत्तिः।

किञ्च तदभाववन्निष्ठविशेष्यतायां तदभाववन्निरूपितवृत्तित्वावच्छेदेन तन्निष्ठप्रकारतानिरूपितत्व निवेश्यापि उक्तापत्तिर्वारयितुं सुशका। उक्तज्ञाने घटत्वनिष्ठप्रकारतानिरूपितत्वस्योक्तज्ञानीयविशेष्यतायां घटवृत्तित्वावच्छेदेनैवाभ्युपगमेन घटत्वाभाववन्निरूपितवृत्तित्वावच्छेदेन घटत्वनिष्ठप्रकारतानिरूपितत्वस्यासत्त्वात्।

न च विषयताया ज्ञानस्वरूपत्वे घटादेर्विषयताश्रयत्वेन ज्ञानाश्रयत्वस्याप्यनिवार्यतया घटो विषयतावानिति प्रतितिवद् घटो ज्ञानवानिति प्रतीतिरपि दुर्निवारेति वाच्यं घटे विषयतात्वेनैव ज्ञानस्याभ्युपगमाद् ज्ञानवानिति प्रतीतेश्च ज्ञानत्वेन ज्ञानाधिकरणतानियम्यत्वात्।

न चाधिकरणताया आधेयनिरूप्यतया आधेयभेदेनैव भिन्नत्वस्याभ्युपगन्तव्यत्वेन ज्ञानविषयत्वयोरैक्यपक्षे ज्ञाननिरूपिताया विषयतानिरूपितायाश्च अधिकरणताया भेदासम्भवेन विषयताधिकरणे घटे ज्ञानाधिकरणत्वस्यापि सत्तया घटो विषयतावानितिप्रतीतिवद् घटो ज्ञानवानिति प्रतीत्यापत्तिर्दुष्परिहरैवेति वाच्यम् अधिकरणताया आधेयताभेदेन, आधेयतायाश्च अवच्छेदकीभूतस्य धर्मस्य सम्बन्धस्य च भेदेन भिन्नत्वात्। अन्यथा शुद्धविशिष्टयोरैक्यपक्षे शुद्धसत्ताया विशिष्टसत्तायाश्चाधिकरणतयोरभिन्नतया गुणः सत्तावानितिप्रतीतिवद् गुणे गुणकर्मान्यत्वविशिष्टसत्तावानितिप्रतीतिः, एवं कालः समवायेन रूपवानितिप्रतीतिश्चापरिहार्या स्यात्, तथा च घटो ज्ञानवानितिप्रतीतिर्नापादयितुं शक्या ज्ञानत्वावच्छिन्नाधेयतायां स्वरूपसम्बन्धावच्छिन्नत्वस्य स्वरूपसम्बन्धावच्छिन्नायां विषयतानिष्ठाधेयतायां ज्ञानत्वावच्छिन्नत्वस्य चाभावात्।

न च ज्ञानविषयतयोरैक्यपक्षे ज्ञानत्वविषयतात्वयोरपि ऐक्यमभ्युपेयम्, अन्यथा विषयतात्वस्य ज्ञानत्वभिन्नत्वे क्लृप्तपदार्थेष्वनन्तर्भूतत्वे च विषयतात्वस्य पदार्थान्तररूपस्याभ्युपगमापत्तिः स्याद्, ऐक्ये च तयोरुक्तरीत्या ज्ञानाधिकरणत्वविषयत्वाधिकरणत्वयोर्भेदस्य वक्तुमशक्यतया घटो विषयतावानितिप्रतीतिवद् घटो ज्ञानवानितिप्रतीत्यापत्तेर्निरासो दुष्कर इति वाच्यं ज्ञानत्वविषयतात्वयोरैक्ये उक्तप्रतीत्योरपि अभिन्नतया उक्तापत्तेरिष्टत्वसम्भवात्।

वस्तुतो ज्ञानविषयतयोरैक्यपक्षे ज्ञानत्वविषयतात्वयोर्नैक्यमपि तु भेद एव।

न चैवं विषयतात्वस्य पदार्थान्तरत्वाभ्युपगमे विषयताया एवातिरिक्तत्वपक्ष उचित इति वाच्यं विषयताया अतिरिक्तत्वे विषयताविषयतात्वयोरुभयोरतिरिक्तयोः

स्वीकारे गौरवात् तदपेक्षया विषयताया ज्ञानस्वरूपत्वमभ्युपगम्य विषयतात्वमात्रस्यातिरिक्तत्वकल्पनायां लाघवात् ।

वस्तुतो विषयतात्वमपि न पदार्थान्तरं किन्तु सामान्यस्याखण्डोपाधिरूपे विभागे प्रविष्टतया सामान्यान्तर्गतमेव ।

नन्वेवमपि विषयताया एवाखण्डोपाधित्वमभ्युपगम्यतामिति चेन्न विषयताया अखण्डत्वस्यानुभवविरुद्धत्वात् । क्लृप्तज्ञानादिरूपत्वसम्भवेनाखण्डोपाध्यात्मनापि अक्लृप्तव्यक्त्यन्तरस्वरूपायास्तस्या अभ्युपगमे गौरवाच्च ।

विषयताया विषयस्वरूपत्वपक्षे दीधितिकृतः पक्षमुपपादयता रघुदेवेन यद् दूषणं दर्शितं तदपि न समीचीनं तद्वारणप्रकारस्यापि सुवचत्वात्, तथा हि—विषताया विषयस्वरूपत्वे प्रदर्शितो दोषोऽयमेव यद् घटवद्भूतलं संयोगश्चेति ज्ञानस्य घटवद्भूतलमितिज्ञानतोऽवैलक्षण्यापत्तिरुभयोरपि ज्ञानयोर्भासमानानां विषयाणां समानत्वात् । विषयभेदं विना ज्ञानभेदस्य दुरुपपादत्वात् ।

परं दूषणमिदं समर्थयितुं न शक्यं घटवद्भूतलमितिज्ञाने संयोगत्वप्रकारकत्वस्याभावात्, तत्र संसर्गघटकतयैव संयोगत्वस्य भानात्, संसर्गघटके च प्रकारताया अनभ्युपगमात्, अन्यथा संसर्गघटकेऽपि प्रकारताया अभ्युपगमे तत्प्रकारकानुभवं प्रति तद्विषयकज्ञानस्य कारणत्वेन संयोगत्वाद्यवच्छिन्नोपस्थितिं विना संयोगसंसर्गकज्ञानं न स्यात् ।

न च विषयतामात्रस्यैक्येन संयोगत्वावच्छिन्नसंसर्गताके घटवद्भूतलमिति ज्ञानेऽपि संयोगत्वप्रकारकत्वस्य सम्भवेन उक्तज्ञानयोरवैलक्षण्यापत्तिर्दुर्वारैवेति वाच्यम्, उक्तरीत्या संयोगसंसर्गकज्ञानस्य संयोगत्वादिप्रकारकत्वोपपादने संयोगासंसर्गके घटभूतलसंयोगा इतिज्ञाने संयोगत्वावच्छिन्नससर्गतानिरूपितघटत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वावच्छिन्नविशेष्यताकत्वस्यापि उपपादनसम्भवेन उक्तज्ञानस्यापि घटवद्भूतलमितिज्ञानस्येव भूतले घटाभावबुद्धिं प्रति प्रतिबन्धकत्वापत्तेः ।

न चैतद्दोषभयादेव विषयताया विषयस्वरूपत्वपक्षः परित्याज्य इति वाच्यं विषयताया विषयस्वरूपत्वे समानाधिकरणानां प्रकारत्वविशेष्यत्वादिरूपेण भिन्नानां भिन्नविषयतानां विषयतात्मकतया अभेदेऽपि प्रकारतात्वविशेष्यतात्वादिभेदेन भिन्नत्वस्याभ्युपगमेन दोषाभावात्, तथा हि—घटभूतलसंयोगा इतिज्ञाने या भूतलनिष्ठा विशेष्यता सा न घटनिष्ठप्रकारतया संयोगनिष्ठसंसर्गतया वा निरूपिता, तत्र घटस्य प्रकारविधया संयोगस्य च संसर्गविधया अभानात्, अतो भूतले घटाभावबुद्धिप्रतिबन्धकतावच्छेदकस्य घटत्वावच्छिन्नप्रकारतानिरूपितसंयोगत्वावच्छिन्नसंसर्गताकभूतलत्वावच्छिन्नविशेष्यताकनिश्चयत्वस्य घटभूतलसंयोगा इतिज्ञानेऽसत्त्वेन न तस्य भूतले घटाभावबुद्धिं प्रति प्रतिबन्धकत्वापत्तिः ।

———

## ईश्वरस्य निष्परिमाणत्वविमर्शः

ईशस्य नेष्टं परिमाणवत्त्वं
धृष्टो रघुर्वक्ति विचित्रधैर्यः ।
दोषस्य सत्ता सबला न कापि
पक्षे तदीये सहजापि भाति ॥ १ ॥

एतत्प्रसङ्गे रघुदेवसूरि-
र्जीवे महत्त्वं विशदं च वक्ति ।
प्रत्यक्षसिद्धं न च तत्र शङ्का
ब्रूते न शेते प्रबलो विपक्षः ॥ २ ॥

जीवस्य तच्चेत्परिमाणवत्त्वं
प्रत्यक्षसिद्धं विदुषाममान्यम् ।
एव समानं परिमाणवत्त्वं
कुत्रापि नाङ्गीकरणीयमास्ते ॥ ३ ॥

ईशो न निष्परिमितिः प्रमितिर्विचित्रा
प्राचां विभाति सुधियां महतां वरिष्ठा ।
नो चेत्तदा विभुकथापि विभोर्विनष्टा
नेष्टा कदापि कृतिनां महती विनष्टिः ॥ ४ ॥

ईशस्य सत्त्वं परिमाणशून्यं
मान्यं तदा तत्र विपत्तिरेखा ।
इष्टा तदीया विभुता प्रसिद्धा
लुप्ता न रक्ष्या प्रबले विपक्षे ॥ ५ ॥

विश्वेशनिष्परिमितिं ब्रुवते बुधा न
चिन्ता तदा मतिमतामपरा प्रचण्डा ।
आगत्य भूरिकलहा कलुषं करोति
विश्वेशविश्वधवलां विभुतां धुनोति ॥ ६ ॥

तस्याः प्रयोक्ता महितो न भाति
द्रव्यत्वमेवाभिमतं यदीति ।
उक्तं विभुत्वं सहजं प्रसक्तं
द्रव्येषु सर्वत्र तदा समानम् ॥ ७ ॥

नेष्टं च सर्वं विभुतामुपेतं
द्रव्यं स्वतन्त्रं सुधियां कदापि ।
मान्या ततो नैव विगीतरीति-
र्मार्गो न भव्यो विहतार्थनीतिः ॥ ८ ॥

भव्या प्रयोजकसुधा महिता च नान्या
मान्या कलङ्करहिता कमलेव साध्वी ।
विश्वेशभव्यविभुता विहता इदानीं
रक्ष्या कथं मतिमतां प्रतिभा प्रशस्ता ॥ ९ ॥

शस्ता च निष्परिमितित्वसुधाः योक्त्री
मान्यास्तदा गुणगणा विभवः कथन्न ।
तेषां च निष्परिमितित्वकथा प्रसिद्धा
लोप्या न सा विभुसुधा कमनीयगात्रा ॥१०॥

प्रयोजकं नैकमिह प्रसिद्धं
तदा कथं तन्मिलितं समस्ति ।
विभुत्वमेवं विहत तदीयं
न सेद्धुमहं रघुनाथदृष्ट्या ॥११॥

यदि च कारणता गुरुताधरा
सृजति तस्य विभुत्वविभाकरम् ।
वरलघुत्वकथा विभुताधरा
परिमितित्वसुधा रमते तदा ॥१२॥

ईशस्य वेद्यपरिमाणकथाप्रमाणं
भव्यं न भाति धवलं नवलं विचित्रम् ।
एवं स्थितौ मतिमतां विहता कथा सा
मान्या न कुब्जकुलटेव कुलं जिहाना ॥१३॥

ईशे विभुत्वं मनुतां न मानी
भव्यप्रमाणं यदि तत्र नास्ति ।
सिद्धे प्रमाणे सवलं विभुत्वं
मान्यं कथ नाखिललोककर्त्तुः ॥१४॥

सृष्टेर्यदा खण्डविनाशसत्ता
सृष्ट्यन्तरं रम्यधरं ततश्च ।
भव्ये विभौ भाति महामहेशे
पन्थाः प्रशस्तो न विभाति भिन्नः ॥१५॥

त्र्यगुकवस्तुषु कर्म तमन्तरा
न परमागुषु कर्म विभुं विना ।
नवलसृष्टिरमा रमते कथं
प्रभुविभुं रमणं शरणं विना ॥१६॥

ईशस्य सैषा विभुता न हेया
सृष्टिं सुधां य। धरते धरायाः ।
यस्याः प्रतापो विशदीकरोति
लावण्यलेखां रमणीयसृष्टेः ॥१७॥

विभौ महेशे सुखदे रमेशे
विभाति भूतिः सकलेष्टदात्री ।
तमन्तरा भाति न भव्यभूती-
रमाऽभिरामा रमणीयगात्रा ॥१८॥

अनन्तलावण्यसुधां दधाना
तदैव सृष्टिर्धरते स्वसत्ताम् ।
अनन्तरत्नप्रभवो नगोऽपि
हिमालयो राजति रम्यभूतिः ॥१९॥

नक्षत्रचित्रं रमते तदैव
विश्वेशभूतिर्विमलेव गङ्गा ।
लोकानजस्रं पवते पवित्रा
संराजते भारतभव्यभूमौ ॥२०॥

सरित्समुद्रा विविधा नदाश्च
नगाः खगा भान्ति बुधाऽबुधाश्च ।
निशापतिर्भव्यदिवापतिश्च
रमापतिर्भव्यशिवापतिश्च ॥२१॥

विद्यापतिः सृष्टिपतिर्विधाता
दिवस्पतिः शब्दपतिर्गिरीशः ।
विभापतिर्वित्तपत्तिः सुरेशो
विभौ महेशे परिभान्ति सर्वे ॥२२॥

तमद्भुतं भव्यविशालनेत्रं
विभुं महेशं महनीयभूतिम् ।
सुधासमुद्रं सुधियां सहायं
विहाय सिद्धिं लभते नरो न ॥२३॥

अजमनन्तमनादिविभुं प्रभुं
सहजसंसृतिशं धरणीधरम् ।
कमलकोमलकान्तरमाधरं
भजत तत्त्वसमूहकलाधरम् ॥२४॥



## ईश्वरस्य निष्परिमाणत्वे दीधितिकृन्मतविमर्शः

दीधितिकृता ईश्वरस्य परिमाणवत्त्वे मानाभाव इत्युक्त्या ईश्वरस्य निष्परिमाणत्वमुक्तम्, रघुदेवेन च दीधितिकृतो मतमेतदुपपादयता इत्थमुक्तम्—यज्जीवात्मनो महत्त्वं प्रत्यक्षसिद्धं तदनभ्युपगमे तदपि तद्गतिकमेव ।

अत्रेदमालोच्यते—यद् ईश्वरस्य निष्परिमाणत्वं न सम्भवं यतो हि यदि ईश्वरो निष्परिमाणः स्याद् गुणादेरिव संयोगादिमत्त्वासम्भवेन तस्य युगपत्सर्वमूर्त्तद्रव्यसंयोगित्वलक्षणं विभुत्वं न स्यात् ।

न च संयोगादेर्गुणादिराहित्यं न निष्परिमाणत्वप्रयुक्तं किन्तु अद्रव्यत्वप्रयुक्तं संयोगं प्रति द्रव्यत्वेन कारणत्वात् कारणाभावस्य कार्याभावनियामकत्वात्, ईश्वरश्च द्रव्यमतस्तत्र संयोगोत्पादो न दुरुपपादः ।

न च संयोगोत्पत्तावपि उक्तसंयोगित्वलक्षणं विभुत्वं न स्यात् संयोगिनो द्रव्यस्य परममहत्परिमाणशून्यस्य उक्तसंयोगित्वलक्षणविभुत्वाभावात् ।

अयमाशयः—ईश्वरो यदि निष्परिमाणद्रव्यं भवेत्तर्हि तस्योक्तविभुत्वं द्रव्यत्वप्रयुक्तमेव मन्तव्यं प्रयोजकान्तरस्याभावात् तथा चेश्वरस्येव द्रव्यमात्रस्योक्तविभुत्वं स्याद्, यदि च निष्परिमाणत्वप्रयुक्तं तद्विभुत्वमङ्गीक्रियेत तदा गुणादेरपि निष्परिमाणतया उक्तविभुत्वापत्तिः स्यात् । निष्परिमाणद्रव्यत्वप्रयुक्तं तदिति चेद् द्रव्यत्वनिष्परिमाणत्वयोः प्रत्येकं तदप्रयोजकत्वे उभयोर्मिलितयोस्तत्प्रयोजकत्वासम्भवात् ।

किं चोक्तविभुत्वं प्रति द्रव्यत्वनिष्परिमाणत्वयोरुभयोः प्रयोजकत्वाभ्युपगमे एकविशिष्टापरत्वेनैव तत्प्रयोजकत्वं वाच्यं तथा च विशेष्यविशेषणभावे विनिगमनाविरहेण निष्परिमाणत्वविशिष्टद्रव्यत्वत्वेन द्रव्यत्वविशिष्टनिष्परिमाणत्वत्वेन च प्रयोजकत्वकल्पनया गुरुरूपेण प्रयोजकद्वयमापद्येत । एवं च निष्परिमाणत्वस्य यथाश्रुतस्य प्रयोजकघटकत्वे विशेषाभावोभयाभावादिकमादाय परिमाणाभावलक्षणस्य निष्परिमाणत्वस्य मूर्त्तद्रव्येष्वपि सत्त्वेन तत्रापि विभुत्वापत्तिः स्यादतः परिमाणत्वेतरधर्मानवच्छिन्नत्वविशिष्टपरिमाणत्वावच्छिन्नत्वे सति समवायसम्बन्धेतरसम्बन्धानवच्छिन्नत्वविशिष्टसमवायसम्बन्धावच्छिन्नपरिमाणनिष्ठप्रतियोगिताकाभावत्वेनैव तस्य प्रयोजकत्वं वाच्यम्, एवं सामान्यरूपेण विशेषाभावोपगमे परिमाणत्वेन तत्परिमाणाभावमादाय

विशेषरूपेण संसर्गताऽभ्युगमे च तत्तद्द्रव्यानुयोगिकसमवायेन तत्तत्परिमाणप्रतियोगिकसमवायेन वा परिमाणाभावमादाय मूर्त्तद्रव्येषु तत्तद्दोषतादवस्थ्यं स्यादतः परिमाणत्वगतैकत्ववृत्त्यनुयोगिताकत्वे सति समवायत्वगतैकत्ववृत्त्यनुयोगिताकाभावत्वेन निष्परिमाणत्वस्य तत्प्रयोजकत्वं वाच्यम्। तत्राद्यवृत्तित्वम्—स्वनिरूपितप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व - स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसम्बन्धेन।

द्वितीयवृत्तित्वम्—स्वावच्छिन्नानुयोगिताकपर्याप्तीयप्रतियोगितावत्सम्बन्धानवच्छिन्नावच्छेदकताकप्रतियोगितानिरूपितत्वसम्बन्धेन।

एवं चातिगुरुतररूपेण निष्परिमाणत्वस्य द्रव्यत्वस्य च उक्तविभुत्वप्रयोजकत्वकल्पनापेक्षया ईश्वरे एकं परममहत्परिमाणं कल्पयित्वा तस्यैव उक्तविभुत्वप्रयोजकत्वकल्पने लाघवमत उक्तविभुत्वान्यथानुपपत्त्या ईश्वरस्य परममहत्परिमाणवत्त्वसिद्धेरावश्यकतया तस्य निष्परिमाणत्वाभ्युपगमोऽयुक्तः।

न चेश्वरस्योक्तविभुत्वमेवाप्रामाणिकमतस्तदन्यथानुपपत्त्या तत्र परममहत्परिमाणकल्पनं निर्युक्तिकमिति वाच्यम्, ईश्वरस्य विभुत्वानभ्युपगमे खण्डप्रलयोत्तरं नवीनसृष्ट्यारम्भानुगुणानां कर्मणां परस्परमतितरां विप्रकृष्टेषु परमाणुषु त्र्यणुकेषु वा उदयो न स्यादिति।

अयं घटो न वेत्यादिसंशयः स्वरूपतो घटत्वं घटभेदं चावगाहते अतस्तं प्रति स्वरूपतो घटत्वप्रकारकनिश्चयः प्रतिबन्धको भवितुमर्हति प्रमेयत्वसामान्यप्रत्यासत्तिर्हि प्रमेयत्वेनैव घटत्वादिकं निश्चाययति न तु स्वरूपतोऽतः प्रमेयत्वेन घटत्वादिसकलविशेषज्ञानसत्त्वेऽपि विरोधिनिश्चयस्यानुदयेन न तादृशसंशयानुपपत्तिः।



# पञ्चमोऽध्यायः

## सन्निकर्षविषयको विमर्शः

सम्बद्धमेव सकलं पुरुषः प्रवेत्ति
नेत्रेण रूपमहितं भुवि वर्तमानम् ।
सम्बन्धभव्यविभवं परिहाय कस्य
प्रत्यक्षजो मतिमतो मनुजस्य बोधः ॥ १ ॥

के लौकिकाः कतिपये परिभान्ति भव्याः
केऽलौकिका मतिकरा विहरन्ति रम्याः ।
येषां प्रसादमधुरं समवाप्य कम्रं
लोका व्रजन्ति विमलं विविधप्रबोधम् ॥ २ ॥

संसर्गसौविध्यरसां समेत्य
लोकाः स्वकीयं दधते प्रबोधम् ।
जानन्ति तत्त्वं निखिलं च सृष्टे-
र्यामन्तरा बोधधरा न भाति ॥ ३ ॥

के लौकिका बोधकुलं सृजन्तः
षट्त्वं दधानाः सुलभा भवन्ति ।
तन्त्रेषु योगा नितरां मिलन्ति
यानन्तरा बोधविधा न कापि ॥ ४ ॥

संसर्गकान्तिकमलां विमलां विहाय
बोधा न केऽपि सहजाः परिभान्ति भूमौ ।
तस्याः सुयोगममलं परिभाव्य विज्ञा
राजन्ति बोधकुशला बुधबोधमाप्ताः ॥ ५ ॥

संयोगयोगधवलो धरते धरित्रीं
द्रव्यप्रमां जनयते कमनीयकीर्त्तिः ।
नेत्रस्य कम्रसहयोगवरं विधाय
साक्षात्कृतौ सुखयते मनुजं नितान्तम् ॥ ६ ॥

गृह्णाति योगोऽपरतामुपेतो
जातिं गुणं कर्मकुलं द्वितीयः।
रूपादिवृत्तिं विमलां च जातिं
संगृह्य शोभां धरते तृतीयः ॥ ७ ॥

शब्दस्य कर्णस्थितिकस्य बोधं
सम्पाद्य योगो रमते तुरीयः।
शब्दत्वकत्वादिसुधासमुद्रं
गृह्णाति योगोऽपरपञ्चमाख्यः ॥ ८ ॥

गृह्णाति षष्ठः समवाययोगं
कुत्राप्यभावं धरते स योगः।
नानात्वमाप्तः परिभाति रम्य-
स्तन्त्रे प्रसिद्धो रमणीयरूपः ॥ ९ ॥

ते लौकिका लोककुलं पुनाना
राजन्ति रम्या रमणीयतन्त्रे।
लक्ष्याणि तेषां भणितानि नाना
भव्यानि लोके परिभान्ति तानि ॥१०॥

केऽलौकिकास्ते नवनीततन्त्रे
सम्पाद्य बोधं विहरन्ति योगाः।
सामान्यसंज्ञामपि बोधसंज्ञां
लोकेषु ते योगजतां दधाना ॥११॥

सामान्ययोगं मनुते रघुर्न
बाधा न कुत्रापि तमन्तरापि।
त्याज्यः स योगोऽभिनवो न मान्यो
भारो न सोढव्य इति ब्रवीति ॥१२॥

सर्वत्र धूमे निखिलेऽपि वह्नौ
व्याप्तिग्रहार्थं प्रथमः प्रसिद्धः।
योगो द्वितीयो भ्रमबोधनाय
योगं तृतीयं धरते च योगी ॥१३॥

सामान्यलक्षणविधां विशदां प्रशस्तां
मानी रघुर्न मनुते सनयां प्रियां ताम् ।
प्राचां धियां मतिमतां कुरुतेऽवहेलां
हेलां नवां वितनुते चिनुते न चिन्त्याम् ॥१४॥

पाकालयेऽनलजधूमतनीयहेत्वोः
साहित्यदर्शनजभव्यमुपेत्य योगम् ।
सामान्यलक्षणजबुद्धिविशेषमान्य
धत्तेऽनुमां मतिमतां महनीयबुद्धिम् ॥१५॥

सामान्ययोगविरहे विरहोऽनुमायाः
शैलोऽग्निमानितिमतेः प्रबलानुभूतेः ।
मान्यः शिरोमणिमणिर्न विभात्यभव्यो
भव्यो महान् मतिमतां न कदापि हेयः ॥१६॥

व्यक्त्यन्तरस्य सकलस्य गवादिकस्य
बोधोऽपि दुर्लभदशामधिगत्य रौति ।
सामान्ययोगविरहे विलयो मदीयो
नास्त्येव संशयकथा विषमा विशीर्णा ॥१७॥

हेत्वन्तर मतिकरं रघुनाथसूरि-
र्ब्रूते प्रकल्प्य कलुषं सकलं निहत्य ।
सामान्यलक्षणकथा गुरुतागरेण
ध्वस्तेति मान्यमतयः सुधियो विदन्तु । १८॥

भव्याननन्तविभवान् परिभाव्य भावान्
सामान्ययोगधवलानखिलान् प्रशस्तान् ।
प्राचां मतिर्मतिमतां धवलं धिनोति
सामान्यकम्ररसिकं वृणुते वरिष्ठम् ॥१९॥

दोषा रघूक्तगरदा भयदा न भान्ति
लुप्ताः सदाऽशिवकराः प्रतिभापयोधौ ।
दोषौघपापहरया शिवया सुयुक्त्या
सिद्धाः समस्तमतयो गतयोऽपरा न ॥२०॥

संशीतिमान्यमहिमा चिनुते च चिन्त्यां
तामन्तरा न लभते स्वकुलं कुलीनम् ।
नातो रघूक्तविमतिः सबलापि मान्या
हेयाबलेव कुलटा विपरीतवृत्ता ॥२१॥

विविधबोधसुधाकरताधरा
सकलदोषहरा हरते मलम् ।
मतिमतां सुधियां नयदृष्टिदा
जयतु सा शशिनः सहजा कला ॥२२॥

सामान्यलक्षणकला कमलेव सूते
बोधाननन्तविभवान् विदुषामजस्रम् ।
दारिद्र्यदोषनिवहं विनिहन्त्यभव्यं
हेया कथं कृतिमतां महनीयनीतिः ॥२२॥

शून्यज्ञप्तौ कमलधवला भावभूतेरपेक्षा
ग्राह्या मान्या कुलिशकठिना भद्रयोगं विना ना ।
नीतिं नव्यां विशदविशदां चिन्तयित्वा स चेता
सामान्याभावनयमहिमा योगभव्यं चिनोति ॥२३॥

नाभावबुद्धिरमला कमला कुलीना
भाव विना सहजतापहरा प्रसिद्धा ।
सामान्ययोगविरहे न विभान्ति भावाः
सामान्ययोगकमल तत एव कल्प्यम् ॥२४॥

मिश्रस्य पक्षधरधन्यसुधाकरस्य
नाङ्गीकरोति मतमान्यमिदं बुधेन्द्रः ।
सामान्ययोगविभवो न कदापि मान्यो
मानी ब्रवीति सहसा कुरुते न भीतिम् ॥२५॥

नाभावबुद्धिरमला प्रतियोगिबुद्धिं
संगृह्य बोधममलं तनुते विशिष्टम् ।
तद्बुद्ध्यभावभुवनेऽपि विभाति बुद्धिः
सामान्ययोगविरहः प्रतिबन्धको न ॥२६॥

अभाववुद्धौ प्रतियोगिबुद्धि-
र्न हेतुं मनुते मनीषी।
अतो न योगोऽभिनवः प्रशस्तो
रघूक्तिरेषा तनुते प्रकाशम् ॥२७॥

मिश्रस्य पक्षं विमलं निरस्य
ब्रूते रघुः खण्डनखण्डभक्तः।
सामान्ययोगोऽभिनवः प्रहेय-
स्तत्साधिका भाति न भव्यभूतिः ॥२८॥

अभाववुद्धौ प्रतियोगिबुद्धि-
र्न कारणं चेद् घटबोधशून्ये।
अभाववुद्धेरुदयः कथन्न
समाधिरस्यापि विचिन्तनीयः ॥२९॥

विशिष्टवैशिष्ट्यविधां दधाना
मतिर्यथा भाति तथैव सापि।
अभाववुद्धेरुदये न बाधा
मता न शङ्कोदयतापि तत्र ॥३०॥

अभावसाक्षात्कृतिरत्र तर्के
स्वतन्त्ररूपं प्रतियोगिबोधम्।
सहायकं न धरते तथापि
घटाद्यभावस्य कथा विचिन्त्या ॥३१॥

तद्भानसिद्ध्यर्थमिह प्रबोध्यो
योगो घटादेः करणेन सार्धम्।
सामान्ययोगं परिहाय नान्यः
पन्थास्तदर्थं बुधबोधगम्यः ॥३२॥

अभावभाने सकलोऽपि योगी
योगं न धत्ते परमो वियोगी।
अपेक्षते साभिनवापि तत्र
नेति प्रवक्तीति महामनीषी ॥३३॥

यावद्घटो न.स्ति पवित्रभूमौ
बुद्धिर्विशिष्टा परिभाति रम्या ।
तत्सिद्धये साभिनवैव बोध्या
तामन्तरा नास्ति विधा तदीया ।।३४।

सामान्ययोगं परिहाय मानी
विद्याभिमानी रमते रसायाम् ।
मार्गाच्च्युतिस्तस्य ददाति सत्तां
हेया न मान्या विमतिर्बुधस्य ॥३५॥

सुमतिपक्षधरस्य सुकल्पना
सकललोककलाधरताधरा ।
विहरतां हरतां सुधिया मलं
विविधभासुरभूसुरमण्डिता ॥३६॥

सामान्ययोगो वितथो न तस्य
मिश्रस्य सिद्धस्य सुधाकरस्य ।
शास्त्राविरुद्धस्य मतस्य तस्य
बाभाति भूतिः प्रतिभाधनस्य ॥३७॥

अभावबुद्धौ प्रतियोगिबुद्धे-
र्हेतुत्वमत्र प्रबलं विरौति ।
तमस्तदा तत्प्रतियोग्यभावे
प्रत्यक्षगम्यं न भवेत्तदानीम् ॥३८॥

सामान्ययोगस्तत एव कल्प्यः
प्राचां मती रम्यविधा विभाति ।
योगेन तेनैव तमःप्रतीतिः
प्रत्यक्षरूपा प्रतिभाति भव्या ॥३९॥

धीरो रघुः स्वीकुरुते न भव्यं
सामान्ययोगं विदुषां प्रकल्प्यम् ।
बाधा सतर्का सबला न कापि
ब्रूते मनीषी विपरीततर्कः ॥४०॥

तेजोविशेषस्य विभूत्यभावो
नान्यस्तमः कोऽपि नवः पदार्थः।
एवं च सामान्यकथा न कापि
सम्बन्धरूपा कमनीयकक्षा ॥४१॥

रघूक्तिरेषा दयनीयभावा
न भाति भव्याऽभिनवा विभूतिः।
सामान्ययोगं परिहाय भूतिं
नान्या न रम्या ग्रहणाय तेषाम् ॥४२॥

तेजोविशेषस्य समग्रराशे-
र्बोधाय नालं रघुनाथदृष्टिः।
प्राचां च दृष्टिः कमनीयक्रमा
ग्राह्या न हेया रमणीयतर्का ॥४३॥

अभिनवा तरुणी कुलपांसुला
मनुजतापविवर्धकचञ्चला।
न हरते सुधियां सधियां व्यथां
रघुकथा तनुतां तनुते वृथा ॥४४॥

बुधशिरोमणिमञ्जुलमञ्चपा
कुलिशतर्ककरालकपर्दिका।
कथयते कुशला कुलजाकुला
न दधतां सुधियां नवयुक्तिकाम् ॥ ४५ ॥

नाभाति भव्यविभवापि तदीयदृष्टि-
र्धार्ष्ट्यं रघोर्मतिमतो विमतं न भाति।
दोषाधिका दहति बोधततिं जिहाना
प्राचां विचाररमणं शरणं न याति ॥४६॥

निशि विभावय कान्तनिशाकरं
क्षपयते क्षपितां क्षपणां क्षपाम्।
व्यथयते व्यथितां व्यथनां व्यथां
शशधरोऽधिककष्टकरो रघुः ॥४७॥

शास्त्रीयसूर्यनिकरस्तमसां निहन्ता
बोधप्रकाशममलं निखिलं तनोति ।
सामान्ययोगविमलं विनिवेश्य मन्त्रं
तन्त्रं स्वतन्त्ररसिकं महितं चकार ॥४८॥

कुशलता सुधियां सधियां कला
कलयते कुलकान्तकरीं कलाम् ।
न दधते सहते न विभावरीं
निखिललोकललामविभाकरी ॥४९॥

तमो न भावो विहरत्यभावो
नेत्रेण वेद्यः परिभाति भव्यः ।
प्रत्यक्षता तस्य न भाति भूतिः
सामान्ययोगं परिहाय भव्यम् ॥५०॥

न तेजसः कस्यचनापि सत्ता
विभाति यत्रैव तमोऽस्ति तत्र ।
तमोऽतिरिक्तोऽभिनवः पदार्थो
न विद्यते भावविधां दधानः ॥५१॥

एवं स्थितौ भाति न तस्य सत्ता
सामान्ययोगं परिहाय कम्रम् ।
ग्राह्यस्ततः साखिललोकमान्यः
सामान्ययोगो न कदापि हेयः ॥५२॥

प्रत्यक्षताया अनुरोधभूत्या
सामान्ययोगः परिकल्पनीयः ।
तच्छून्यतायां तमसः प्रतीतिः
कल्प्या न केनापि विभाकरेण ॥५३॥

उक्तं स्वरूपं तमसः प्रसिद्धं
दृष्टी रघोर्ना मनुते सतर्का ।
तेजोविशेषस्य विभाविहीने
तद्भाति भव्यं तमसः स्वरूपम् ॥५४॥

सामान्ययोगस्य न क्वापि चर्चा
बोधाय भव्या तमसोऽभिनव्या ।
तच्छून्यतायां तमसः प्रतीतौ
कस्यापि रोधो न विभाति भव्यः ॥५५॥

प्राचीनपक्षो गुरुतामुपैति
पक्षे मदीये न विभात्यधन्या ।
सामान्ययोगो महितो न मान्यो
बोधाय भव्यस्तमसो विभूतेः ॥५६॥

युक्तिः सतर्कापि रघोर्न भाति
रम्यैव दृष्टी रमते बुधानाम् ।
सामान्ययोगो न विहन्तुमर्हो
ग्राह्यः स योगः सुधियां विभूतेः ॥५७॥

नासन्निकृष्टस्य विभाति रम्यं
प्रत्यक्षबोधं धवलं धरण्याम् ।
धीमन्नभावप्रतियोगितत्त्वं
तेजो न यावल्लभते स्वसत्ताम् ॥५८॥

तावन्न भव्या तमसः प्रतीतिः
प्रत्यक्षभूतापि परोक्षभूता ।
सामान्ययोगस्तत एव सिद्धो
भव्येषु भव्यो रमणीयदृष्टेः ।५९॥

अभावनाम्ना प्रथितस्य कस्याऽ-
प्यनादिसान्तस्य विभाधरस्य ।
समग्रसम्बन्धिपदार्थबोधं
विना न जायेत सुधाप्रतीतिः ॥६०॥

सामान्यबोधं न विना प्रतीतिः
सम्बन्धिनां तत्र न कोऽपि पन्थाः ।
मान्यः स योगस्तत एव कम्रो
हेयो न योगो विमलः कदापि ॥६१॥

अभावसत्ता धरते न कान्ति
लोके न सिद्धः सुधियां मतो न ।
अभावभूतेश्च विशिष्टकीर्त्ते-
राज्यं रराजेति रघूक्तिरेषा ॥६२॥

प्रत्यक्षतत्त्वं विषयो न तस्य
तत्त्वं परोक्षमवगाहमानः ।
सामान्ययोगं सबलं न याति
कार्या मुधा तत्र विकल्पना न ॥६३॥

अभावस्य सत्त्वं भणितस्य नास्ति
रघूक्तिरेषा सहसा ब्रवीति ।
ततश्च योगस्य नवस्य कान्तिः
कथं वराकी समुदेति तत्र ॥६४॥

उत्पत्तिभूतिः प्रबला प्रसक्ता
तस्या पुनः कारणकूटसत्त्वे ।
नास्त्येव चेद् गीतकथाप्रभावो
वार्या विपत्ती रमणीयरेखा ॥६५॥

उत्पन्नकार्यं प्रतिबन्धकं चेद्
दोषापनोदे न विभाति बाधा ।
उत्पन्नकार्यस्य पुनः प्रसक्ति-
र्नैवेति पन्था रघुणोपदिष्टः ॥६६॥

प्रत्यक्षता नास्ति न भात्यभावे
बुद्धे रघोर्दुबलता विभाति ।
सर्वज्ञताशून्यजने न भाति
सर्वज्ञकार्यं प्रथितं दुरूहम् ॥६७॥

एकस्य कस्यापि यदीहबुद्धि-
र्गृह्णात्यभावं विशदं विशिष्टम् ।
सामान्ययोगस्य कथा च सार्था
योगस्तदर्थं परिकल्पनीयः ॥६८॥

तत्राप्यभावे गमकं न किञ्चिन्
मान्यं वचः किं रघुनाथसूरेः ।
अन्यत्र सक्तस्य निवारणार्थं
सत्ता तदीया न विहन्तुमर्हा ॥६९॥

जातस्य कार्यस्य पुनः प्रसक्ते-
स्तस्या निरासाय तदेव बन्धम् ।
संकल्प्य दत्तोऽभिनवः समाधि-
स्तद्भव्यभावः सबलो न भाति ॥७०॥

शाखांशजाता कपियोगिभूति-
र्वार्या न सा यत्र पुनः प्रसक्ता ।
मूले च तत्रैव न भात्यभव्या
संयोगभूतिः प्रतिबन्धिका सा ॥७१॥

अनादिसान्तो यदि भात्यभाव-
स्तदा न बाधा प्रबला विपत्तिः ।
अतो न मानं न च तस्य सत्ता
रघूक्तिरेषा पृथगेव नास्ति ॥७२॥

नानादिसान्तधवलः प्रबलोऽप्यभावो
मान्यस्तदा रघुकथा वितथा विरक्ता ।
वेत्तुं च तां मतिमतां धिषणैव शक्ता
प्राचां विचारकमला विमला सयत्ना ॥७३॥

प्रबलबुद्धिदिशा परितो न वा
दिशति तत्र विधां सुनवां नवाम् ।
वहति भामभितो न च गां नवां
प्रबलयुक्तिपरां दयितां पराम् ॥७४॥

अजतु सान्तमभावमिहामृतं
न दधते रघुनाथकथापगा ।
न च सुधां सुधियां धरतेऽनवां
मतिमताममलां बलदायिकाम् ॥७५॥

अभावसत्तां प्रबलां विभाव्य
मतिर्बुधानां विहरत्यजस्रम् ।
न तत्र पापं कुरुते कलङ्कं
विराजते भव्यमतिर्विशङ्का ॥७६॥

सामान्ययोगकमलं विमलं तदर्थं
संचिन्त्य राजतु मतिः सुधियां सतर्का ।
यस्याः प्रभावमतुलं सहज समेत्य
बाभात्यभावविमलः प्रबलो विशेषः ॥७७॥

उदेति बोधः प्रबलोऽपि कामः
कृतिः क्रमेणैव विदन्ति सन्तः ।
तदर्थयोगोऽभिनवः प्रकल्प्यो
न त विना सेत्स्यति तत्क्रमोऽपि ॥७८॥

क्रमेण कृत्स्ना व्यवहारकाले
बोधादयो यत्र विभान्ति कम्राः ।
साक्षात्कृतिस्तत्र न बोधभूते-
स्तथैव कामस्य करालमूर्त्तेः ॥७९॥

नोत्पद्यते योग्यविशेषभूति-
रेकत्र जीवे युगपत् प्रकाम्या ।
इच्छीयकाले न च भाति बोधो
यत्नस्य काले न च कामसत्ता ॥८०॥

पूर्वापरीभावकथाऽसमर्थः
सामान्ययोगो न विभाति भव्यः ।
भव्या तदर्था विमलैव गाथा
गेयो न योगोऽविमलो विभाति ॥८१॥

बोधत्वरूपेण गृहीतबोधे
कामत्वरूपेण च कामनायाः ।
कामप्रयत्नव्यभिचारभूते-
रज्ञानतायां सकलेष्टसिद्धेः ॥८२॥

रघूक्तिरेषा प्रबलाप्यभव्या
मतौ नवीना चिनुते न तत्त्वम् ।
मत्यादिकानां क्रमशः प्रवेशे
सामान्ययोगो न कदाप्युपेक्ष्यः ॥८३॥

दोषस्य चर्चाऽभिनवा न क्वापि
चाल्या बुधैर्दृष्टिधरैरधन्या ।
सामान्ययोगो विनिहत्य दोषान्
सूते गुणांश्चापि विधूतपापान् ॥८४॥

सामान्ययोगाय कृतप्रयत्ना
मिश्रोक्तरीती रमते स्वतन्त्रा ।
बाभाति भव्या विमला रमेव
दोषो रघूक्तो विलयं गतोऽत्र ॥८५॥

रघुरयं प्रतिभाभरभासुरो
न रमते रमणीव मनोऽस्थिरा ।
अहिरिवाद्य भृशं व्यथिताननो
वमति तर्कविषं तरसातुरः ॥८६॥

शास्त्रीयदृष्टिरमला परिभाति भव्या
मिश्रस्य मौक्तिकलतेव कला ललामा ।
विज्ञस्य तस्य रघुनाथविचित्रसूरे-
र्भव्या न भाति विमता प्रतिकूलदृष्टिः ॥८७॥

तादात्म्ययोगेन च साध्यगोत्वं
भिन्नेन सम्बन्धवरेण वापि ।
सेद्धुं न शक्यं धवलं विहाय
सामान्ययोगं वदति प्रगल्भः ॥८८॥

प्रगल्भपक्षं मनुते रघुर्न
सदा विपक्षं चिनुते कवीन्द्रः ।
सामान्ययोगस्य कथा न कार्या
साध्यस्य सिद्धौ न च तस्य योगः ॥८९॥

शिरोमणेर्भव्यपथेऽपि तस्य
प्रगल्भयोगस्य विभाति माया।
तमन्तरा नास्ति पथः प्रशस्त-
स्ततश्च योगोऽभिनवो न हेयः ॥९०॥

पक्षः प्रगल्भस्य विभाति भव्यः
सामान्यसम्बन्धविधामुपेतः।
साध्यस्य सिद्धिर्न कदापि बोध्या
सामान्यसम्बन्धविधाविहीना ॥९१॥

रघूक्तपक्षो विफलः सदैव
वचो विरुद्धं चिनुते न तर्कम्।
अतः स योगोऽभिनवोऽनवो वा
बुधै र्न हेयः सबलः सतर्कः ॥९२॥

रघुमतं सकलं समलं सदा
मतिमतां हरते न मनस्तथा।
विविधनिष्कलतां चिनुते धनी
न रमते श्रमसाध्यविधः पथः ॥९३॥

कामः सुखादौ रमते मनोज्ञः
पाके चिकीर्षा सहजैव नृणाम्।
सिद्धे सुखादौ न कदापि तेऽत्र
सिद्धस्य कस्याप्यवरोधकत्वात् ॥९४॥

असिद्धपाकादितरौ रसाले
नृणां चिकीर्षादिविधा समृद्धा।
विहाय सामान्यविधां न सिद्धा
समीहितार्थापि विधा प्रसक्ता ॥९५॥

चिन्तामणेश्चिन्तनवाक् परैव
पाकाद्यसिद्धेरवबोधहीने।
सिद्धस्य पाकस्य सुबोधतायां
सिद्धाप्यसिद्धा प्रबला चिकीर्षा ॥९६॥

भव्यां विधां यत्नशतेन नीत्वा
पक्षं स्वकीयं धवलं जगाद ।
दोषा निरस्ता दधते पदन्न
चिन्तामणेर्भव्यविचारभूमौ ॥९७॥

चिन्तामणेर्भाति न पक्ष एष
कामस्य कस्यापि विचित्रमूर्त्तेः ।
नाशाय नालं विहितेऽपि यत्ने
त्याज्यस्ततस्तर्कविहीनकक्षः ॥९८॥

सिद्धे च पाके प्रबला चिकीर्षा
सिद्धे सुखादौ सबलोऽपि कामः ।
बाधा न मान्या समुदेति तत्र
स्वच्छः स पक्षो धरते न दोषम् ॥९९॥

सिद्धत्वबोधप्रतिबन्धकत्वं
सर्वत्र नास्त्येव रघूक्तिरेषा ।
भव्यस्थितावेव विकल्पितायां
रोधस्य सत्त्वं न च सर्वभूमौ ॥१००॥

अभद्रभावो मनुते मतन्न
बुधोऽद्वितीयो रघुनाथनामा ।
न भाति योगस्य नवस्य चर्चा
विनैव तं सिद्धयति कृत्स्नकार्यम् ॥१०१॥

विधाय भव्यां विविधां विधां स
समग्रभूतिं चिनुते च चिन्त्याम् ।
न तन्मते योगवरस्य चर्चा
सदैव हेयोऽभिनवः स योगः ॥१०२॥

सिद्धेऽपि कामोदयभव्यभूतिः
संराजते तत्र न भाति बाधा ।
नो चेत्तदा प्रोषणकालसत्त्वे
कामस्य भव्यस्य भवो विरुद्धः ॥१०३॥

सिद्धत्वबोधस्य विहीनतायां
सिद्धेऽपि कामोदयकार्यसत्त्वम् ।
वार्यन्न भव्योदयतामुपेतं
सामान्ययोगस्य न तत्र चर्चा ॥१०४॥

रघूक्तिरेषानुभवानुकूला
भा भात्यभव्या विपरीतभावा ।
असिद्धपाकादिविचित्रभूमौ
काम्या चिकीर्षा परिभाति भव्या ॥१०५॥

सामान्ययोगस्य विधा प्रशस्ता
मान्या न हेया विषमेऽपि काले ।
प्राचां मता दिव्यकदम्बभूतिः
पङ्के न युक्ता विदुषां कदैव ॥१०६॥

रघूक्तदोषा दधते पदन्न
समाधयस्तत्र विभान्ति भव्याः ।
सतां मुदे योगविभूतिभूमि-
र्धन्यैव सा राजतु राजनीतिः ॥१०७॥



## सन्निकर्षविषये दीधितिकृन्मतविमर्शः

प्राचीननैयायिकैः सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिनेत्यनुभवानुरोधेन इन्द्रियैर्विषयग्रहणोपयोगिनो विषयेन्द्रियसन्निकर्षा मताः। ते च लौकिकालौकिकसन्निकर्षभेदात् द्विधा वर्णिताः। तत्र लौकिकसन्निकर्षः संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवाय-विशेषणताभेदात् षड्विधः।

तेषु प्रथमो द्रव्यग्राहको द्वितीयो द्रव्यसमवेतानां गुणकर्मजातीनां ग्राहकः। तृतीयो रूपादिसमवेतानां रूपत्वादीनां ग्राहकः। चतुर्थः श्रोत्रसमवेतस्य शब्दस्य ग्राहकः, पञ्चमः शब्दत्वतद्व्याप्यकत्वादीनां च ग्राहकः। षष्ठः समवायाभावयोर्ग्राहकः स च संयुक्तविशेषणता - संयुक्तविशेषणविशेषणता - संयुक्तसमवेतविशेषणता- संयुक्तसमवेतविशेषणविशेषणता संयुक्तसमवेतसमवेतविशेषणता-समवेतविशेषणता-समवेत समवेतविशेषणतादिभेदेन नानाविधः।

अलौकिकसन्निकर्षश्च सामान्य-ज्ञान-योगजसन्निकर्षभेदात्त्रिविधः। तत्र सामान्यसन्निकर्षः सामान्यलक्षणाशब्देन व्यपदिश्यते। ज्ञानलक्षणसन्निकर्षो ज्ञानलक्षणाशब्देन, योगजसन्निकर्षो योगजप्रत्यासत्तिशब्देन व्यपदिश्यते। तेषु आद्यः सन्निकर्षो निखिलवह्निधूमोपसंहारेण व्याप्तिग्रहणार्थं निखिलगवाद्युपसंहारेण गवादिपदशक्तिग्रहार्थं चाभ्युपेयते।

एवं द्वितीयः सन्निकर्षः शुक्त्यादौ रजतत्वादिभ्रमोपपादनार्थमङ्गीक्रियते। तृतीयः सन्निकर्षश्च देशकालविप्रकृष्टानां सर्वपदार्थानां योगिनां प्रत्यक्षोपपादनार्थमभ्युपेयते।

दीधितिकारोऽलौकिकसन्निकर्षविषये[1] विप्रतिपन्नस्तन्मते सामान्यलक्षणाप्रत्यसत्तिर्निष्प्रयोजना। न च तदनभ्युपगमे महानसादौ वह्निधूमयोः सहचारदर्शने चक्षुःसन्निकृष्टधूमे एव वह्नेर्व्याप्तेरनुभवसम्भवेन वह्निव्याप्तिमत्तया पूर्वमननुभूतस्य

---

१. अत्र वदन्ति, प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञानमेतद्धूमत्वेन वा, आद्ये संशयोऽसिद्धः। द्वितीये धूमत्वावच्छेदेन व्याप्तिग्रहस्यैव तद्विरोधितया स नानुपपन्नः। जागदीश्यां सामान्यलक्षणाप्रकरणे पृ० सं० १४६-१४८।

पर्वतीयधूमस्य दर्शनेऽपि पर्वतो वह्निव्याप्यधूमवानिति परामर्शानुपपत्त्या पर्वते वह्नेरनुमितिर्न स्यात् ।

सामान्यलक्षणायाः प्रत्यासत्तेरभ्युपगमे च नैष दोषो महानसादौ वह्नित्वधूमत्वाभ्यां यत्किंचिद्वह्निधूमयोः प्रत्यक्षानन्तरं वह्नित्वधूमत्वरूपसामान्यलक्षणसन्निकर्षमहिम्ना सर्वेषां वह्नीनां धूमानां चालौकिकप्रत्यक्षसम्भवेन धूमविशेषे वह्निविशेषस्य व्याप्तिग्रहणवेलायां धूमसामान्ये वह्निसामान्यव्याप्तेरपि ग्रहीतुं शक्यतया पर्वतीये धूमे दृष्टे पूर्वमनुभूतायास्तन्निष्ठव्याप्तेः स्मरणसम्भवेन पर्वतो वह्निव्याप्यधूमवानितिपरामर्शस्य सूपपन्नतया पर्वते धूमेन वह्न्यनुमितेरुत्पत्तौ बाधकाभावात् ।

एवं सामान्यलक्षणसन्निकर्षानभ्युपगमे व्यवहाराङ्ग गवादिपदस्यानयनादिलक्षणव्यवहाराङ्गभूतायामेव गवादिव्यक्तौ गवादिपदस्य शक्तिग्रहणेन व्यवहाराङ्गतयानुपलब्धासु गवादिव्यक्तिषु गवादिपदस्य शक्तेरग्रहणेन गवादिव्यक्तिविशेषमात्रे गृहीतगोपदशक्तिकस्य पुंसो गवादिव्यक्त्यन्तरतात्पर्येण प्रयुक्ताद् गवादिपदाद् गवादिव्यक्त्यन्तरस्य बोधो न स्यात् तत्प्रकारकशाब्दबोधे वृत्तिज्ञानाधीनतद्विषयकोपस्थितेः कारणत्वात् ।

उक्तसन्निकर्षाभ्युपगमे च व्यवहाराङ्गभूतायां प्रत्यक्षगवादिव्यक्तौ गवादिपदस्य संकेतग्रहे जाते गोत्वादिसामान्यलक्षणप्रत्यासत्त्या निखिलगवादिव्यक्तीनां गृहीतत्वेन सर्वगोसाधारण्येन गोपदशक्तेर्ग्रहणस्य सुघटतया नोक्तानुपपत्तिरिति वाच्यमुक्तसन्निकर्षानभ्युपगमेऽपि साध्यव्याप्तिमत्तया पूर्वाननुभूतहेतुव्यक्त्या साध्यानुमितेः, एवं गवादिपदशक्तिमत्तया पूर्वाननुभूतगवादिव्यक्तेः शाब्दबोधस्य च प्रकारान्तरेणोपपत्तिसम्भवात् । तथा हि—धूमत्वेन महानसीयधूमविषयको यो वह्निव्याप्तेरनुभवस्तज्जनितसंस्कारस्य पर्वतीयधूमदर्शनादुद्बोधे सति महानसीयधूमविषयकमेव धूमो वह्निव्याप्य इत्याकारकस्मरणं जायते किन्तु ततः पर्वते वह्निव्याप्यत्वेन पर्वतीयधूमग्राहकोऽपि पर्वतो वह्निव्याप्यधूमवानितिपरामर्श उत्पत्तुमर्हति, तद्धर्मविशिष्टवैशिष्ट्यावगाहिबुद्धौ तद्धर्मप्रकारकज्ञानस्य तद्धर्मधर्मिणोर्निवेशमनन्तर्भाव्यैव कारणत्वाभ्युपगमेन वह्निव्याप्तिप्रकारकमहानसीयधूमविषयकज्ञानेन वह्निव्याप्यत्वेन पर्वतीयधूमवैशिष्ट्यावगाहिनोऽपि परामर्शस्य सम्भवात् ।

एवं व्यवहाराद् गवादिपदस्य गवादिव्यक्तिमात्रे शक्तिग्रहेणापि गवादिपदादगृहीतगोपदशक्तिकाया अपि गवादिव्यक्तेः शाब्दबोधो भवितुमर्हति शक्तिज्ञानोपस्थितिशाब्दबोधानां समानप्रकारकत्वेनैव कार्यकारणभावस्वीकारेण गोत्वप्रकारकयत्किंचिद्गोव्यक्तिविषयकोपस्थितितो योग्यताबलाद् गवादिव्यक्त्यन्तरस्यापि शाब्दबोधे भानसम्भवात् ।

न च महानसादौ वह्निधूमयोः सहचारदर्शनानन्तरं धूमो वह्निव्यभिचारी न वेत्येवंविधो धूमे वह्निव्यभिचारसंशयः सर्वानुभवसिद्धः, स सामान्यलक्षणप्रत्यासत्त्यभावेऽनुपपन्नो यतो हि चक्षुःसंयुक्ते धूमे वह्निव्यभिचाराभावः प्रत्यक्षसिद्धोऽतस्तत्र वह्निव्यभिचारसंशयो नोदेतुमर्हति, यत्र धूमो देशतः कालतो वा विप्रकृष्टस्तत्र वह्निव्यभिचारस्य तदभावस्य वाऽनिर्णयेऽपि न तत्रोक्तसंशयः समुदेतुं शक्यस्तस्याज्ञातत्वात्, संशयं प्रति च धर्मिज्ञानस्य कारणत्वात्।

उक्तसन्निकर्षाभ्युपगमे तु नायं दोषो महानसीये धूमे वह्निसहचारग्रहणदशायां धूमत्वसामान्यलक्षणप्रत्यासत्त्या गृहीते विप्रकृष्टे धूमे संशयविरोधिनो निर्णयस्याभावेनोक्तसंशयसम्भवादिति वाच्यं वह्निव्यभिचाराभाववत्तयाऽनिर्णीतायां महानसीयधूमव्यक्तावेव वह्निव्यभिचारसंशयसम्भवात्। अयम्भावः—

महानसीयधूमे वह्निसहचारदर्शनदशायां यो वह्निव्यभिचाराभावनिश्चयो जायते स यदि धूमत्वावच्छेदेन स्यात्तर्हि सामान्यलक्षणप्रत्यासत्त्या गृहीते विप्रकृष्टधूमेऽपि वह्निव्यभिचारसंशयो न भवितुमर्हति तद्धर्मावच्छिन्नधर्मिकसंशयमात्रं प्रति तद्धर्मावच्छेदेन एकैककोटिनिर्णयस्य प्रतिबन्धकत्वात्। यदि च वह्निव्यभिचाराभावनिर्णयो महानसीयधूमव्यक्तौ धूमत्वसामानाधिकरण्येनैव जायते तदा तद्धूमव्यक्तावपि धूमत्वसामानाधिकरण्येन वह्निव्यभिचारावगाहिनो धूमत्वावच्छेदेन च तदभावावगाहिनः संशयस्योत्पत्तिर्भवितुमर्हति तद्धर्मसामानाधिकरण्येन वह्निव्यभिचाराभावनिश्चयस्य तद्धर्मसामानाधिकरण्येन वह्निव्यभिचारावगाहिसंशयं प्रत्यविरोधित्वात्।

न च तद्वत्ताबुद्धिं प्रति लाघवात् तदभाववत्तानिश्चयः समानविशेष्यताप्रत्यासत्त्या प्रतिबन्धक इत्येव स्वीकार्यं न तु तद्धर्मावच्छेदेन तद्धर्मधर्मितावच्छेदककतदभावनिश्चयस्य सामानाधिकरण्यप्रत्यासत्त्या प्रतिबन्धकत्वं मान्यं प्रतिबध्यप्रतिबन्धकभावावच्छेदकगर्भे धर्मितावच्छेदकस्य निवेशेन धर्मितावच्छेदकभेदेन प्रतिबध्यप्रतिबन्धकभावे नानात्वापत्त्या गौरवात्, अतो वह्निव्यभिचाराभाववत्तया गृहीते धूमे वह्निव्यभिचारसंशयो न भवितुमर्हतीति वाच्यम् उक्तरीत्या प्रतिबन्धकत्वकल्पने पार्थिवं तैजसं जलीयं च रूपं वायुत्वाभावव्याप्यमित्येवं निश्चये सति रूपं वायुत्वाभावव्याप्यं न वेति रूपविशेष्यकसंशयानुपपत्तिप्रसङ्गात्, रूपमात्रे वायुत्वाभावव्याप्यत्वाभावविरोधिन्या वायुत्वाभावव्याप्तेर्निर्णयात्, धर्मितावच्छेदकं निवेश्यैव प्रतिबध्यप्रतिबन्धकभावकल्पनाया औचित्याच्च।

न च पार्थिवादिरूपभिन्नं रूपं न वेत्याकारकसम्भावनायामेव रूपे वायुत्वाभावव्याप्यत्वसन्देहेन सम्भावनाविरहविशिष्टसमानधर्मिकनिश्चयस्य प्रतिबन्धकत्वे दोषाभाव इति वाच्यं तथा सति प्रत्यक्षधूमे वह्निव्याप्तिनिश्चयस्य सत्त्वेऽपि प्रत्यक्षधूमातिरिक्तो धूमो न वेति सम्भावनायां धूमो वह्निव्यभिचारी न वेति संशयस्य प्रत्यक्षधूम एव सम्भवेन उक्तसंशयानुरोधेन सामान्यलक्षणप्रत्यासत्तेरभ्युपगमस्य नैरर्थक्यप्रसङ्गात्।

न च घटत्वादिरूपेणोपस्थितेषु प्रसिद्धधूमभिन्नेषु धूमत्वाभावस्य निश्चितत्वेन तेष्वतिरिक्त-धूमत्व-सम्भावनाया दुर्घटतया प्रसिद्धधूमेऽपि धूमत्वस्य निश्चितत्वेन तत्रापि तादृशसम्भावनाया असम्भवतया सम्भावनाया धर्मिणोऽप्रसिद्धधूमस्योपस्थित्यर्थमेव सामान्यलक्षणप्रत्यासत्तिरावश्यकीति वाच्यम् उक्तरीत्या समानधर्मिकज्ञानस्य विरोधित्वे सम्भावनाया एवानुपपत्तेः।

अयम्भावः—प्रसिद्धेषु रूपेषु पार्थिवादिभिन्नत्वाभावदर्शनेन तेषु पार्थिवादिभिन्नत्वसम्भावना न भवितुमर्हति, एवं पार्थिवादिरूपातिरिक्तेऽपि पार्थिवादिभिन्नत्वसम्भावना न भवितुमर्हति पार्थिवादिरूपातिरिक्तेषु सर्वेषु रूपभेदस्य रूपत्वाभावस्य च निश्चयात्। रूपान्यन्न रूपं द्रव्यादयो रसादयश्च न रूपं प्रसिद्धरूपभिन्नं यद् रूपभिन्नं द्रव्यं रसादिर्वा तत्सर्वं न रूपमित्याकारकविशेषदर्शनस्य सर्वसम्मतत्वात्, अतोऽतिरिक्तसम्भावनाया उक्तरीत्या उत्तेजकत्वासम्भवेन प्रत्यक्षधूमे वह्निव्याप्यत्वनिश्चयदशायां सर्वजनानुभवसिद्धस्योक्तसंशयस्यानुरोधे। समानधर्मिकनिश्चयस्य प्रतिबन्धकतायाः परित्याज्यतया वह्निव्याप्यत्वेन गृहीते धूमे धूमत्वावच्छेदेन वह्निव्याप्तेरग्रहदशायां तत्रैव धूमे वह्निव्यभिचारसंशयस्य सम्भवेन तदनुरोधेन सामान्यलक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक एव।

## उक्तमतालोचनम्

दीधितिकृतः कथनमिदमालोच्यमानं नोचितं प्रतिभाति यतः सामान्यलक्षणाया अनभ्युपगमे धूमान्तरस्यात्यन्तमज्ञानेन एतद्धूमो वह्निव्याप्य इत्याकारकनिश्चयोत्तरं धूमो वह्निव्याप्यो न वेति संशयो न स्यात् संशयं प्रति धर्मिज्ञानस्य कारणतया अज्ञातस्य धूमस्य संशये धर्मिविधया भानासम्भवात्। एतद्धूमे च वह्निव्याप्तेर्निर्णयसत्त्वेन तस्याप्युक्तसंशये धर्मिविधया भानासम्भवात्।

न च धूमत्वावच्छेदेन एतद्धूमे वह्निव्याप्तेरनिर्णयेन एतद्धूमस्य उक्तसंशये धर्मिविधया भानं निराबाधं समानधर्मिकज्ञानस्य विरोधिताया निराकरणादिति वाच्यं धूमान्तरस्यात्यन्तमज्ञाने धूमत्वस्य एतद्धूम एवावगाहनेन एतत्त्वे व्याप्यतावच्छेदकत्वानवगाहनाद् अव्यावर्त्तकधर्मे व्याप्यतावच्छेदकत्वग्रहासम्भवाद्, व्यावर्त्तकत्वेन अज्ञातधर्मस्य व्याप्यांशे उपलक्षणतयैव भानोपगमात्।

न च व्यावर्त्तकत्वेन अज्ञातधर्मेऽपि व्याप्यतावच्छेदकत्वोपगमे दोषाभावेन एतत्त्वविशिष्टधूमत्वावच्छेदेनैव वह्निव्याप्तेर्निश्चयेन उक्तसंशयः सुघट एव प्रतिबन्धकीभूतस्य धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्याभावादिति वाच्यं व्यावर्त्तकत्वेन अज्ञातधर्मस्यापि व्याप्यतावच्छेदकतया भानवादिमते व्यावर्त्तकत्वेन अज्ञातधर्मविशिष्टधर्मा-

वच्छेदेन तद्वत्तानिश्चयस्य शुद्धधर्मावच्छेदेन तदभाववत्ताबुद्धिं प्रत्यपि प्रतिबन्धकत्वाद्, अन्यथा सर्वं वस्तु प्रमेयमितिज्ञानवतः पुंसः प्रमेयधूमो वह्निव्याप्य इतिनिश्चयोत्तरं धूमो वह्निव्याप्यो न वेतिसंशयोत्पत्तिप्रसङ्गात्, तथा च एतद्धूमत्वावच्छेदेन वह्निव्याप्ति-निश्चयस्यापि धूमत्वेन एतद्धूमधर्मिकवह्निव्यभिचारसंशयं प्रति प्रतिबन्धकतया एतद्-धूमो वह्निव्याप्य इतिनिश्चयानन्तर धूमधर्मिकवह्निव्यभिचारसंशयानुत्पत्तिर्दुर्निवारेति उक्तनिश्चयदशायाम् उक्तसंशयस्य धूमान्तरधर्मिकतया उपपत्तये धूमान्तरज्ञानार्थं सामान्यलक्षणाया अभ्युपगमो नितान्तमावश्यक एव ।

न च प्रमेयधूमो वह्निव्याप्य इतिनिश्चयो त्तरं शुद्धधूमत्वावच्छेदेनापि वह्निव्याप्ति-निश्चयोत्पत्तिरभ्युपगम्यते संशयानुत्पादकरूपफलबलात्, एतद्धूमो वह्निव्याप्य इतिनिश्चयोत्तरं च संशय उत्पद्यत इति तत्रोत्तरकालं धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयो नोत्पद्यत इति तत एव सामञ्जस्यमिति वाच्यं प्रमेयत्वस्य व्यावर्तकत्वज्ञानवतोऽपि पुंस उत्तरक्षणं धूमत्वावच्छेदेन व्याप्तिनिश्चयोत्पादापत्तेः ।

किं च प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्य धूमत्वावच्छेदेन वह्निव्याप्ति-निश्चयजनकत्वकल्पने प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्य तदव्यवहितपूर्व-वर्तित्वमनन्यथासिद्धत्वं चेति द्वयं कल्पनीयं तदपेक्षया प्रमेयधूमत्वावच्छेदेन वह्निव्याप्ति-निश्चयविरहस्य सिद्धनियतपूर्ववृत्तिताकस्य प्रतिबन्धकाभावविधयाऽनन्यथासिद्धत्वमात्रं कल्पनीयमिति लाघवात् प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्यैव धूमत्वावच्छेदेन तत्संशयकारणीभूताभावप्रतियोगित्वात्मकप्रतिबन्धकत्वं सिद्धयति ।

न च प्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयाभावस्य तत्संशयाव्यवहितपूर्ववर्ति-त्वमसिद्धमिति वाच्यं निश्चयसामग्र्या अपि संशयविरोधितया धूमत्वावच्छेदेन वह्नि-व्याप्तिनिश्चयकारणीभूतप्रमेयधूमत्वावच्छिन्नधर्मिकवह्निव्याप्तिनिश्चयात्मकतत्सामग्रीसद्-भावे संशयासम्भवाद् अन्यथा समानविषयकसंशयनिश्चययोर्युगपदापत्तेः, एवं च तदभावस्य व्यवहितपूर्ववर्तित्वं सिद्धमेव । वस्तुतस्तत्रानन्यथासिद्धत्वमपि सिद्धमेव । धूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्येव तत्सामग्र्या अपि संशयप्रतिबन्धकताया उक्ततया तदभावस्य संशयकारणत्वात् । एवं स्थिते सति मध्ये किमेतेनान्तर्गडुना धूम-त्वावच्छेदेन वह्निव्याप्तिनिश्चयेन तदुत्पत्तिकल्पनेन च ।

एतेन व्यावर्तकत्वज्ञानविरहविशिष्टप्रमेयधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयस्यैव शुद्धधूमत्वावच्छेदेन वह्निव्याप्तिनिश्चयकारणत्वमितिव्यावर्तकत्वज्ञानकाले प्रमेयधूमो वह्निव्याप्य इति निश्चयोत्तरं न धूमत्वावच्छेदेन तन्निश्चयोत्पत्तिर्न वा तत्र संशयानुप-पत्तिरिति प्रागुक्तदोषवारणेऽपि न निस्तारः, व्यावर्तकत्वज्ञानविरहविशिष्टप्रमेयधूम-त्वावच्छेदेन वह्निव्याप्तिनिश्चयाभावस्य क्लृप्तकारणताकतया तत एवोपपत्तेर्मध्ये निश्चयान्तरोत्पादकल्पनावैफल्यात् ।

इत्थमेव च अयमेव धूमो नान्य इतिनिश्चयवत एतद्धूमो वह्निव्याप्य इति-निश्चयोत्तरं न धूमो वह्निव्यभिचारी न वेति संशय.। एवं चात्र व्यावर्त्तकत्वेना-ज्ञातैतत्त्वविशिष्टधूमत्वावच्छिन्ने व्याप्तिनिश्चयस्य शुद्धधूमत्वावच्छिन्ने व्याप्तिनिश्चयो-त्पादकतायास्त्वदुक्तरीत्यापि उपगन्तव्यतया प्रागुक्तस्थलेऽपि तादृशनिश्चयोत्पत्तिर्दु-र्वारैवेति कथं तत्र संशयोपपादनसम्भवः।

न च व्यावर्त्तकत्वेनाज्ञातैतत्त्वादिविशिष्टधूमत्वावच्छिन्ने व्याप्तिनिश्चयस्य शुद्ध-धूमत्वावच्छिन्ने व्याप्तिनिश्चयहेतुत्वं नोच्यते किन्तु तत्तद्व्यक्तित्वेनैवेति यत्र संशयानु-भवस्तत्र तदकल्पनान्न दोष इति वाच्यं तथा सति अनन्तकार्यकारणभावप्रसङ्गेन महा-गौरवात्। अत एव तत्रानियतकारणान्तरस्वीकारस्यापि निरासः, अवश्यक्लृप्तनियत-पूर्ववर्त्तिनस्तस्यैव कारणत्वसिद्धेः।

अथ व्यावर्त्तकत्वेनागृहीतधर्मस्योपलक्षणतया भानमिति नोपगम्यते न वा तादृश-धर्मविशिष्टधर्मावच्छेदेन तद्वत्तानिश्चयस्य शुद्धधर्मावच्छेदेन तदभाववत्ताज्ञानविरोधित्व-मिति ज्ञानान्तरस्य तत्रोत्पत्तिरिति वा, किन्तु व्यापकत्वेन गृहीतधर्मस्योपलक्षणतया भानादिकमेव। सर्वं वस्तु प्रमेयमिति ज्ञानवतो वस्तुत्वव्यापकतायाः प्रमेयत्वेऽवगाहनात् पश्चाद् धूमत्वव्यापकत्वमपि तत्रावगम्येतैवेति प्रमेयधूमो वह्निव्याप्य इति ज्ञाने प्रमेय-त्वस्योपलक्षणतया भानं न तु एतद्धूमो वह्निव्याप्य इति निश्चये एतत्त्वस्य एतत्त्वे धूमत्वव्यापकताया अग्रहणात्, एष एव धूमो नान्य इत्येवमेतत्त्वे धूमत्वव्यापकता-निश्चयसत्त्वे च संशयोऽसिद्ध एवेति चेन्न अयं धूम इति प्रत्यक्षानन्तरमेतत्त्वे धूमत्व-व्यापकत्वग्रहस्यैव दुर्वारत्वात्। व्यभिचाराग्रहसहचारग्रहयोरेव व्याप्तिग्राहकत्वात्। अत एवैतद्रूपैतद्रसयोरेकत्र दर्शने तयोर्व्याप्यव्यापकभावग्रहाद् भूयोदर्शनस्य व्याप्ति-ग्राहकत्वानियमः।

न च सामान्यलक्षणामङ्गीकुर्वतां मतेऽपि धूमत्वैतत्त्वयोर्व्याप्यव्यापकभावग्रहः स्यादिति वाच्यं धूमत्वेन निखिलधूमोपस्थितौ धूमान्तरे एतत्त्वाभावज्ञानादेव व्याप्ति-निश्चयासम्भवात् तत्रैव धूमे व्यभिचारग्रहात्, धूमान्तरे एतत्त्वाभावज्ञानानुत्पादे तु इष्टमेव व्याप्यव्यापकभावग्रहः, अत एव क्वचित्संशयः क्वचिन्न संशय इत्यपि नियम उपपन्नः। सामान्यलक्षणामनङ्गीकुर्वतां धूमत्ववतो धूमान्तरस्यानुपस्थित्या तत्रैतत्त्वा-भावग्रहविरहेणैतत्त्वे धूमत्वव्यापकताया ज्ञानाद् एतद्धूमो वह्निव्याप्य इतिज्ञाने एत-त्त्वस्य विशेषणतया भानं दुःसम्पादमेव।

नन्वतिरिक्तेषु वस्तुषु धूमत्वसम्भावनया नैतत्त्वे धूमत्वव्यापकत्वज्ञानमनङ्गी-कुर्वतामपि सामान्यलक्षणां व्यभिचाराग्रहसहचारग्रहयोरिव सम्भावनाविरहस्यापि व्याप्तिग्रहहेतुत्वात्, अतिरिक्तेषु धूमत्वसम्भावनया व्यभिचारसंशयसम्भवाद्वा धूमत्वेन सम्भाविते एतत्त्वाभावग्रहादिति चेन्न ज्ञातेष्वतिरिक्तेषु विशेषदर्शनेनैव सम्भावनाया

असम्भवात्। न चाज्ञातेष्वेव धूमत्वं सम्भावनीयमिति वाच्यं तथा सति अज्ञातज्ञानायैव सामान्यलक्षणास्वीकारापत्तः।

एतेन धूमत्वं वह्निव्यभिचारिवृत्ति न वा धूमत्वं तत्तद्धूमभिन्नवृत्ति न वेत्यादिसम्भावनानामुत्तेजकत्वं वदन्तोऽपि परास्तास्तत्तद्धूमभिन्नत्वेन ज्ञातेषु धूमत्वस्य वृत्तित्वाभावनिश्चयेन सम्भावनाऽयोगात्। अज्ञातेषु चाज्ञानादेव वृत्तित्वसम्भावनाऽसम्भवात्।

एवं धूमत्वत्वेन धूमत्वानुपस्थितिकालेऽपि तादृशसंशयस्यानुभविकतया तत्रैव संशयोपपादनं दुःशकं स्यात् निर्धर्मितावच्छेदककसम्भावनाविरहात्, धर्मिज्ञानस्य संशयहेतुत्वेऽपि धर्मितावच्छेदकप्रकारकज्ञानस्य तद्धेतुताया आवश्यकत्वात्, निर्धर्मितावच्छेदककसम्भावनायाः कथंचिदभ्युपगमेऽपि तस्योत्तेजकत्वादिकमत्यन्तमसम्भावितमेव।

न च तत्तद्धूमस्यैव तादात्म्येन तत्तद्धूमान्यवृत्तित्वसम्भावना विवक्षितेति वाच्यं तत्तद्धूमान्यत्वेन ज्ञातेषु घटादिषु तादात्म्येन धूमाभावनिश्चयाद् अज्ञातस्य चाज्ञानादेव सम्भावनाया असम्भवात्।

ननु तद्रूपतद्रसयोरेकाधिकरणे दर्शनेऽपि कदाचिद् व्यभिचारसंशयो दृश्यते न हि तत्र तद्रूपस्य पदार्थान्तरापस्थापकसामान्यत्वमेकस्मिन्नेव वस्तुनि तत्सत्त्वाद् येन व्यभिचारसंशयो वक्तुं शक्यते। एवं चादृष्टविशेषादेव तत्र व्याप्तिग्रहप्रतिबन्धकत्वं वक्तव्यम् एवं सति एतत्त्वधूमत्वयोरपि व्याप्तिग्रहप्रतिबन्धकादृष्टविशेषकल्पनेनैवोपपत्तिरिति चेन्न तद्रूपतद्रसस्थलेऽपि सामान्यान्तरेणैव वस्त्वन्तरोपस्थितिसम्भवेन तत्रैव विशेषादर्शनेन तद्रूपाभावादिसंशयेन व्यभिचारसंशयसम्भवात्। वस्त्वन्तरानुपस्थितिकाले व्याप्तिग्रहस्येष्टत्वात्। न चैवं वस्त्वन्तरोपस्थितिकाले कदाचिदपि तद्रूपतद्रसयोर्व्याप्तिग्रहो न स्यात्तत्र तद्रूपाभावादिसंशयादिति वाच्यं तद्रूपतद्रसयोः प्रत्यक्षेणापि व्यापकत्वग्रहसम्भवात्।

ननु प्रत्यक्षं प्रति तत्तत्सन्निकर्षत्वेन हेतुतया एतत्त्वधूमत्वयोर्व्यापकत्वग्राहकसन्निकर्षाऽकल्पनादेव न व्यापकत्वग्रह इति नोपलक्षणतया एतत्त्वग्रह इति धूमे वह्निव्याप्तिसंशयो नानुपपन्न इति चेन्न एतत्त्वधूमत्वयोर्दर्शनोत्तरं मानसव्याप्तिग्रहस्यैव दुर्वारत्वात्। व्यभिचाराग्रहसहचारग्रहादीनामेव तत्र हेतुत्वात्। घट इत्याकारकप्रत्यक्षकाले जातिमानित्याकारकमानसप्रत्यक्षापत्तेर्जातित्वज्ञानविरहेणैवापादयितुमशक्यतया तत्तत्सन्निकर्षादेस्तत्र हेतुत्वाकल्पनात्।

न च तद्रूपतद्रसयोः सन्निकर्षसत्त्वेऽपि क्वचित्संशयदर्शनाद् वस्त्वन्तरे क्वचित् तद्रूपाभावज्ञानमुत्पन्नं कदाचिच्च नोत्पन्नमिति वक्तव्यम्, एवमेतत्त्वधूमत्वयोर्ज्ञानस्थलेऽपि

क्वचिद् वस्त्वन्तरे एतत्त्वाभवाज्ञानं क्वचिन्न जातमिति वक्तव्यम्, तत्रैवादृष्टविशेषस्य नियामकत्वं वक्तव्यमिति तदपेक्षया तयोर्व्याप्यव्यापकभावग्रहे एवादृष्टविशेषस्य नियामकत्वमास्तामिति वाच्यम्, अयं धूम इति ज्ञानोत्तरमपि किं धूममात्रे एतत्त्वं वर्तते किं वा क्वचिद् धूमे तदभावोऽपीति, धूमान्तरं वर्तते तदा तत्र एतत्त्वं नास्तीत्याद्यनुभवस्य सर्वसिद्धतया तन्नियामकतया सर्वैरेवादृष्टविशेषस्य कल्पनीयत्वात्। एतत्त्वधूमत्वयोर्व्याप्यव्यापकभावाग्रहनियामकान्तरसम्भवेऽदृष्टविशेषस्य तन्नियामकत्वकल्पनानौचित्यात्। अन्यथा घटादिकं प्रत्यपि अदृष्टविशेषादेर्नियामकत्वं कल्प्यतां किं दण्डादेः कारणत्वेन, किं वा गुरुभूतप्रतिबन्धकत्वादेस्तत्र तत्र कल्पनेन, सर्वत्रादृष्टविशेषस्य नियामकत्वसम्भवात्।

न चायं धूम इति प्रत्यक्षाव्यवहितोत्तरक्षणं तत्र वह्निव्याप्तिग्रहे तृतीयक्षणे व्यभिचारसंशयः सम्भवति, तत्र द्वितीयक्षणे व्यापकत्वग्रहादुपलक्षणतया भानमित्येवं चतुर्थक्षणीयसंशयादिकं प्रत्येव तस्य प्रतिबन्धकत्वसम्भवादिति वाच्यं चतुर्थपञ्चमादिक्षणेष्वपि संशयानुभवात् तदनुपपत्तेरेव दुरुद्धरत्वात्।

अथ पार्थिवरूपं जलीयरूपं तैजसरूपं च वायुत्वाभावव्याप्यमिति निर्णयकाले रूपं वायुत्वाभावव्यभिचारि न वेति संशय आनुभविकः स कथं सामान्यलक्षणावादिनामप्युपपद्यताम्, न च पार्थिवत्वादीनां रूपत्वाव्यापकतया पार्थिवत्वाभावादेर्जलीयरूपादौ ग्रहणेन व्यभिचारग्रहाच्च नोपलक्षणतया पार्थिवत्वादिभानसम्भव इति न रूपत्वावच्छेदेन वायुत्वाभावव्याप्तिसंशये पार्थिवरूपत्वाद्यवच्छेदेन वायुत्वाभावनिश्चयस्य प्रतिबन्धकत्वमिति वाच्यं पार्थिवजलीयतैजसान्यतमरूपं वायुत्वाभावव्याप्यमिति निश्चयवत एव संशयानुपपत्तेः पार्थिवत्वतैजसत्वजलीयत्वान्यतमाभावस्य कस्मिंश्चिदपि रूपेऽग्रहणादिति वाच्यं रूपत्वेनोपस्थितापूर्वरूपेषु पार्थिवत्वाद्यन्यतमत्वानिर्णयेन व्यभिचारसंशयसम्भवात्, तदन्यतमत्वे रूपत्वव्यापकत्वग्रहविरहेण तत्रोपलक्षणतया भानायोगात्।

न च यावन्ति पार्थिवरूपाणि तावन्ति पार्थिवाद्यन्यतमत्ववन्ति, एवं यावन्ति जलीयानि तैजसानि चेति निश्चयोत्तरं व्यभिचारसंशयो दुर्वच इति वाच्यं पार्थिवरूपत्वाद्यवच्छेदेन तादृशान्यतमत्वनिश्चयस्य रूपत्वसामानाधिकरण्येन तादृशान्यतमत्वाभावग्रहाविरोधित्वात्।

न च पार्थिवजलीयतैजसानि यावन्ति रूपाणि सर्वाणि तानि पार्थिवजलीयतैजसान्यतमत्ववन्तीति निश्चयवतः सर्वेषु रूपेषु तदन्यतमत्वनिश्चयात्तादृशान्यतमत्वस्योपलक्षणतयैव भानं स्यादिति वाच्यं यत उक्तप्रत्ययो हि पार्थिवजलीयतैजसान्यतमत्वविशिष्टरूपत्वावच्छेदेन तादृशान्यतमत्वावगाही, न हि पुनस्तादृशप्रत्ययो रूपत्वसामानाधिकरण्येन पार्थिवाद्यन्यतमत्वाभावबुद्धिं प्रतिरुणद्धि शुद्धरूपत्वावच्छेदेन तादृशान्यतमत्वनिश्चयस्यैव विरोधित्वात्।

न च पार्थिवजलीयतैजसान्यतमरूपाणि तादृशान्यतमत्ववन्तीति प्रत्यये अन्यतमत्वमुपलक्षणविधयैव भासत इति तस्य रूपत्वसामानाधिकरण्येन अन्यतमत्वाभावग्रहविरोधित्वमिति वाच्यं रूपत्वव्यापकतया अन्यतमत्वेन ग्रहणे तस्योपलक्षणतया भानं तस्योपलक्षणतया भाने च रूपत्वसामानाधिकरण्येन अन्यतमत्वाभावग्रहप्रतिबन्धमुखेन व्यभिचाराग्रहेणान्यतमत्वे रूपत्वव्यापकत्वग्रह इति परस्पराश्रय इति कदुत्तरमात्रमिदं तस्मात् पार्थिवाद्यन्यतमरूपाणि तादृशान्यतमत्ववन्तीति ज्ञानवतो रूपत्वसामानाधिकरण्येन अन्यतमत्वाभावग्रहेण तद्वृत्तित्वस्य रूपत्वे ग्रहणाद् रूपत्वव्यापकत्वमन्यतमत्वे दुर्ग्रहमत एवान्यतमत्वस्योपलक्षणतया भानाभावेन पार्थिवाद्यन्यतमरूपं वायुत्वाभावव्याप्यमिति निश्चयवतोऽपि संशयोपपत्तिः। यस्य रूपाणि सर्वाणि वायुत्वाभावव्याप्यानीत्येव रूपत्वावच्छेदेन तद्ग्रहस्तस्य संशयाभावस्तूभयमतेऽपीष्ट एव।

प्रकृते च त्वन्मते प्रत्यक्षीभूतधूमे एतत्त्वनिश्चयेन धूमान्तरस्यात्यन्तमज्ञानेन एतत्त्वाभाववद्वृत्तित्वज्ञानं धूमत्वेऽसम्भावितमेव, तथा च व्यापकत्वेन गृहीतस्य तस्योपलक्षणतयैव भानान्मूलोक्तसंशयो दुरुपपाद एवेति सामान्यलक्षणा स्वीकरणीयैव।

पक्षधरमिश्रो[१] हि सामान्याभावभानार्थं सामान्यलक्षणप्रत्यासत्तेरभ्युपगममावश्यकं मन्यते, अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया सामान्यलक्षणाया अभावे घटादिसामान्याभावप्रतियोगिनः समग्रस्य घटादेर्ज्ञानासम्भवेन घटादिसामान्याभावस्य भानं न स्यात्।

दीधितिकारो मतमिदं निराचिकीर्षुर्ब्रवीति यद् अभावस्य ज्ञानमात्रे लौकिकप्रत्यक्षे वा प्रतियोगिज्ञानस्य कारणत्वं नास्ति सामान्यलक्षणावादिमते यस्य कस्यचिद् घटाभावादेः प्रत्यक्षानन्तरम् अभावत्वप्रत्यासत्त्या जायमाने अभावत्वमात्रेण अभावान्तरावगाहिनि प्रत्यक्षे इदन्त्वादिना सन्निकृष्टस्याभावस्य लौकिकप्रत्यक्षे च प्रतियोगिज्ञानस्य व्यभिचारात्।

एवं चाभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वासिद्धया सामान्याभावभानार्थं समग्रप्रतियोगिनो ज्ञानस्यानावश्यकतया तदुपपत्तये सामान्यलक्षणायाः कल्पनमनावश्यकम्।

न चाभावबुद्धौ प्रतियोगिज्ञानस्याहेतुत्वे घटादिज्ञानं विनापि घटो नास्तीत्याकारकाभावप्रत्यक्षापत्तिरिति वाच्यम् उक्तबुद्धेर्घटत्वविशिष्टवैशिष्ट्यावगाहिबुद्धित्वेन तत्कारणीभूतस्य घटत्वप्रकारकज्ञानस्य विरहादेव घटादिज्ञानदशायाम् उक्तप्रत्यक्षानुत्पादस्य सम्भवात्।

१. यत्तु सामान्याभावभानार्थं सा स्वीकार्या, तां विना सकलतत्प्रतियोगिज्ञानासम्भवादिति। जागदीश्यां सामान्यलक्षणाप्रकरणे पृ० सं० १६०।

न चाभावप्रत्यक्षे स्वातन्त्र्येण प्रतियोगिज्ञानस्याहेतुतया प्रतियोगिज्ञानोपपत्तये सामान्यलक्षणप्रत्यासत्तेरनावश्यकत्वेऽपि घटादिसामान्याभावप्रत्यक्षे प्रतियोगिविधया सकलघटादेर्भानोपपत्तये सकलघटादिभिरिन्द्रियसन्निकर्षसम्पादनार्थमेव सामान्यलक्षणा प्रत्यासत्तिरावश्यकीति वाच्यं सामान्याभावप्रत्यक्षे सकलप्रतियोगिविषयकत्वस्यासिद्धत्वात् ।

न चाभावविषयकलौकिकप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याहेतुत्वे घटत्वनिर्विकल्पकानन्तरं विशेष्ये विशेषणमितिरीत्या अभावे घटं घटे च घटत्वमवगाहमानस्य घटाभाव इत्याकारकलौकिकप्रत्यक्षस्यापत्तिर्दुर्निवारा घटत्वप्रकारेण घटवैशिष्ट्यावगाहिबुद्धौ घटत्वप्रकारेण घटज्ञानस्य हेतुत्वाभ्युपगमेन उक्तापत्तिपरिहारसम्भवेऽपि घटस्याज्ञानदशायामिन्द्रियसम्बद्धविशेषणतया 'न' इत्याकारकस्याभावलौकिकप्रत्यक्षस्यापत्तिर्दुर्निवारा अभावप्रत्यक्षं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वे तु प्रागुपस्थितस्य प्रतियोगिनोऽभावांशे विशेषणीभूय भाने बाधकाभावान्न तादृशप्रत्यक्षापत्तिः ।

घटाभावस्य पटत्वावच्छिन्नाभावत्वेन प्रात्यक्षिकभ्रमे घटज्ञानजन्यत्वाभावेन व्यभिचारात् प्रतियोगिज्ञानस्य हेतुत्वानुपपत्तिर्नाशङ्कनीया तद्वारणार्थं घटत्वावच्छिन्नत्वाभावत्वेन प्रत्यक्षं प्रति घटज्ञानत्वेन हेतुताया घटस्याज्ञानदशायामिन्द्रियसम्बद्धविशेषणताप्रत्यासत्त्या न इत्याकारकप्रत्यक्षापत्तिभयेन अभ्युपगमासम्भवेऽपि घटत्वावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपिताभावनिष्ठलौकिकविषयताकप्रत्यक्षं प्रति घटत्वादिप्रकारकज्ञानत्वेन हेतुत्वसम्भवात् तस्य भ्रमप्रमानिर्विकल्पकसाधारणत्वात् प्रकारत्वे प्रतियोगित्वसम्बन्धावच्छिन्नत्वस्य निवेशेन घटो नास्तीति प्रत्यक्षस्य स्वरूपसम्बन्धेन अभावत्वप्रकारकत्वेऽपि असंग्रहाभावाच्च ।

न च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुत्वपक्षे अभावो न घटीय इत्याकारकनिश्चयदशायाम् अभावे घटभानस्यासम्भवेन 'न' इत्याकारकप्रत्यक्षापत्तिर्दुर्निवारेति वाच्यं 'न' इत्याकारकप्रत्यक्षस्य घटत्वावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपिताभावनिष्ठविषयताकत्ववद् दण्डत्वपटत्वादितत्तद्धर्मावच्छिन्नप्रकारतान्यप्रकारत्वानिरूपिताभावनिष्ठविषयताकत्वेन तादृशविषयताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति हेतुभूतस्य तत्तद्धर्मप्रकारकज्ञानकूटस्य एकदा विरहादेव 'न' इत्याकारकप्रत्यक्षस्यापत्त्यसम्भवात् ।

न चैवमभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वसिद्ध्या घटादिसामान्याभावप्रतियोगिनां निखिलघटादीनां ज्ञानार्थं सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्येति वाच्यम् अभावबुद्धौ यावत्प्रतियोगिज्ञानत्वेन कारणत्वकल्पनाया गौरवग्रस्ततया प्रतियोगितावच्छेदकविशिष्टयत्किंचित्प्रतियोगिज्ञानस्यैव कारणत्वकल्पनाया उचितत्वात् तस्य च सामान्यलक्षणप्रत्यासत्तिं विनापि सम्भवात् ।

न च तत्प्रतियोगिकाभावबुद्धौ तज्ज्ञानस्य कारणतया यावत्प्रतियोगिज्ञानस्य कारणत्वमयत्नसिद्धमिति वाच्यम् उक्तकार्यकारणभावे मानाभावात् । प्राचीनमते ध्वंस-प्रागभावात्यन्ताभावानां प्रतियोग्यादित्रितयप्रतियोगिकतया ध्वंसप्रागभावरूपयोः प्रतियोगिनोरग्रहणेऽपि भावात्मकस्यैकस्य प्रतियोगिनो ग्रहमात्रेण तेषां गृह्यमाणतया व्यभिचाराच्च ।

इयमपि दीधितिकारोक्तिर्विचार्यमाणा न सामीचीन्यमञ्चति अत्र भूतले यावान् घटो नास्तीतिबुद्धेर्यावद्घटज्ञानापेक्षत्वाद् यावद्घटज्ञानस्य च सामान्यलक्षणामन्तरा असम्भवात् । न चोक्तबुद्धेरपि घटसामान्याभावबुद्धेर्घटत्वेन यत्किंचिद्घटज्ञानजन्यत्व-मिव यावत्त्वेन यत्किंचिद्घटज्ञानजन्यत्वं स्वीकर्तुमर्हं यावत्त्वस्य यावति घट एव पर्याप्तत्वेन पर्याप्तिसम्बन्धेन यावत्त्वेन एकघटज्ञानस्य दुर्घटत्वात् प्रतियोगितावच्छेद-कताघटकसम्बन्धेनैव च प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्याभावबुद्धौ कारण-त्वात् कालिकेन घटत्वप्रकारकज्ञानदशायां समवायसम्बन्धावच्छिन्नघटत्वनिष्ठावच्छेद-कताकप्रतियोगिताकाभावस्याग्रहणात् ।

सामान्यलक्षणाया अभ्युपगमे तु घटत्वप्रत्यासत्त्या निखिलघटानामुपस्थितौ सत्यां यावत्त्वेन निखिलघटज्ञानस्य सम्भवेन दोषाभावात् ।

## तमःप्रत्यक्षानुरोधेन सामान्यलक्षणाया अभ्युपगमसम्बन्धे दीधितिकृतो मतस्य विमर्शः

न्यायमते तमः स्वपरप्रकाशकतेजःप्रतियोगिकयावत्संसर्गाभावरूपं चक्षुर्वेद्यं च । अतः तत्प्रत्यक्षोपपत्तये सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्या, अन्यथा अभाव-प्रत्यक्षे प्रतियोगिबुद्धेर्हेतुतया यावतां तमःप्रतियोगितेजसामग्रहणे तत्प्रत्यक्षं न स्यादिति सामान्यलक्षणावादिनां प्राचीनविदुषां मतम् ।

उक्तं[1] मतं निराचिकीर्षुणा दीधितिकृता उक्तं यत्तमो न तत्तत्तेजोऽभावसमुदायरूपं किन्तु तेजोविशेषसामान्याभावरूपम्, तेजोविशेषत्वं च तेजस्त्वव्याप्या स्वपरप्रकाशक-तेजोनिष्ठा विलक्षणा जातिस्तदवच्छिन्नप्रतियोगिताकसामामान्याभाव एव तमः, अतस्त-

१. अन्धकारस्तु तेजोविशेषसामान्याभावो नाभावसमुदायः, यावत्तदभावानामेकत्र असम्भ-वाद्, अननुगमाद्, गौरवात्, तेजोविशेषत्वादिज्ञानस्य तेजःसामग्र्याश्च विरहेऽपि तेजोविशेषात्यन्ताभावप्रागभावानां प्रत्यक्षानभ्युपगमात् । जागदीश्यां सामान्यलक्षणा-प्रकरणे पृ० सं० १८६ ।

त्प्रत्यक्षे उक्तजात्यात्मकतेजोविशेषत्वेन यत्किंचित्तेजोज्ञानमात्रमेव प्रतियोगितावच्छेदक-प्रकारकप्रतियोगिज्ञानरूपकारणविधया अपेक्षितम्, तच्च सामान्यलक्षणाप्रत्यासत्तिं विनापि सुघटम्।

किं च यदि उक्तविधतेजोऽभावसमुदायस्य तमस्त्वं मन्येत तदा तमसः कुत्रापि कदापि वृत्तित्वं न स्यात् तत्तत्तेजोध्वंसस्य तत्तत्तेजःप्रागभावस्य च तादृशतेजोऽभाव-समुदायान्तर्गतत्वात् तयोश्च एकत्र एककालेऽसत्त्वात्।

यदि पुनस्तत्तेजोऽभावसमुदायो यावन्ति तादृशतेजांसि तत्तद्व्यक्तित्वेतरधर्मा-नवच्छिन्नतत्तद्व्यक्तिनिष्ठप्रतियोगिताकसमानाधिकरणाभावसमुदायात्मना परिष्क्रियेत तदापि तस्य तमोरूपत्वं न वक्तुं शक्यम्, तादृशाभावानामनुगतैकधर्मशून्यतया तम इत्येवंविधाया अनुगताकारायाः प्रत्यक्षप्रतीतेरुपपादयितुमशक्यत्वात्।

यदि चैकैकतादृशतेजोऽभावविशिष्टापरापरतादृशतेजःप्रतियोगिकाभावत्वेन अनुगमय्य तादृशतेजोऽभावसमुदायस्य तमस्त्वं मन्येत तर्हि तदपि नोचितम् असंख्यानां तादृशतेजोऽभावव्यक्तीनां तम इत्याकारकप्रतीतिविषयतायाः कल्पने गौरवात् तदपेक्षया एकस्य तेजोविशेषसामान्याभावस्य तमःप्रतीतिविषयत्वकल्पने लाघवेन तेजोविशेष-सामान्याभावस्यैव तमोरूपत्वकल्पनाया औचित्यात्।

यदि चेत्थं तर्क्येत यत् तेजोविशेषसामान्याभावस्य सन्निकर्षकाले तादृशतेजोऽ-भावसमुदायस्यापि अवश्यं सन्निकृष्टतया सर्वेषां तादृशतेजोऽभावानामपि तमःप्रतीति-विषयताया अनिवार्यत्वेन गौरवोद्भावनन्नोचितम् अतस्तेजोविशेषसामान्याभावस्य तादृशतत्तत्तेजोऽभावसमुदायस्य वा तमस्त्वाभ्युपगमे विनिगमनाविरहेण उभयोरेव तयोस्तमोरूपतायाः स्वीकारस्यौचित्येन तादृशतत्तत्तेजोऽभावप्रत्यक्षोपपत्तौ प्रतियोगि-भूतानां तत्तेजसां ग्रहणार्थं सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्या, परमिदं न शोभनम्, सामान्यलक्षणप्रत्यासत्तेरभ्युपगमेऽपि तेजस्त्वेनैव तत्तत्तेजसां ग्रहणस्य सम्भव-दया तादृशतत्तत्तेजस्त्वेन तादृशतेजसां सामान्यलक्षणप्रत्यासत्त्यापि ग्रहणस्यासम्भवेन तादृशतत्तत्तेजोऽभावसमुदायस्याप्रत्यक्षताया एव स्वीकार्यत्वात्।

किन्तु दीधितिकृतः कथनमिदं विचार्यमाणं न युक्तियुक्ततां भजते, यतस्तमो यदि तेजोविशेषसामान्याभावरूपमपि स्यात् तदापि तत्प्रत्यक्षे प्रतियोगिविधया सर्वेषां तेजो-विशेषाणां भानमभ्युपेयमेव तस्य तेजोविशेषत्वेन यावत्तेजोविशेषप्रतियोगिकतया यत्किंचित्तेजःप्रतियोगित्वेन तद्भानस्वीकारस्यानौचित्यात्।

एवं च प्रत्यक्षे इन्द्रियसन्निकृष्टस्यैव भाननियमेन तेजोविशेषसामान्याभावात्मक-तमःप्रत्यक्षे अभावांशे भासमानस्य यावतस्तेजोविशेषस्य सन्निकृष्टतया अवश्यं स्वीकार्यत्वात् तस्य च सन्निकर्षस्य ज्ञानलक्षणस्यैव स्वीकरणीयतया तदर्थं सामान्यलक्षण-

प्रत्यासत्तेरवश्यं स्वीकरणीयत्वाद् अन्यथा यावतस्तेजोविशेषस्यासन्निकृष्टतया अभावांशे विशेषणविधया तमःप्रत्यक्षे भानासम्भवात्।

यत्तु इदमुक्तं यत् सामान्यलक्षणप्रत्यासत्तेरभ्युपगमेऽपि तेजस्त्वेन तेजस्त्वव्याप्य-जातिविशेषरूपेणैव वा तत्तत्तेजसां ग्रहणसम्भवेन तत्तत्तेजस्त्वेन तत्तत्तेजसो ग्रहणस्या-सम्भवतया तत्तत्तेजःप्रतियोगिकाभावप्रत्यक्ष न सम्भवतीति तन्न समीचीनं तेजो-विशेषसामान्याभावस्यापि तेजोविशेषत्वेन यावत्तेजोविशेषप्रतियोगिकत्वात् तत्प्रत्यक्षे तेजोविशेषत्वेनैव यावतां तेजोविशेषाणामभावांशे भानवत् तत्तत्तेजोऽभावसमुदायेऽपि तत्तत्तेजसां विशेषणविधया भानस्वीकारेण तत्तत्तेजस्त्वेन तेजस्त्वेनैव तत्तत्तेजोग्रहण-स्यानावश्यकत्वात्। तेजस्त्वेनापि च तावतो निखिलतेजोविशेषस्य सामान्यलक्षण-प्रत्यसत्तिं विना ग्रहणासम्भवात्।

## प्रागभावप्रत्यक्षानुरोधेन सामान्यलक्षणप्रत्यासत्तेरभ्युपगमनीयतायां दीधितिकृन्मतविमर्शः

प्रागभावप्रत्यक्षस्योपपत्तये सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्या, तथा हि प्रागभावोऽनागतप्रतियोगिक एवेति निर्विवादम्, अतोऽभावप्रत्यक्षे प्रतियोगिज्ञानस्य हेतुतया अनागतप्रतियोगिज्ञानं विना प्रागभावप्रत्यक्षं न सम्भवति, प्रागभावस्य प्रत्यक्षत्वं च सर्वसम्मतम्, अतः प्रागभावप्रत्यक्षे हेतुभूतस्यानागतप्रतियोगिज्ञानस्योपपत्तये सामान्यलक्षणप्रत्यासत्तिर्नूनं स्वीकार्या तां विना अनागतस्य ज्ञानासम्भवात्।

यद्येव च्येत यदिदानीमत्र घटप्रागभाव इत्याकारकप्रत्यक्षं प्रागभावांशे घटत्व-विशिष्टवैशिष्ट्यबुद्धिरूपमतस्तत्र हेतुविधया घटत्वप्रकारकज्ञानमात्रमपेक्षितं विशिष्ट-वैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानत्वेनैव कारणतया कारणतावच्छेदककोटौ विशेषणस्याप्रवेशेन घटत्वेन यस्य कस्यचिद् घटस्य ज्ञानेनापि उक्तस्य प्रागभावप्रत्यक्ष-स्योत्पत्तिसम्भवादिति सामान्यलक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक इति तदापि प्रयोजना-न्तरानुरोधेन सामान्यलक्षणप्रत्यासत्तेः स्वीकारोऽनिवार्य एव तथा हि इदानीमत्र घटप्रागभाव इति प्रत्यक्षस्य प्रागभावांशे विशेषणविधया अनागतघटावगाहित्वमेव मन्तव्यम्, जातस्य घटस्य विशेषणविधया तत्र भाने उक्तप्रत्यक्षस्य जातघटाभाववति प्रागभावे जातघटावगाहितया भ्रमत्वापत्तेः। अनागतघटस्य भानं च अनागतघटे सन्निकृष्ट एव सम्भवति, स च सन्निकर्षो लौकिकसन्निकर्षबाधाद् ज्ञानलक्षणात्मक एव मन्तव्यः स च सामान्यलक्षणां विना दुर्घट इति।

परमुक्ता[१] युक्तिर्दीधितिकृते न रोचतेऽतस्तेन सामान्यलक्षणाया अभ्युपगमस्यौचित्यं न मन्यते, तस्यायमाशयः—यदिदानीमत्र घटप्रागभाव इत्याकारकः प्रत्ययो न लोकसिद्धः किन्तु अत्र घटो भविष्यतीत्याकारक एव प्रत्ययो लोकसिद्धः स च घटांशे भविष्यत्त्वविषयकः भविष्यत्त्वं च न वर्तमानप्रागभावप्रतियोगित्वरूपं वक्तुं शक्यं श्वोभाविघटप्रतियोगिकस्य प्रागभावस्य अद्यापि वर्तमानतया श्वोभाविनि अद्य भविष्यतीतिप्रत्ययप्रसङ्गात्, किन्तु भविष्यतीतिशब्दस्य उत्पत्स्यत इति शब्दस्य समानार्थकतया वर्तमानप्रागभावप्रतियोग्युत्पत्तिकत्वं, वर्तमानकालोत्तरकालोत्पत्तिकत्वमेव वा भविष्यत्त्वं वाच्यं तथा च भविष्यत्त्वस्यातीन्द्रियोत्पत्तिघटिततया प्रत्यक्षविषयत्वासम्भवेन उक्तप्रत्ययस्य प्रत्यक्षभिन्नताया एवाभ्युपगमनीयतया अनागतभानार्थं सामान्यलक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक एव।

न च भविष्यत्त्वस्यातीन्द्रियत्वेन लौकिकप्रत्यक्षाऽसम्भवेऽपि तदंशेऽलौकिके घटो भविष्यतीतिप्रत्यक्षे अनागतघटभानार्थं सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्या, तस्य जातघटविषयकत्वाभ्युपगमे भ्रमत्वप्रसङ्गादिति वाच्यम्, एतद्घटपूर्ववर्त्तिघटदृष्टान्तेन घटत्वहेतुना जायमानायां वर्तमानघटे घटपूर्वत्वानुमितौ योग्यताबलेन अनागतघटस्य भानेन सामान्यलक्षणप्रत्यासत्तिं विनापि अनुमानादेव अनागतघटस्य ग्रहणसम्भवेन घटो भविष्यतीति भविष्यत्त्वविषयकेऽलौकिके प्रत्यक्षे ज्ञानलक्षणप्रत्यासत्त्या अनागतघटभानसम्भवात्।

न च घटानुत्पत्तिकाले इदानीमिह कपाले घटो नास्तीति प्रत्यक्षप्रत्ययः सर्वानुभवसिद्धोऽतस्तत्र अभावांशे अनागतघटस्य भानोपपादिकाया ज्ञानलक्षणप्रत्यासत्तेरुपपत्तये सामान्यलक्षणप्रत्यासत्तिरवश्यमभ्युपगन्तव्येति वाच्यम्, उक्तप्रत्ययस्य घटात्यन्ताभावविषयकतयैवोपपत्तेः।

न चोक्तप्रत्यय एतत्कपाले एतत्कालावच्छेदेन घटाभावमवगाहते घटात्यन्ताभावश्च नित्यतया न कालावच्छेद्योऽतस्तस्यात्यन्ताभावविषयकत्वाभ्युपगमो नोचित इति वाच्यं भाविनि नष्टे वा घटे इह कपाले घटो नास्तीति प्रत्ययानुरोधेन अत्यन्ताभावस्यापि कालावच्छेदेन वृत्तिताया आवश्यकत्वात्। अयम्भावः—उक्तप्रत्ययो हि घटप्रतियोगिकाभावमात्रमवगाहते इति न वक्तुं शक्यं यत्किंचिद्घटवत्यपि घटो नास्तीतिप्रत्ययप्रसङ्गादत उक्तप्रत्ययो घटत्वावच्छिन्नप्रतियोगिताकमभावमवगाहते इत्येव वक्तव्यम्, एवं च ध्वंसप्रागभावयोः प्रतियोगितायां घटत्वाद्यवच्छिन्नत्वस्यासम्भवतया उक्तप्रत्ययस्य घटात्यन्ताभावविषयकत्वाभ्युपगमोऽवश्यं स्वीकार्यः।

---

१—प्रागभावप्रत्ययोऽपि च प्रतियोगिवृत्तिघटत्वादिप्रकारकज्ञानसाध्यो न प्रतियोगिज्ञानमपेक्षते।

## प्रागभावोऽसिद्ध इति तत्प्रत्यक्षानुरोधेन सामान्यप्रत्यासत्तिरनावश्यकीति दीधितिकृदुक्तिविमर्शः

वस्तुतस्तु प्रागभावो नास्त्येव प्रमाणाभावात्, न चोत्पन्नस्य पुनरुत्पत्त्यापत्तिपरिहाराय कार्यं प्रति प्रागभावस्य कारणताया अवश्यमभ्युपगन्तव्यतया प्रागभावानङ्गीकारो दुर्घट इति वाच्यं कार्योत्पत्तौ कार्यस्य प्रतिबन्धकत्वाभ्युपगमेन उत्पन्नस्य पुनरुत्पत्त्यापत्तिपरिहारसम्भवात् ।

ननु प्रागभावानभ्युपगमे प्रागभावकालवृत्तित्वरूपं सामान्यतः पूर्वत्वं तत्प्रागभावकालवृत्तित्वरूपं च तत्पूर्वत्वं दुर्निर्वचमिति चेन्न प्रागभावं विनापि निर्वचनसम्भवात्, तथा हि सामान्यतः पूर्वत्वं नाम—ध्वंसप्रतियोगिकालवृत्तित्वम् एवं तत्पूर्वत्वं नाम—तदुत्पत्तिकालीनध्वंसप्रतियोगिकालवृत्तित्वम्, इदं च प्रागभावं विनापि सुवचम् ।

न च तत्पूर्वत्वकुक्षौ प्रविष्टोत्पत्तिस्तदधिकरणावृत्तिप्रागभावप्रतियोगिसमयसम्बन्धरूपैव वाच्या सा च विना प्रागभावं दुर्वचेति वाच्यं महाप्रलयानभ्युपगमे स्वाधिकरणसमयध्वंसानधिकरणसमयसम्बन्धरूपाया महाप्रलयाङ्गीकारे च यदीयसम्बन्धसामान्ये यत्समयवृत्तिध्वंसप्रतियोगित्वाभावस्तस्य तत्समयसम्बन्धरूपाया उत्पत्तेः प्रागभावं विनापि निर्वक्तुं शक्यत्वात् ।

न च क्षणत्वस्य स्ववृत्तिप्रतियोगिकप्रागभावानधिकरणसमयत्वरूपतया प्रागभावं विना निर्वचनासम्भवेन तद्घटितोत्पत्तिर्दुर्वचेति वाच्यं स्ववृत्तिध्वंसप्रतियोग्यनाधारत्वेन स्ववृत्तिध्वंसप्रतियोगिप्रतियोगिकयावद्ध्वंसविशिष्टसमयत्वेन वा क्षणस्य वक्तुं शक्यत्वात् ।

न च स्वानधिकरणेषु तन्तुषु पटोत्पत्तिवारणाय सहस्राणां तन्तूनां तत्तत्तन्तुत्वेन तत्तत्पटजनकत्वं वाच्यं तथा च लाघवादेक एव प्रागभावः कल्पनीयः स च स्वाश्रय एव प्रतियोग्युत्पादक इति नातिप्रसङ्ग इति वाच्यं प्रागभावस्वीकारेऽपि तत्तत्तन्तुव्यक्तीनां तत्तच्चरमतन्तुसंयोगव्यक्तीनां वा तत्पटं प्रति विशिष्य हेतुत्वस्यावश्यकत्वेन प्रागभावकल्पनाया अयौक्तिकत्वात् । अयमाशयः—

यदि प्रागभावमभ्युपगम्य तत्तत्पटादिकं प्रति तत्पटादिप्रागभावस्य कारणता न मन्यत तदा यः पटो येषु सहस्रतन्तुषु संयुक्तेषु जायते तत्पटस्य त्रिचतुरेष्वेव तन्तुषूत्पन्नेषु संयुक्तेषु चोत्पत्तिः स्यात्, तत्पटप्रागभावघटितायास्तत्पटसामग्र्यास्तदानीं सत्त्वात् ।

न च तत्पटं प्रति तत्पटप्रागभावाश्रयत्तन्तुत्वेन जनकतया नोक्तापत्तिरिति वाच्यम् अवच्छेदककोटौ प्रागभावस्य प्रवेशेऽप्रवेशे उभयथैव तत्कारणत्वासिद्धेः, प्रवेशे प्रथमान्यथासिद्धिग्रस्तत्वात्, अप्रवेशे च तत्पटप्रागभावाश्रयाणां तन्तूनां तावत्तन्तुत्वेन निर्वाहसम्भवेन प्रागभावस्य हेतुताया अयौक्तिकत्वात्।

न च जनकतया प्रागभावस्यासिद्धत्वेऽपि जनकतावच्छेदकतयैव तत्सिद्धिरभ्युपेयेति वाच्यं कतिपयतन्तुष्वसंयुक्तेष्वपि सहस्रतन्तुसाध्यस्य पटस्योत्पत्तिप्रसङ्गात्।

न च तत्पटप्राक्क्षणवृत्तितत्पटप्रागभावव्याप्ययावत्संयोगानां तत्पटं प्रति जनकत्वस्वीकारेण नोक्तापत्तिरिति वाच्यं कारणतावच्छेदकगर्भे तन्तुसंयोगानां तत्पटप्रागभावव्याप्यत्वेन निवेशापेक्षया तत्पटव्याप्यत्वेन निवेशे लाघवेन जनकतावच्छेदकतयापि प्रागभावासिद्धेः। तदेवं प्रागभावस्य प्रमाणाभावेन असिद्धतया तत्प्रत्यक्षेऽनागतप्रतियोगिनो भानानुरोधेन सामान्यलक्षणप्रत्यासत्तेरभ्युपगमोऽनावश्यक एव।

अत्रैवं विमृश्यते—प्रागभावस्य दीधितिकृता यदप्रत्यक्षत्वमुक्तं तन्न समीचीनं यतो हि इह इदानीं घटप्रागभाव इत्याकारकप्रत्ययस्य यल्लोकासिद्धत्वमुक्तं तन्न यौक्तिकं परकीयप्रत्ययानामवेद्यत्वेन स्वात्मनि तादृशप्रत्ययस्यासिद्धत्वोक्तेः सम्भवेऽपि लोकानां न तादृशप्रत्यय इति वक्तुमशक्यत्वात्, विपुलो हि लोकोऽसंख्यास्तत्र प्रत्येतारोऽतः कस्यापि तादृशः प्रत्ययो न भवतीत्येष निश्चयोऽसर्वज्ञस्य दुर्घटस्तथा च यदि एकस्यापि कस्यचित्प्रत्येतुस्तादृशः प्रत्ययो भवेत् तदा तत्र प्रागभावविशेषणतया भाविनो घटस्य भानोपपादिकाया ज्ञानलक्षणायाः प्रत्यासत्तेरुपपत्तये सामान्यलक्षणप्रत्यासत्तेरभ्युपगमो दुर्वारः।

प्रागभावस्य यदप्रामाणिकत्वं दीधितिकृताऽभ्यधायि तदपि न सम्यग्, एकदैवोत्पन्नेषु संयुक्तेषु च सहस्रतन्तुषूत्पाद्यमानस्य पटस्य अन्यतन्तुषूत्पत्तेर्वारणार्थं तत्पटकारणतया तत्पटप्रागभावकल्पनाया आवश्यकत्वात्। अन्यथा विनिगमनाविरहेण तत्तत्तन्तुसंयोगानां विशिष्य तत्पटं प्रति हेतुत्वं कल्पयित्वा तद्रहितेषु तन्तुषु तत्पटोत्पत्त्यापत्तिवारणे गौरवात्, यतो हि तत्पटारम्भकतत्तत्तन्तुषु तत्पटोत्पत्तेः प्राक् कतिपुचिदपि तन्तुषु द्रव्यारम्भकसंयोगाभावेन पूर्वं तत्पटोत्पत्त्यापत्त्यसम्भवेन प्रागभावपक्षे तत्पटं प्रति संयोगानां विशिष्य हेतुत्वकल्पनाया अनावश्यकत्वात्।

न च तत्पटं प्रति तत्पटवत्त्वेन तन्तूनां कारणत्वकल्पनयापि तन्त्वन्तरेषु तत्पटोत्पत्त्यापत्तेः परिहारसम्भवेन तत्पटोत्पादकतया तत्पटप्रागभावकल्पना अनावश्यकेति शङ्कितुं शक्यं कार्योत्पत्तौ कारणतावच्छेदकविशिष्टकारणस्यैव कार्योत्पत्तेः पूर्वमपेक्षणीयतया तत्पटोत्पत्तेः प्राक् तत्पटविशिष्टतन्तुरूपकारणस्य समवधानासम्भवेन तत्पटोत्पत्तेरसम्भवापत्तेः।

यदि च कारणतावच्छेदकोपलक्षितस्य कारणस्य सत्तामात्रमेव कार्योत्पत्तौ अपेक्षितं स्यात्तदा द्रव्यचाक्षुषं प्रति चाक्षुषवद् द्रव्यत्वेनापि कारणतायाः सम्भवेन उद्भूतरूपादीनां चाक्षुषप्रत्यक्षं प्रति कारणत्वं भज्येत ।

किं च अनुमित्यादिकं प्रति अप्रामाण्यज्ञानाभावविशिष्टपरामर्शस्य कारणत्वेऽपि अप्रामाण्यज्ञानास्कन्दितपरामर्शदशायामपि अनुमित्यापत्तिः स्यात् तदानीमपि अप्रामाण्यज्ञानाभावोपलक्षितस्य परामर्शस्य सत्त्वात् ।

किं च यः पटः सर्वेषां स्वारम्भकतन्तुसंयोगानां नाशान् नश्यति तत्पटस्य तन्नाशोत्तरं पुनः संयुक्तेषु जनिततत्पटकतन्तुषूत्पत्त्यापत्तिः स्यात् पटजनकानां तन्तूनां तन्तुसंयोगानां चोपस्थितत्वात् ।

यदि तत्पटोत्पादकानां संयोगानां तत्तद्व्यक्तित्वेन तत्पटं प्रति कारणत्वं कल्पयित्वा उक्तापत्तिर्वार्यते तदा महद् गौरवम्, अतस्तादृशापत्तिवारणाय तत्पटजनकतया तत्पटप्रागभावः कल्पनीयः । उक्तस्थले च विनष्टस्य तत्पटस्य प्रागभावविरहादेव न पुनस्तदापत्तिसम्भवः ।

न च तत्पटारम्भकसंयोगोत्पत्तिकाले उत्पन्नायास्तत्पटोत्पादकतन्तुपर्याप्तायाः संख्याव्यक्तेस्तत्पटं प्रति हेतुत्वकल्पनयाऽपि उक्तापत्तिर्वारयितुं शक्यते तत्पटोत्पादकसंयोगनाशकाले तादृशसंख्याव्यक्तेरपि नाशेन तदानीं तादृशसंख्याव्यक्तेरविद्यमानत्वादिति वाच्यं यस्य तन्तोर्द्वितीयक्षण एव तन्त्वन्तरसंयोगस्योत्पत्त्या तृतीयक्षणे सहस्रतन्तुकपटोत्पत्तिस्तस्मिन्नेव तन्तौ व्यभिचारेण तावत्तन्तुपर्याप्तसंख्यायाः कारणत्वकल्पनाया असम्भवात् । एकत्वान्यसंख्यायाः समानाधिकरणद्वयवदेकत्वसापेक्षतया द्रव्योत्पत्तेर्द्वितीयक्षणे एकत्वान्यसंख्याया उत्पत्त्यसम्भवात् ।

इदमप्यत्रावधानमर्हति यत् तत्पटोत्पादकेषु सहस्रतन्तुषु न एकैव सहस्रत्वसंख्या अपि तु पुरुषभेदेन तत्र अनेकाः सहस्रत्वसंख्याः सम्भवन्ति अतो विनिगमनाविरहेण सर्वासामेव तादृशसंख्याव्यक्तीनां तत्तद्व्यक्तित्वेन तत्पटं प्रति कारणत्वस्य कल्पनीयतया अनन्तकार्यकारणभावकल्पनापत्तिः, यदि च तावत्तन्तुपर्याप्तसहस्रत्वसंख्यात्वेन सर्वास्तादृशीः संख्या अनुगमय्य तासां तत्पटोत्पत्तिं प्रति हेतुत्वं कल्प्येत तदा महागौरवं संख्यानिष्ठकारणतावच्छेदकगर्भे सहस्रतन्तूनां प्रवेशात्, तन्तूनां कारणतावच्छेदकगर्भे प्रवेशेन प्रथमान्यथासिद्धिग्रस्ततया तेषां कारणत्वानुपपत्तिरपि, अतस्तत्पटहेतुतया एकस्यैव तत्पटप्रागभावस्य कल्पनमेव न्याय्यम्, धर्मिग्राहकप्रमाणेन कारणत्वेनैव प्रागभावस्य सिद्धतया पदार्थान्तरेण सार्धं विनिगमनाविरहस्य वक्तुमशक्यत्वात् ।

दीधितिकृता उत्पन्नस्य पुनरुत्पत्त्यापत्तिवारणाय प्रागभावमुपेक्ष्य यत् तत्तत्कार्यं प्रति तत्तत्कार्यस्य प्रतिबन्धकत्वमुक्तं तदपि न युक्तं शाखावच्छिन्ने वृक्षे उत्पन्नायाः कपिसंयोगव्यक्तेस्तत्रैव पुनरुत्पत्त्यापत्तेर्वारयितुमशक्यत्वात्, तदुत्पत्त्यनन्तरमपि मूलावच्छेदेन तदभावस्य सत्त्वात्।

प्रागभावाभ्युपगमे तु नायं दोष उत्पन्नायाः कपिसंयोगव्यक्तेः प्रागभावस्य नष्टत्वेन पुनरुत्पत्तेरापादयितुमशक्यत्वात्।

न च तत्तद्देशावच्छेद्यतत्तत्संयोगं प्रति तत्तद्देशावच्छेद्यतत्तत्संयोगाभावत्वेन कारणत्वकल्पनया नोक्तदोष इति वाच्यं तत्तत्संयोगं प्रति तत्तत्संयोगप्रागभावत्वेन कारणत्वकल्पनापेक्षया उक्तकारणत्वकल्पनायां गौरवात्।

न च अवच्छेदकतासम्बन्धेन कप्यादिसंयोगसामान्यं प्रति अवच्छेदकतासम्बन्धेन कप्यादिसंयोगसामान्याभावस्य कारणत्वकल्पनयापि उक्तापत्तेः परिहारः सम्भवति, न च कल्पनायामस्यां गौरवमपि, इति तादृशसंयोगं प्रति तादृशसंयोगप्रागभावस्य कारणत्वकल्पना निर्युक्तिकेति वाच्यं प्रागभावस्य प्रत्यक्षसिद्धतया तमादाय विनिगमनाविरहेण उक्तकारणतायाः कल्पनस्यानौचित्यात्।

किञ्च धारावाहिकप्रत्यक्षस्थले प्रथमक्षणे उत्पन्नस्य निर्विकल्पकस्य चतुर्थक्षणे पुनरुत्पत्त्यापत्तिस्तृतीयक्षणे प्रथमक्षणोत्पन्नस्य निर्विकल्पकस्य नाशेन कार्यरूपस्य प्रतिबन्धकस्याभावसौलभ्यात्, तत्तत्कार्यं प्रति तत्तत्कार्यप्रागभावस्य कारणत्वकल्पनया च नैष दोष उत्पन्नस्य प्रागभावविरहात्।

तादात्म्यसम्बन्धेन कार्यं प्रति प्रतियोगितासम्बन्धेन प्रागभावस्य कारणत्वकल्पनया च न कार्याणां तत्प्रागभावानां चानन्त्येन कार्यप्रागभावयोः कार्यकारणभावकल्पनायामानन्त्यापत्तेरप्यभावात्।

## सामान्यलक्षणसाधकमिश्रोक्तयुक्तेर्दीधितिकृत्कर्तृकनिराकरणविमर्शः

मिश्रो ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहस्योपपत्तये सामान्यलक्षणप्रत्यासत्तेरभ्युपगममावश्यकं मन्यते। तस्यायमाशयः—यद् यत्र ज्ञानेच्छाकृतयः क्रमेणोत्पद्यन्ते तत्र ज्ञानेच्छयोः साक्षात्कारो न भवितुमर्हति यतो हि योग्यविशेषगुणानामात्मनि युगपदुत्पत्तेरनङ्गीकारेण इच्छाकाले ज्ञानस्य साक्षात्कार एवं कृतेः काले इच्छायाः साक्षात्कारो न भवितुमर्हति कृत्यनन्तरं च कृतिसाक्षात्कारकाले इच्छायाः साक्षात्कारस्य कथंचित्सम्भवेऽपि ज्ञानस्य साक्षात्कारो नैव सम्भवति, कृतिजन्मकाले ज्ञानस्य नष्टत्वात् कार्योत्पत्तेरव्यवहितपूर्वकाले विद्यमानस्यैव च कारणत्वादतो ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहोऽसम्भवः।

सामान्यलक्षणप्रत्यासत्तेरभ्युपगमे तु नैष दोषो ज्ञानोत्तरम् इच्छाया अनुत्पादस्थले ज्ञानस्य कृतेश्चानुत्पादस्थले इच्छायाः साक्षात्कारे सति ज्ञानत्वेच्छात्वरूपसामान्यलक्षणप्रत्यासत्त्या सर्वेषां ज्ञानानां सर्वासां चेच्छानामलौकिकप्रत्यक्षसम्भवेन कृतेरपि कस्याश्चिद् लौकिकप्रत्यक्षे सति कृतित्वसामान्यलक्षणप्रत्यासत्त्या सर्वासां कृतीनामपि ज्ञानसम्भवेन ज्ञानेच्छाकृतीनां कार्यकारणभावस्य ग्रहणसम्भवात् ।

[1]दीधितिकारो मिश्रोक्तां युक्तिमिमां निरस्यन् ब्रूते यत् सामान्यलक्षणप्रत्यासत्तेरभ्युपगमे ज्ञानेच्छाकृतीनां स्वरूपग्रहणमात्रमेव सम्भवति न तु तासां पौर्वापर्यमपि सामान्यलक्षणप्रत्यासत्त्या ग्रहीतुं शक्यतेऽतः सामान्यलक्षणप्रत्यासत्तेरभ्युपगमेऽपि ज्ञानेच्छाकृतीनां कार्यकारणभावग्रहोऽसम्भव एव तदौपयिकस्य पौर्वापर्यज्ञानस्याभावादतः इदमेव मन्तव्यं यदिच्छाया अनुत्पादस्थले ज्ञानस्य कृतेरनुत्पादस्थले चेच्छायाः साक्षात्कारे सति प्रतियोगिज्ञानस्य जाततया ज्ञानसामान्यव्यतिरेकस्य इच्छासामान्यव्यतिरेकस्य, एवं कृतिसाक्षात्कारे कृतिव्यतिरेकस्य च ग्रहणसंभवेन ज्ञानसामान्यव्यतिरेके इच्छाव्यतिरेकनियमस्य इच्छासामान्यव्यतिरेके च कृतिव्यतिरेकनियमस्य ग्रहणसम्भवेन च मनसा इच्छां प्रति ज्ञानं कारणं कृतिं प्रति चेच्छा कारणमित्येवं कार्यकारणभावग्रहः सम्भवति ।

यद्यप्येष कार्यकारणभावग्रह इच्छोपधायकं ज्ञानं कृत्युपधायिकामिच्छां च न विषयीकरोति तथापि न काचिद्धानिः, इच्छानुपधायके ज्ञाने इच्छास्वरूपयोग्यत्वरूपाया इच्छाकारणताया एवं कृत्यनुपधायिकायामिच्छायां स्वरूपयोग्यतारूपायाः कृतिकारणताया ग्रहणसम्भवात् ।

तदेवं सामान्यलक्षणप्रत्यासत्तिं विनापि ज्ञानेच्छाकृतीनां मानसस्य कार्यकारणभावग्रहणस्य सम्भवेन तदर्थं सामान्यलक्षणप्रत्यासत्तेः कल्पनमयौक्तिकम् ।

किन्तु दीधितिकारस्य निराकरणमिदं न सम्यग्, इच्छोपधायके ज्ञाने कृत्युपधायिकायामिच्छायां न इच्छाकृत्योः कार्यकारणभावग्रहस्योपपत्तये सामान्यलक्षणप्रत्यासत्तेरभ्युपगमस्यावश्यकत्वात् ।

यच्च दीधितिकृता इदमुक्तं यत्सामान्यलक्षणप्रत्यासत्त्या ज्ञानत्वेच्छात्वाभ्याम् इच्छाकृत्युपधायकयोर्ज्ञानेच्छयोर्ग्रहणसम्भवेऽपि ज्ञानेच्छयोरिच्छाकृत्योश्च पौर्वापर्यस्य

---

१–पौर्वापर्यापरिचये धर्मिस्वरूपग्रहेऽपि कारणत्वग्रहासम्भवाद् इच्छाकृत्यनुत्पादस्थले ज्ञानेच्छयोः साक्षात्काराद्, ज्ञानेच्छासामग्र्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहे मनसा कार्यकारणभावग्रहस्य अवश्याभ्युपेयत्वात् । जागदीश्यां सामान्यलक्षणाप्रकरणे पृ० ३०३ ।

ग्रहीतुमशक्यतया कार्यकारणभावग्रहो न भवितुमर्हतीति तन्न युक्तं ज्ञानत्वरूपेण गृहीते इच्छोपधायकज्ञाने एवमिच्छात्वरूपेण गृहीतायामिच्छायाम् इच्छाकृत्योर्व्यभिचारस्य अज्ञानमात्रेणापि उक्तज्ञानेच्छासामान्यव्यतिरेकनियतेच्छाकृतिव्यतिरेकग्रहेण कार्य-कारणभावग्रहसम्भवात् ।

## सामान्यलक्षणायाः प्रत्यासत्तित्वसाधकप्रगल्भोक्तयुक्ते-दीधितिकारीयनिराकरणविमर्शः

सामान्यलक्षणप्रत्यासत्तिं साधयितुकामेन प्रगल्भेनेदमुक्तं यदिदं गोपदशक्यताव-च्छेदकं गोत्वादित्यत्र तादात्म्येन गोत्वस्य अथवा अयं सास्नावान् गोत्वादित्यत्र समवायेन गोत्वस्य गोत्वत्वेन साध्यव्याप्तिर्ग्राह्या, गोत्वत्वं च गवेतरावृत्तित्वे सति सकलगोवृत्तित्वम् तच्च सकलगोघटिततया सकलगवां ग्रहणं विना ग्रहीतुमशक्यमिति तद्ग्रहौपयिकस्य सकलगोग्रहस्योपपत्तये सामान्यलक्षणा प्रत्यासत्तिरवश्यमभ्यु-पगन्तव्या ।

उक्तं[1] मतं निराकुर्वता दीधितिकृता इदमुक्तं यद् गोत्वत्वकुक्षौ सकलगोवृत्तित्वं गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपं न तु तत्तद्गोव्यक्तिवृत्तित्वरूपं तथा सति सामान्यलक्षणयापि गोत्वेनैव गवां ग्रहणेन तत्तद्व्यक्तित्वेन सर्वगवां ग्रहीतुमशक्यतया गोत्वत्वस्य ग्रहणानुपपत्तेः, गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं च गोत्वेन यत्किञ्चिद्गोग्रहणेऽपि ग्रहीतुमर्हमिति गोत्वत्वग्रहणानुरोधेन सामान्यलक्षणप्रत्यासत्तेः कल्पनमनावश्यकम् ।

परं दीधितिकृतो निराकरणमिदं न युक्तिसङ्गतं गोनिष्ठान्योन्याभावप्रति-योगितानवच्छेदकत्वशरीरेऽपि गोत्वेन सर्वासां गवां प्रवेशस्यावश्यकत्वादन्यथा तद्रूप-वत्यास्तद्गोव्यक्तेः प्रत्ययमात्रदशायां तद्गवीयरूपेऽपि गोनिष्ठान्योन्याभावप्रतियोगिता-नवच्छेदकत्वस्य ग्रहणसम्भवेन तत्र गोपदशक्यतावच्छेदकत्वस्याभावेन गोत्वत्वरूपेण गोत्वे गोपदशक्यतावच्छेदकत्वव्याप्तेर्ग्रहीतुमशक्यतया तदानीं गोत्वलिङ्गेन गोपद-शक्यतावच्छेदकत्वानुमितेरनुपपत्तिप्रसङ्गात्, गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदक-गर्भे सकलगवां प्रवेशे च तद्ग्रहणार्थं सामान्यप्रत्यासत्तेरावश्यकत्वात् ।

---

१–गोत्वे च गोनिष्ठात्यन्ताभावाऽप्रतियोगित्वेन समवेतत्वेन च विशेषितमविशेषितं वा गवेतराऽसमवेतत्वं व्याप्यतावच्छेदकं न तु सकलगोवृत्तित्वविशेषितम् । सामान्य-लक्षणयाऽपि ग्रहीतुमशक्यत्वात् । जागदीश्यां सामान्यलक्षणाप्रकरणे पृ॰ सं॰ ३०९-३११ ।

किंच गोनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वघटितरूपेण गोत्वस्य व्याप्यत्वे गौरवमतः सकलगोवृत्तित्वघटितरूपेणैव तस्य व्याप्यत्वमभ्युपेयम्, सकलगोवृत्तित्वं च तत्तद्गोवृत्तित्वरूपं सदपि गोवृत्तित्वत्वेनैव तद्घटकम्। तत्तद्व्यक्तित्वेन न सकलगो-ग्रहणापेक्षा किन्तु गोत्वेनैव सकलगोग्रहणापेक्षा, सा च सामान्यलक्षणप्रत्यासत्त्या सम्भवत्येव, अतः सकलगोवृत्तित्वस्य सामान्यलक्षणप्रत्यासत्त्या अशक्यग्रहणत्वं यद्दीधितिकृतोक्तं तन्न सम्यगित्येवं प्रगल्भोक्तरीत्यापि सामान्यलक्षणप्रत्यासत्तेः साधनं निराबाधमेव।

## पाकादिचिकीर्षायाः सुखादीच्छायाश्चानुरोधेन सामान्य-प्रत्यासत्तेरभ्युपगमविषये विमर्शः

सामान्यप्रत्यासत्ति साधयितुकामैः कैश्चिद् विपश्चिद्भिरिदमुच्यते यन्मनुष्यस्य पाकादौ चिकीर्षा सुखादाविच्छा च सर्वजनसिद्धा, सा च सिद्धे पाकादौ सुखादौ च न भवितुमर्हति विषयसिद्धेरिच्छां प्रति प्रतिबन्धकत्वादतोऽसिद्धे पाकादावेव चिकीर्षा असिद्धे सुखादावेव चेच्छा मन्तव्या, इच्छा च इष्यमाणस्य सामान्यज्ञानेनैव साध्या, अतोऽसिद्धस्य पाकादेः सुखादेश्च सामान्यरूपेण ज्ञानं विना न तत्सम्भव इत्यसिद्धानां पाकादीनां सुखादीनां च ज्ञानार्थं सामान्यलक्षणा प्रत्यासत्तिरवश्यमभ्युपेया, तत्सत्त्वे पाकत्वेन निखिलपाकानां सुखत्वेन निखिलसुखानां च ज्ञानसम्भवेन सिद्धपाकसुखादिकं विहाय असिद्धपाकसुखादाविच्छा सम्भवति।

मतमिदं निराकुर्वता चिन्तामणिकृता इदमभिहितं यद् असिद्धस्य पाकादेर-ज्ञानेऽपि सिद्धपाकादिविषयकज्ञानादेव असिद्धे पाकादौ इच्छोत्पत्तेः सम्भवेन नोक्त-युक्त्या सामान्यप्रत्यासत्तिः सोढुमर्हा। न च विषयतासम्बन्धेन इच्छां प्रति विषयता-सम्बन्धेन ज्ञानस्य कारणत्वमवश्यमभ्युपेयम्, अन्यथा अज्ञातेऽपि इच्छोत्पत्तिप्रसङ्गादतः सिद्धपाकादिज्ञानाद् अज्ञाने असिद्धपाकादाविच्छोत्पत्तेः समर्थनमसङ्गतमिति वाच्यं ज्ञानेच्छाकृतीनां समानविषयकत्वेन कार्यकारणभावानभ्युपगमात् समानप्रकारकत्वेन कार्यकारणभावाभ्युपगमेऽपि दोषाभावात्, अज्ञाते इच्छा नोत्पद्यते इति नियमाभावाद् यद्रूपप्रकारकज्ञानं न भवति तद्रूपप्रकारिकैवेच्छादिर्न जायत इत्येव नियमात्।

न च विनिगमनाविरहेण समानप्रकारताप्रत्यासत्त्या इव समानविषयताप्रत्या-सत्त्या अपि ज्ञानेच्छाकृतीनां कार्यकारणभावस्य स्वीकार्यतया अज्ञाते इच्छादीनामुदयो नैव समर्थयितुं शक्य इति वाच्यं समानविषयकज्ञाने सत्यपि समानप्रकारकज्ञानाभावे इच्छाकृत्योरनुदयेन समानप्रकारताप्रत्यासत्त्या कार्यकारणभावस्यावश्यक्लृप्तत्वात्।

किन्तु चिन्तामणिकृतः कथनमिदं कमनीयं न प्रतिभाति शुक्त्यादिज्ञानाद् रजतत्वप्रकारकरजतविषयकेच्छाद्यापत्तिवारणाय समानविषयकत्वेनापि ज्ञानेच्छाकृतीनां कार्यकारणभावस्यावश्यकत्वात् ।

यत्तु दीधितिकृता[१] सामान्यप्रत्यासत्तिसाधिकाया उक्तयुक्तेर्निराकरणाय इदमुक्तं यत् सिद्ध एव पाकादौ चिकीर्षा, सिद्ध एव सुखे चेच्छा भवितुमर्हति तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानस्यैव विरोधितया तादृशज्ञानाभावदशायां सिद्धेऽपि तत्प्रकारकेच्छाया उत्पत्तौ बाधकाभावात् ।

यद्युक्तरीत्या सिद्धे इच्छोत्पत्तिर्न मन्येत तदा बहुतरकालात् प्रोषितस्य प्रोषणकाले मृतकान्ताकस्य मरणाज्ञाने कान्तावलोकनेच्छा न स्याद् जातानां कान्तावलोकनानां सिद्धत्वात् कान्ताया मृतत्वेन तदवलोकनान्तरस्य चासिद्धत्वात् इतो यथा कान्तावलोकन-त्वावच्छेदेन सिद्धत्वज्ञानाभावात् सिद्धे एव कान्तावलोकने इच्छाया उदयो मन्यते तथैव सिद्धे सुखादावपीच्छाया उदयोपपत्तिसम्भवेन असिद्धसुखादिज्ञानार्थं सामान्य-प्रत्यासत्तेरभ्युपगमो निरर्थकः ।

परमुक्तरीत्या सिद्धे इच्छायाः समर्थनमनुभवविरुद्धतया न स्वीकर्तुमर्हम् प्राप्तप्रेप्सायाः क्वाप्यदर्शनात् । सिद्धे इच्छोदयानभ्युपगमे या खलु अनुपपत्तिः प्रदर्शिता दीधितिकारेण सा न सङ्गता प्रोषणावधौ कान्ताजीवनकाले प्रसिद्धेषु अन्यकर्तृकतत्का-न्तावलोकनेषु उक्तस्य पुंसः सिद्धत्वज्ञानाभावेन तद्विषयिण्या कान्तावलोकनत्वप्रकार-केच्छायाः सामान्यलक्षणासत्त्वे उपपत्तिसम्भवात् ।

दीधितिकारोऽसिद्धसुखादेः[२] प्रकारान्तरेण ज्ञानमुपपाद्य तदर्थं सामान्यलक्षणाया प्रयोजनवत्तां निराचकार । तत्प्रकारान्तरं चानुमानरूपं यथा अयं कालः सुखोत्पत्ति-कालीनध्वंसप्रतियोगी सुखवत्कालत्वात्, सुखोत्पत्तिमदेतत्कालपूर्ववर्त्तिकालवत् । सुव्यक्तमिदं यदेतदनुमानं पक्षीभूतस्य एतत्कालस्य ध्वंसकाले सुखस्योत्पत्त्यैव भवितु-मर्हति, उत्पत्तिश्चैतत्कालध्वंसकाले एतत्कालपर्यन्तं जातस्य सुखस्य न भवितुमर्हति उत्पन्नस्य पुनरुत्पत्तेरनभ्युपगमात् तथा च यत्सुखमादाय एतत्काले सुखोत्पत्ति-

१–सिद्धे एव सुखे सुखत्वेन रूपेणेच्छा, लाघवात्तत्प्रकारकेच्छायां तत्प्रकारावच्छेदेन सिद्धत्वज्ञानमेव हि विरोधि । जागदीश्यां सामान्यलक्षणप्रकरणे पृ० सं० ३२८-३२९ ।

२–वस्तुतस्तु सामान्यलक्षणां विनापि अयं कालः सुखप्रागभाववान् सुखोत्पादकालीन-ध्वंसप्रतियोगी वा कालत्वाद् तादृशकालत्वाद्वा इत्यनुमानादसिद्धसुखस्य तदसिद्धस्य च ज्ञानं सुलभमेव ।

जागदीश्यां सामान्यलक्षणाप्रकरणे पृ० सं० ३३४-३३६ ।

मत्कालीनध्वंसप्रतियोगित्वमुपपत्तुमर्हति तदसिद्धमेव सुखं भवितुमर्हति, तदेवमनेनानुमानेन असिद्धसुखस्य ज्ञातुं शक्यतया तज्ज्ञानार्थं सामान्यप्रत्यासत्तेरभ्युपगमो निरर्थक इति।

किन्तु दीधितिकृतो वचनमिदं वचनीयतामतिशयितुं नार्हति, यतो हि उक्तसाध्यकुक्षौ यदि सिद्धस्य सुखस्य प्रवेशस्तदा पक्षे तदुत्पत्तिकालीनध्वंसप्रतियोगित्वं बाधितम्, असिद्धं सुखं चाज्ञाततया साध्यघटकं न भवितुमर्हत्यत उक्तानुमानेन असिद्धसुखज्ञानस्य सम्भावना सुदूरोपेता, यद्येवमुच्येत यदुक्तसाध्यकुक्षौ सुखस्य न विशेषरूपेण प्रवेशः किन्तु सुखत्वेनैव अतोऽज्ञातसुखमादाय पक्षे सुखोत्पत्तिकालीनध्वंसप्रतियोगित्वसम्भवेन बाधो न भवितुमर्हति तदेतदपि कथनं समीचीनं न भवति, यत उक्तादनुमानात्पूर्वं सुखत्वेनापि ज्ञातसुखस्यैव उपस्थित्या पक्षे सुखोत्पत्तिकालीनध्वंसप्रतियोगित्वाभावग्रहेण बाधस्य दुष्परिहरत्वात्।

इदमत्रावधेयम्—जातित्वेन वह्नित्वमवगाहमानस्य वह्नेरुपनयस्य काले जातिमत्कालीनो धूम इत्येवंविधमेव वह्नेरुपनीतप्रत्यक्षमुदेति न तु स्वरूपतो वह्नित्वेन वह्निविषयकं वह्निकालीनो धूम इति प्रत्यक्षमुदेति अतः स्वरूपतो वह्नित्वेन तत्तद्व्यक्तिविषयकोपनीतप्रत्यक्षं प्रति स्वरूपतो वह्नित्वेन तत्तद्व्यक्तेर्ज्ञानं कारणमित्यवश्यं स्वीकार्यं किन्तु एवंविधः कार्यकारणभावो वह्नित्वेन अवह्निविषयकोपनीतप्रत्यक्षस्थल एव स्वीकार्यो वह्नित्वेन वह्नेरुपनीतस्थले तु वह्नित्वेन वह्निज्ञानमात्रस्यैव वह्नित्वेन वह्निविषयकोपनीतप्रत्यक्षं प्रति हेतुत्वं मन्तव्यं लाघवात्, न तु कारणतावच्छेदकगर्भे तत्तद्वह्निविषयकत्वं निवेश्यं गौरवात्, एवं च वह्नित्वेन कस्यचिदेकस्य वह्नेर्ज्ञानसत्त्वे वह्नित्वेन सकलवह्निविषयकप्रत्यक्षस्य दुर्वारतया सामान्यलक्षणायाः प्रत्यासत्तित्वं प्रसभमुपपद्यते, सामान्यलक्षणाजन्यज्ञानस्य सामान्याश्रयमुख्यविशेष्यकत्वनियमाभावेन यावद्वह्निविषयकस्य वह्निकालीनो धूम इत्याकारकोपनीतप्रत्यक्षस्य सम्भवात्।

न च वह्निकालीनोऽयं धूम इति प्रत्यक्षे वह्नित्वेन यावद्वह्निभाने भ्रमत्वापत्तिः, एतद्धूमे यावद्वह्निकालीनत्वाभावादिति वाच्यं वह्नित्वेनैव यावद्वह्नीनां भानेन भ्रमत्वायोगात्, एतद्धूमस्य यत्किञ्चिद्वह्निकालीनत्वेन तत्र वह्निकालीनत्वाभावस्यासम्भवेन वह्निकालीनत्वाभाववति वह्निकालीनत्वप्रकारकत्वाभावात्।

न च वह्नित्वेन कस्यचिदेकस्य वह्नेर्ज्ञानोत्तरं वह्नित्वेन सकलवह्न्यवगाह्युपनीतप्रत्यक्षं न भवितुमर्हति तत्प्रकारकबुद्धिं प्रति तद्विषयकज्ञानस्य कारणतया वह्नित्वेन एकवह्निकाले वह्न्यन्तरस्याज्ञातत्वेन तदुत्तरं भाविनि ज्ञाने वह्न्यन्तरस्य प्रकारत्वासम्भवादिति वाच्यं तत्प्रकारकप्रत्यक्षे तद्विषयकज्ञानत्वेन कारणतायां मानाभावात्।

घटवद्भूतलमित्यादिज्ञानस्य विशेषणतावच्छेदकीभूतघटत्वप्रकारकज्ञानादेव सम्भवाद्, अयं घट इति प्रत्यक्षस्य च घटघटत्वाभ्यामिन्द्रियसन्निकर्षबलादेव सम्भवेन

तज्जनकतया घटत्वादिविषयकस्य निर्विकल्पकप्रत्यक्षस्यास्वीकारात् । सम्बन्ध-साक्षात्कारे सम्बन्धिद्वयसाक्षात्कारस्य हेतुतया अय घट इत्याकारकस्य घटघटत्व-सम्बन्धसाक्षाकारस्यानुरोधेन घटघटत्वयोर्निर्विकल्पकप्रत्यक्षस्य स्वीकारेऽपि तत्प्रकारक-प्रत्यक्षं प्रति तद्विषयकज्ञानत्वेन कारणत्वकल्पनाया अप्रामाणिकत्वात् ।

न चायं घट इति ज्ञानं विशेषणज्ञानसाध्यं विशिष्टबुद्धित्वादित्यनुमानेन तत्प्र-कारकबुद्धौ तद्विषयकज्ञानस्य कारणतासिद्धिरावश्यकीति वाच्यं विशिष्टबुद्धित्वे विशेषणज्ञानजन्यत्वव्याप्तिग्राहकस्य दृष्टान्तस्याभावाद् अयं दण्डीत्यादिज्ञानस्य दण्डत्व-रूपविशेषणतावच्छेदकप्रकारकज्ञानजन्यत्वेन विशेषणज्ञानजन्यत्वस्यासिद्धतया दृष्टान्त-त्वासम्भवात् ।

न च सामान्यलक्षणास्वीकारे प्रमेयत्वप्रकारेण यस्य कस्यचिदेकस्य ज्ञाने सति प्रमेयत्वसामान्यप्रत्यासत्त्या सर्वेषां पदार्थानां ज्ञानसम्भवेन प्रमेयत्वेन यत्किञ्चित्प्रमेय-विदोऽपि सर्वज्ञत्वापत्तिरिति वाच्यं प्रमेयत्वेन सर्वज्ञतया इष्टत्वात् । न च सर्वस्य सर्व-वित्त्वाभ्युपगमे कस्यापि अयं घटो न वेति संशयो न स्यादिति वाच्यम्, अयं घटो न वेति संशयविरोधिनोऽयं घट इति निश्चयस्य सामान्यप्रत्यासत्त्या जनयितुमशक्यत्वेन तन्नि-श्चयाभावे तत्संशयसम्भवात् । अयमाशयः—

अयं घटो न वेत्यादिसंशयः स्वरूपतो घटत्वं घटभेद चावगाहते अतस्तं प्रति स्वरूपतो घटत्वप्रकारकनिश्चयः प्रतिबन्धको भवितुमर्हति, प्रमेयत्वसामान्यप्रत्यासत्तिर्हि प्रमेयत्वेनैव घटत्वादिकं निश्चाययति, न तु स्वरूपतोऽतः प्रमेयत्वेन घटत्वादिसकल विशेषज्ञानसत्त्वेऽपि विरोधिनिश्चयस्यानुदयेन न तादृशसंशयानुपपत्तिः ।



# केवलान्वय्यनुमानखण्डनविमर्शः

तां केवलान्वयिसुधां सुखदां मतीन्द्रां
मान्यां विचित्रविभवां सुधियां पुरस्तात् ।
भव्यानुमानमहितस्य विधां विधाय
चिन्तामणेर्मतिमतो रमते मनीषा ॥ १ ॥

सत्तर्ककर्कशमतौ सरसीतरङ्गे
भव्यप्रमाणसहितं प्रथितं वरिष्ठम् ।
यत्केवलान्वयिकुलं कमलं सलीलं
बोधोपयोगि धवलं धनिकाय दत्तम् ॥ २ ॥

तत्कीर्त्तिकौतुकलता फलिता रसायां
सद्बुद्धिबोधरसिकस्य मतौ गुहायाम् ।
नैयायिकोद्भटमती रमते सतर्का
ग्राह्यैव सा मतिमतामवबोधकाले ॥ ३ ॥

त्रैविध्यमापन्नमतिर्विभिन्ना
नामानुमा भाति परोक्षतत्त्वा ।
भव्यान्वयं केवलमादधाना
रम्या वरैका रमणीयगात्रा ॥ ४ ॥

सापि द्वितीया व्यतिरेकभूमि-
र्भूमेव भव्या दधते स्वसत्ताम् ।
काम्या तृतीयान्वयतां बिभर्त्ति
बर्भर्ति भव्यव्यतिरेकभूतिम् ॥ ५ ॥

आद्यां सतर्कां सबलैः प्रमाणैः
संस्थाप्य चिन्तामणिकारबोधः ।
तेने प्रकाशं गुणराशिमूलं
शास्त्रीयशोभां शुभदां विचिन्त्य ॥ ६ ॥

बाभाति पूर्वोत्तरपक्षकान्ति
नी वानुमा सा प्रथमा प्रशस्ता ।
चिन्तामणेर्भव्यविभामुपेत्य
लक्ष्ये स्वकीये रमते रमा सा ॥ ७ ॥

प्राचीनतन्त्रे विदुषां कुलेऽपि
भव्या चकास्ति प्रबला मनीषा ।
आद्या प्रकाश्या सबलप्रमाणा
संगोपनीया न कदापि रम्या ॥ ८ ॥

चिन्तामणेर्मण्डितमश्चमान्या
विज्ञैरनेकैः परिवर्धिताऽपि ।
हेया सदा सा जटिला समस्या
ब्रूते रघुस्तर्ककृपाणपाणिः ॥ ९ ॥

व्याप्तिर्न मान्या गुरुतामुपेता
लघ्वी वरा भाति विशिष्टकीर्त्तिः ।
पूर्वैव शोभां जनयत्यजस्रं
निर्दोषचर्चा सफला सतर्का ॥१०॥

तस्याः परायाः परिमण्डितायाः
सिद्धान्तभूतार्थकथाधरायाः ।
व्याप्तेः स्वरूपं न विभाति कम्रं
दोषाकुलाया बुधराजधान्याः ॥११॥

न रमते हरते न मनोहरा
विपुलहेतुधरा गुरुताकरा ।
सहजदोषनिशाचरताधरा
विविधभाण्डकुकाण्डसुसर्जिका ॥१२॥

एवं स्थितौ लक्ष्यकुलं न धत्ते
व्याप्तिस्तु पूर्वा महिता प्रकाम्या ।
नातोऽनुमा सा प्रथमा वरिष्ठा
हेया मुधा व्यर्थकथा कुलीना ॥१३॥

भ्रान्तस्य कस्याप्यनुमा विभाति
नाभ्रान्तबुद्धौ परिभात्यभव्या ।
भेदस्ततो न प्रथमोऽनुमाया
ग्राह्यो वितर्को मणिकारकान्तः ॥१४॥

रघूक्तिरेषा सबलावलेव
पथच्युता भाति न भव्यरूपा ।
परानुभूतौ न परो विभाति
विचित्रवेशोऽपि मनीषिमान्यः ॥१५॥

अनन्तकम्राः परिभान्ति भूमौ
नरा बुधा बोधविशालमाप्ताः ।
कदापि कुत्राप्यनुमा वराकी ।
न भात्यभव्या रमणीव कुब्जा ॥१६॥

विज्ञा अनन्तमनुजा विहरन्ति लोके
कालाद् बहोर्मतिसुधा विविधा विभाति ।
तत्राप्यनन्तविभवा अनुमारसज्ञा
सा केवलान्वयिकथा सुधियाममान्या ॥१७॥

कोलाहलो मतिमतो रघुनाथसूरे-
र्व्यर्थप्रलापभरभारधरो न भाति ।
चिन्तामणेर्मतिमतः परिचिन्तनानि
संचिन्त्य चित्तचषकं चिनुते च चिन्त्याम् ॥१८॥

तत्केवलान्वयिकथा बुधबोधमाप्ता
सिद्धा समस्तसुधियां हरते मलं या ।
सत्तर्कताण्डववरं विशदं विशिष्टं
संभृत्य भूरिविभवेव विभाति भव्या ॥१९॥

विविधवाङ्मयभाषितभासुरा
नयमनीषिमतेः परिचायिका ।
सबलतर्कविभापरिशीलिता
विजयतामनुमा मतिमण्डिता ॥२०॥

परानुभूतिं प्रतिभाधनोऽपि
जनो न वक्तुं प्रबलोऽपि मानी ।
अतोऽनुमाया अनुभूत्यभावो
धिया कया साधयितुं समर्थः ॥२१॥



## दीधितिकृतः केवलान्वय्यनुमानखण्डनविमर्शः

तत्वचिन्तामणिकृता प्रमेयत्वप्रमुखान् कतिपयान् केवलान्वयिपदार्थान् सप्रमाणं प्रतिष्ठाप्य पूर्वोत्तरपक्षोपन्यासपुरःसरं केवलान्वयिसाध्यकानुमानस्य समर्थनं कृतं यथा केवलान्वयिनि[1] संशयाभावात्कथमनुमितिः ? प्रमेयत्वमत्र वर्तते न वेति संशयश्च न प्रमेयपक्षकः किन्तु प्रमेयत्वपक्षको भिन्नविषयकः प्रमेयत्वपक्षके चास्तित्वसाध्यस्यान्वय-व्यतिरेकित्वं तथा च घटः प्रमेयो न वेतिसंशयो मृग्यते स च नास्त्येव। अथ पक्षः साध्यवान् न वा, पक्षे साध्यमस्ति न वेतिसंशयौ समानविषयकावेव, तदस्यास्त्यस्मिन्निति मतुपो विधानादिति चेन्न विशेषणविशेष्यभेदेनार्थभेदात्, मैवम्, य एव हि संशयः पक्षे साध्यसिद्धिविरोधी स एवानुमानाङ्गमावश्यकत्वाल्लाघवाच्च, न तु समानविषयकत्व-मपि तत्र तन्त्रं गौरवात्, प्रमेयत्वं घटनिष्ठात्यन्ताभावप्रतियोगि न वेति संशयश्च घटः प्रमेय इति साध्यसिद्धिविरोधी भवत्येव। यद्वा संशययोग्यतैवानुमानाङ्गं संशयस्य तदानीं विनाशात्। न च सापि साधकबाधकप्रमाणाभावः, प्रमेयत्वाभावासिद्धौ तत्प्रमाणसिद्धेस्तदभावासिद्धिरिति वाच्यं पक्षनिष्ठात्यन्ताभावाप्रतियोगित्वज्ञानस्यैव साध्यसाधकत्वेन तदभावस्यैव योग्यतात्वात्।

किन्तु दीधितिकारेण चिन्तामणिकृतो मतानुमोदने स्वीकायामनभिरुचिं प्रदर्शयता केवलान्वयिसाध्यकानुमानस्य निराकरणं चिकीर्षुणा इदमुक्तं यत् साध्या-भाववदवृत्तित्वरूपैव व्याप्तिः साध्यानुमित्यौपयिकी न तु हेतुव्यापकसाध्यसामानाधि-करण्यरूपा, अस्या हेतुघटितत्वेन तज्ज्ञानस्यानुमितिकारणत्वे हेतुतावच्छेदकभेदेन कार्यकारणभावे आनन्त्यप्रसङ्गात्।

न च शुद्धविशिष्टयोरभेदेन द्रव्यत्वाभाववन्निरूपितवृत्तित्वस्य शुद्धसत्तायां सत्त्वेन गुणकर्मान्यत्वविशिष्टसत्तायामपि तत्सत्त्वस्यानिवार्यतया द्रव्यत्वाभाववदवृत्तित्वेन गुणकर्मान्यत्वविशिष्टसत्तायाः परामर्शस्यासम्भवतया गुणकर्मान्यत्वविशिष्टसत्ताहेतुक-द्रव्यत्वसाध्यकानुमितेरनुपपत्तिपरिहाराय साध्याभाववन्निरूपितवृत्तितानवच्छेदकहेतुता-वच्छेदकस्यैव व्याप्तित्वस्वीकारस्यावश्यकतया साध्याभाववदवृत्तित्वरूपव्याप्तेरपि हेतुता-वच्छेदकघटितत्वेन तज्ज्ञानस्यापि कारणतायां हेतुतावच्छेदकभेदप्रयुक्तमानन्त्यं दुर्निवारमिति वाच्यम् आधेयताया अव्याप्यवृत्तित्वस्वीकारेण सत्तात्वेन विद्यमानस्यापि

१—केवलान्वयिप्रकरणे पृ० सं० १७७–१९०।

द्रव्यत्वाभाववन्निरूपितवृत्तित्वस्य गुणकर्मान्यत्वविशिष्टसत्तात्वेन गुणकर्मान्यत्वविशिष्ट-सत्तायां सम्भवेन द्रव्यत्वाभाववद्वृत्तित्वेन गुणाकर्मान्यित्वविशिष्टसत्ताया द्रव्ये परामर्शो-त्पत्तेर्निर्बाधतया तत्कुक्षौ हेतुतावच्छेदकप्रवेशस्यानावश्यकत्वात्। किं चानुमितिरेव व्याप्तिज्ञानस्य प्रयोजनं सा च गुणाकर्मान्यत्वविशिष्टसत्तया असम्भवन्त्यपि उक्तव्याप्तिमता गुणाद्यात्मकेन हेतुना उपपद्यत एव अत उक्तव्याप्तिकुक्षौ हेतुतावच्छेदकप्रवेशस्याना-वश्यकतया तज्ज्ञानस्यानुमितिकारणतायां हेतुतावच्छेदकभेदेन नानन्त्यप्रसङ्गः।

न च गुणाकर्मान्यत्वविशिष्टसत्त्वं द्रव्यत्वव्याप्यमितिव्यवहारोपपत्तये तत्कुक्षौ हेतुतावच्छेदकस्य प्रवेशोऽनिवार्य इति वाच्यं व्यवहारोपपत्त्यर्थं तत्कुक्षौ हेतुतावच्छेदकस्य प्रवेशेऽपि अनुमित्युत्पत्तये तद्गर्भे हेतुतावच्छेदकप्रवेशस्यानावश्यकत्वात्, अतोऽनुमिति-व्याप्तिज्ञानयोः कार्यकारणभावलाघवानुरोधेन उक्तव्याप्तिज्ञानस्यैवानुमितिकारणताया-औचित्येन केवलान्वयिसाध्यकानुमितिरसम्भवा, प्रमेयत्वादिकेवलान्वयिधर्माणामत्यन्ता-भावप्रतियोगित्वासम्भवेन प्रमेयत्वादेः साध्यताभ्युपगमे उक्तव्याप्तेर्ग्रहीतुमशक्यत्वात्।

न च साध्याभाववद्वृत्तित्वज्ञानस्य साधनविशेषमन्तर्भाव्यानुमितिहेतुत्वे धूमाभाववान् पर्वत इत्येव सिद्धिनिश्चयदशायामपि वह्न्यभाववद्वृत्तिमान् पर्वत इति ज्ञानादनुमित्यापत्तिः स्यादिति वाच्यम्, इष्टत्वात्। यद्धर्मावच्छिन्नप्रकारताकपक्ष-धर्मिकनिश्चयत्वेनानुमितिहेतुत्वं पक्षे तद्धर्मावच्छिन्नाभावनिश्चयस्यैवानुमितिप्रति-कूलत्वात्।

न च धूमलिङ्गकवह्न्यनुमितित्वावच्छिन्नं प्रति आलोकलिङ्गकानुमित्सायाः प्रतिबन्धकतया तदभावदशायां वह्न्यभाववदवृत्तिमान् पर्वत इत्येवं निश्चयादपि धूमलिङ्गकवह्न्यनुमितिप्रसङ्गः, उक्तनिश्चयस्य वह्न्यनुमितिसामान्यं प्रति कारणतया धूमलिङ्गकानुमितिकारणीभूतस्य आलोकलिङ्गकानुमित्साभावस्य सहकारेण तल्लिङ्ग-कानुमितिसम्भवात् सामान्यधर्मावच्छिन्नजनकस्य विशेषधर्मावच्छिन्नसहकारेण विशेष-धर्मावच्छिन्नजनकतायाः सर्वसम्मतत्वात्, न चेष्टापत्तिः पर्वतधर्मिकवह्न्यभाववदवृत्ति-धूमवत्तानिश्चयोत्तरानुमितेरेव धूमलिङ्गकानुमितित्वेन तत्र तादृशानुमित्यनुत्पादस्य सर्वाभ्युपगतत्वात्, तथा च तद्वारणाय पक्षधर्मिकवह्न्यभाववद्वृत्तिधूमवत्तानिश्चयत्वेन तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति कारणतायाः कल्पनीयतया साध्याभाववद-वृत्तित्वज्ञानस्यानुमितिहेतुत्वमतेऽपि हेतुभेदेन कार्यकारणभावभेदो दुर्निवार इति वाच्यं तल्लिङ्गकानुमितौ तदन्यलिङ्गकानुमित्सायाः कामिनीजिज्ञासादिवत् स्वातन्त्र्येण प्रतिबन्धकत्वे मानाभावेन धूमान्यलिङ्गकानुमित्सायां सत्यामपि धूमलिङ्गकपरामर्श-सत्त्वेऽनुमितेरिष्टतया उक्तकल्पनाया अनावश्यकत्वात्।

न च साध्याभाववदवृत्तित्वं साध्याभाववन्निरूपितवृत्तित्वसामान्याभावरूपं साध्याभाववद्वृत्तिभिन्नत्वरूपं च। तथा च तत्तज्ज्ञानस्यानुमितिहेतुत्वे एकज्ञानाभावेऽपि

अन्यज्ञानेनानुमितेरुत्पत्त्या व्यभिचारस्तत्तज्ज्ञानाव्यवहितोत्तरानुमितित्वावच्छिन्नं प्रति तत्तज्ज्ञानस्य कारणत्वाभ्युपगमे गुरुतरधर्मावच्छिन्नकार्यताककारणताद्वयापत्तिः, अनुमितित्वस्य च कस्यचिज्जन्यतानवच्छेदकतयाऽनियम्यत्वापत्तिश्च, अत उक्तयोर्द्विविधसाध्याभाववद्वृत्तित्वयोः साध्यनिरूपितव्यभिचारज्ञानविरोधिज्ञानविषयत्वेनानुगमं कृत्वैव साध्यनिरूपितव्यभिचारज्ञानविषयविषयकज्ञानत्वेन कारणत्वं स्वीकार्यम्, उक्तानुगमको धर्मश्च हेतुव्यापकसाध्यसामानाधिकरण्यसाधारणस्तथा च हेतुव्यापकसाध्यसामानाधिकरण्यज्ञानस्यापि अनुमितिकारणत्वोपपत्त्या तत एव केवलान्वयिसाध्यकानुमितेः सम्भवेन तत्खण्डनमयुक्तमिति वाच्यं व्यापकताज्ञानस्य व्यभिचारबुद्धेरविरोधितया व्यभिचारज्ञानविरोधिज्ञानविषयत्वेन हेतुव्यापकसाध्यसामानाधिकरण्यस्य ग्रहणासम्भवेनोक्तदोषाभावात् ।

अयम्भावः—वह्न्यभाववद्वृत्तिर्धूम इत्याकारकज्ञाने वह्नित्वं स्वरूपेण, प्रतियोगित्वं तदवच्छेदकत्वं च सम्बन्धमर्यादया भासते, उक्तज्ञानस्य स्वावच्छिन्नप्रतियोगितासम्बन्धेनाभावांशे स्वरूपतो वह्नित्वावगाहनात्, एवं च यज्ज्ञानमभावांशे उक्तरूपेण प्रतियोगित्वमवगाहमानं धूमे वह्न्यभाववद्वृत्तित्वमवगाहते तस्यैव उक्तव्यभिचारज्ञानं प्रति प्रतिबन्धकत्वं सम्भवति ग्राह्यज्ञानविषयविरुद्धविषयकत्वात् । किन्तु धूमवन्निष्ठाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्याकारकज्ञानमुक्तव्यभिचारज्ञाने प्रतिबन्धकं न भवितुमर्हति अस्मिन् ज्ञाने वह्नित्वस्य वह्नित्वत्वेन प्रतियोगितायास्तदवच्छेदकतायाश्च धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावप्रतियोगिकुक्षौ प्रकारविधया भानेन अस्य ज्ञानस्य उक्तप्रतिबध्यज्ञानविषयविरुद्धविषयकत्वाभावात् समानप्रकारताकबुद्धेरेव प्रतिबन्धकत्वात् । धूमसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकताया महानसीयत्वविशिष्टवह्नित्वे सत्त्वेन शुद्धवह्नित्वे तदभावासम्भवेन वह्नित्वेन वह्नौ धूमव्यापकताया अनुपपत्तिवारणाय हेतुसमानाधिकरणाभावप्रतियोगितात्वावच्छेदेन यादृशधर्मावच्छेद्यत्वाभावस्तादृशधर्मावच्छिन्नसामानाधिकरण्यस्य, अथ वा हेतुसमानाधिकरणाभावीयसाध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके निवेशे सुतरां तत्तद्व्यापकताघटितव्याप्तिज्ञानस्य व्यभिचारज्ञानाविरोधितया व्यभिचारविरोधिज्ञानविषयविषयकत्वेन व्यापकताघटितव्याप्तिज्ञानस्यानुमितिकारणताया अप्राप्त्या केवलान्वयिसाध्यकानुमानस्य समर्थनासम्भवात् ।

किं च साध्याभाववद्वृत्तिभिन्नत्वस्यापेक्षया साध्याभाववन्निरूपितवृत्तित्वात्यन्ताभावस्य लघुतया तज्ज्ञानस्यैव लाघवादनुमितिहेतुत्वं न तु साध्याभाववन्निरूपितवृत्तितावद्भिन्नत्वज्ञानस्य साध्याभाववन्निरूपितवृत्तित्ववतां धर्मिणां कारणतावच्छेदककुक्षौ प्रवेशे गौरवादतोऽनुगमस्यानावश्यकतया नानुगतरूपेण हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानस्यानुमितिकारणत्वप्राप्तिर्येन केवलान्वयिसाध्यकानुमितेरुपपत्तिः सम्भाव्येत ।

न च साध्याभावाद्यनुपस्थितिदशायां व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानादेवानुमितेरुत्पत्त्या व्यभिचारात् साध्याभाववदवृत्तित्वज्ञानस्य कारणतायाः कल्पयितुमशक्यतया व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्यैवानुमितिकारणताया औचित्येन केवलान्वयिसाध्यकानुमानं सूपपन्नमिति वाच्यं व्यापकताज्ञानादेवानुमितेरुत्पत्तौ प्रमाणाभावात् ।

किं च साध्यतावच्छेदके हेतुव्यापकतावच्छेदकत्वावगाहिनो व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्यानुमितिहेतुत्वमसम्भवदुक्तिकम् ज्ञानत्वत्वेन ज्ञानत्वे हेतुव्यापकतावच्छेदकत्वग्रहे ज्ञानादिमानित्याकारिकायाः स्वरूपतो ज्ञानत्वावगाहिनोऽनुमितेरयोगाद्, यद्रूपावच्छिन्ने व्यापकतावच्छेदकत्वग्रहस्तद्रूपावच्छिन्नप्रकारेणैव साध्यानुमितेरुत्पत्तिनियमाद् यद्रूपावच्छिन्ने हेतुव्यापकतावच्छेदकत्वं गृह्यते तद्रूपानवच्छिन्नप्रकारेणापि अनुमितौ साध्यस्य भानोपगमेऽनुभवत्वव्याप्यगुणत्वव्याप्यजातित्वेन ज्ञानस्य हेतुव्यापकतावच्छेदकत्वग्रहेऽपि ज्ञानवानित्याकारिकाया अनुमितेः प्रसङ्गात् ।

न च स्वरूपतस्तद्धर्मविशेष्यकं हेतुव्यापकतावच्छेदकत्वज्ञानं स्वरूपतस्तद्धर्मावच्छिन्नसाध्यकानुमितौ कारणं ज्ञानत्वत्वावच्छिन्नधर्मिकं च हेतुव्यापकतावच्छेदकत्वज्ञानं ज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नसाध्यकानुमितौ हेतुः, ज्ञानत्वत्वेन ज्ञानत्वे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहदशायामपि स्वरूपतो ज्ञानत्वधर्मिकहेतुव्यापकतावच्छेदकत्वग्रहसम्भवेन तत्कालेऽपि ज्ञानवानित्याकारिकाया अनुमितेरुत्पत्तिरिष्यत एव, साध्याभाववदवृत्तित्वज्ञानस्यानुमितिहेतुत्वपक्षे वह्न्यभाववन्निरूपितवृत्तितावान् धूम इत्याकारकव्यभिचारज्ञानदशायां वह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकज्ञानतो वह्न्यनुमितेरुत्पत्तेरिव उक्तस्थलीयानुमितेरिष्टत्वस्वीकारे बाधकाभावादिति वाच्यं व्यापकताज्ञानस्यानुमितिहेतुत्वे महानसीयवह्निमानित्याद्यनुमितेरनुत्पत्तेर्महानसीयवह्नित्वस्य अखण्डत्वाभावेन स्वरूपतस्तद्विशेष्यकस्य हेतुव्यापकतावच्छेदकत्वग्रहस्यासम्भवाद् महानसीयवह्नित्वत्वेन हेतुव्यापकतावच्छेदकत्वग्रहे च महानसीयवह्नित्ववद्वानित्याकारकानुमितेरेवौचित्यात् ।

तदेवं व्यापकसामानाधिकरण्यरूपव्याप्तिग्रहस्यानुमितिहेतुताया असिद्धतया साध्याभाववदवृत्तित्वरूपव्याप्तेश्च केवलान्वयिसाध्यकस्थले नितान्तमनुपपन्नतया केवलान्वयिसाध्यकानुमितिर्न भवत्येवेति सिद्धान्तो निष्पद्यते ।

नन्वेवं प्रमेयत्वादेरत्यन्ताभावप्रतियोगित्वग्रहदशायां घटादौ प्रमेयत्ववैशिष्ट्यावगाहिन्या अनुमितेः कारणबाधेनासम्भवतया घटः प्रमेयत्ववानित्यादिव्यवहारो न स्यादनुमानं विना घटे प्रमेयत्वस्य ग्रहणासम्भवादिति चेन्न केवलान्वयित्वेन घटवृत्तियत्किञ्चिद्धर्मव्यापकत्वेन वा प्रमेयत्वे घटवृत्तित्वानुमानादपि उक्तव्यवहारसम्भवात् ।

न चोक्तानुमानेन प्रमेयत्वे घटवृत्तित्वस्यैव ग्रहणेन घटे प्रमेयत्वमितिव्यवहार-सम्भवेऽपि घटः प्रमेयत्ववानिति व्यवहारोऽनुपपन्न एवेति वाच्यं प्रमेयत्वे घटवृत्तित्वानु-मितेनन्तरं घटे प्रमेयत्वस्य मानसज्ञानसम्भवेन तत एवोक्तव्यवहारोपपत्तेः ।

न च व्यापकसामानाधिकरण्यस्यानुमित्यहेतुत्वेऽपि प्रमेयत्वस्यात्यन्ताभावप्रति-योगित्वभ्रमदशायां साध्याभाववदवृत्तित्वस्य ग्रहसम्भवेन प्रमेयत्वसाध्यकानुमितिः सम्भवत्येव, किञ्च भिन्नप्रकारकज्ञानस्य प्रमेयत्वादौ वृत्तिमदत्यन्ताभावाप्रतियोगित्व-रूपकेवलान्वयित्वग्रहेण प्रनियोगितासंसर्गेणाभावे साध्यप्रकारकस्य साध्याभाववद-वृत्तिर्हेतुरित्याकारकज्ञानस्य प्रतिबन्धासम्भवेन केवलान्वयित्वग्रहदशायामपि उक्त-व्याप्तिज्ञानादनुमितिः सम्भवत्येव, अपरं च वह्न्याद्यनुमितौ साध्यतावच्छेदकसम्बन्धा-वच्छिन्नसाध्यतावच्छेदकधर्मावच्छिन्नाखण्डप्रतियोगितासम्बन्धेनाभावे साध्यवैशिष्ट्याव-गाहिनः साध्याभाववदवृत्तित्वज्ञानस्य लाघवादनुमितिहेतुत्वेऽपि घटादिपक्षकप्रमेयत्वा-द्यनुमितेरानुभविकत्वेन प्रतियोगित्वे प्रमेयत्वत्वाद्यवच्छिन्नत्वं स्वरूपसम्बन्धावच्छिन्नत्वं च, अभावांशे प्रतियोगित्वं च संसर्गमर्यादयावगाहमानस्य भ्रमात्मकस्य प्रमेयत्वा-भाववदवृत्तित्वज्ञानस्य सम्भवेन घटादौ प्रमेयत्वाद्यनुमितिर्निर्बाधैव अतः केवलान्व-यिसाध्यकानुमानखण्डनमयुक्तिकमिति वाच्यं भ्रान्तस्य केवलान्वयिसाध्यकानुमिति सम्भवेऽपि अभ्रान्तस्य केवलान्वयिसाध्यकानुमितेर्दुर्घटताया निर्विवादत्वात्, व्यापक-सामानाधिकरण्यरूपव्याप्तिज्ञानस्य गौरवेणानुमितिं प्रत्यहेतुत्वात्, साध्याभाववदवृत्ति-त्वज्ञानस्य च केवलान्वयिसाध्यकस्थलेऽभ्रान्तस्यासम्भवात् ।

किन्तु दीधितिकृता यज्ज्ञेयत्वादिहेतुभिर्वाच्यत्वादिसाध्यकानुमितेरनानुभवि-कत्वमाधृत्य केवलान्वयिसाध्यकानुमितेर्निराकरणं कृतं तन्न युज्यते, अनादौ जगति अनन्तेषु अनुमातृषु विद्यमानेषु केवलान्वयिसाध्यकानुमितेः सर्वथा अनानुभविकत्वकथ-नस्यासङ्गतत्वात् परकीयानुभवानामन्यावेद्यत्वेन स्वकीयेऽनुभवेऽननुभवे वा कस्यचिदुक्तेः प्रामाणिकत्वसम्भवेऽपि सर्वसाधारण्येन कस्यापि विषयस्यानानुभविकत्वघोषणाया अयुक्तत्वात् ।



## केवलव्यतिरेक्यनुमानविमर्शः

साध्यस्य भेदात्सहचारभेदाद्
व्याप्तेश्च भेदात् त्रिविधात्वमाप्ता ।
सा भाति भव्या व्यतिरेकगात्रा
चिन्तामणेश्चर्चितचित्रचिन्ता ॥ १ ॥

संसाध्य तर्कैः सबलैरनेकै-
श्चिन्तामणेस्तामनुमाप्रणालीम् ।
विभ्राजते पावनतामुपेता
तन्त्रे स्वतन्त्रा रमणीयभूतिः ॥ २ ॥

रघुर्विपक्षं तनुते करालं
न सानुमा भाति विभाति चान्या ।
तदीयसत्त्वस्य च रक्षणाय
प्रमाणभूतिः प्रबला न भाति ॥ ३ ॥

पूर्वैव सा लाघवबोधकारी
ग्राह्या न चान्या गुरुतावहैव ।
सिद्धानुमा न व्यतिरेकगात्रा
सामग्र्यभावे न च कार्यसत्ता ॥ ४ ॥

मान्या यथान्या व्यभिचाररोधा
ग्राह्या तथैव व्यभिचारबाधा ।
सिद्धानुमा सा व्यतिरेकगात्रा
बाधा न दृष्टा विपरीतमार्गा ॥ ५ ॥

बोधो न रुद्धो व्यभिचारतत्त्वो
नातोऽपि मान्या गुरुतावहा सा ।
बोधो न मान्यो गमकं विनैव
मार्गो न चान्योऽत्र विभां बिभर्ति ॥ ६ ॥

प्रत्यक्षभिन्नानुभवत्वमात्रात्
सिद्धानुमा सा सबलप्रमाणा ।
दृष्टिर्न हेया सुधियां सतर्का
मान्या सदा सा व्यतिरेकजन्या ॥ ७ ॥

मान्यानुमात्वानुभवत्वहीनात्
सिद्धानुमा सा धिषणा मुधैव ।
तत्साधिका भाति न कापि बुद्धिः
सिद्धा कथं सा व्यतिरेकमार्गा ॥ ८ ॥

व्याप्तिश्च पूर्वानुमितिं प्रसूते
भव्यां यथा सापि तथैव सूताम् ।
दृष्ट्यानया सा परिभातु भव्या
हेया वराकी व्यतिरेकगात्रा ॥ ९ ॥

तथापि सार्थापतितामवाप्ता
विभाति भव्या बुधबोधजन्या ।
न सानुमात्वं दधते कदापि
प्रमाणहीना विपरीतमार्गा ॥ १० ॥

विविधतापधरा रघुनाथजा
प्रबलबाधविभाकरभासिका ।
कुपथगा दयितेव न भाति सा
मतिमतां सुमनो हरते न सा ॥ ११ ॥

दृढप्रमाणैः परिवर्धिताया
बाधो न तस्या व्यतिरेकजायाः ।
रघूक्तदोषाः कमनीयगात्रा
रोधेऽसमर्था विलयं प्रयाताः ॥ १२ ॥

विभाति भव्यान्वयजा यथैव
प्रभाति दिव्या व्यतिरेकजापि ।
ययैव युक्त्या सबला सतर्का
विराजते तत्र तथात्र पक्षे ॥ १३ ॥

पुरातनानां व्यतिरेकजन्या
मतिः सतर्का महनीयगात्रा ।
विधूय पापं पवते मतीन्द्रान्
नवाभिरामेव बलं धिनोति ॥ १४ ॥

वहति गाङ्गवनं व्यतिरेकजं
प्रबलबोधकुलं ददते नवम् ।
मतिमतां सुधियां पवते मनः
प्रबलभव्यकलं कुरुते कदम् ॥ १५ ॥



## दीधितिकृतः केवलव्यतिरेक्यनुमानखण्डनविमर्शः

केवलव्यतिरेक्यनुमानं त्रिधा लक्षितमुपलभ्यते, यथा अगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकि। अर्थात् प्रकृतहेतुधर्मिकसाध्यसहचारग्रहाजन्यप्रकृतहेतुकव्यतिरेकिसाध्यकानुमितेः करणत्वं प्रकृतहेतुसाध्यककेवलव्यतिरेकित्वम्, अन्वयसहचारस्याज्ञानदशायां वाच्यत्वसाध्यकज्ञेयत्वहेतुककेवलान्वय्यनुमानेऽतिव्याप्तिवारणाय साध्ये व्यतिरेकित्वविशेषणम्।

न च साध्यासहचारस्याज्ञानदशायां संयोगाभावसाध्यकवाच्यत्वहेतुककेवलान्वय्यनुमानेऽतिव्याप्तिः संयोगाभावरूपसाध्यस्य व्यतिरेकित्वादितिवाच्यम् उक्तलक्षणघटकव्यतिरेकेऽवच्छिन्नवृत्तिकान्यत्वस्य साध्ये भेदप्रतियोगितानवच्छेदकत्वस्य वा निवेशेन उक्तदोषाभावात्, लक्षणमिदं साध्यभेदेनानुमानभेदमाधृत्य विज्ञेयम्।

सहचारभेदादनुमानभेदपक्षे व्यतिरेकसहचारमात्रगृहीतान्वयव्याप्तिकत्वं केवलव्यतिरेकित्वम्। अत्र लक्षणे मात्रपदेनान्वयसहचारस्य व्यवच्छेदः, तथा हि-अन्वयव्याप्तिघटकप्रत्येकवस्तूपस्थितौ सत्यां विशेष्ये विशेषणमितिन्यायेनान्वयव्याप्तिज्ञानदशायाम् अन्वयव्याप्तिग्रहेऽन्वयसहचारग्रहाजन्यत्वस्य व्यतिरेकसहचारग्रहजन्यत्वस्य च सत्त्वेन लक्षणसमन्वयः।

गृहीतव्याप्तिभेदादनुमानभेदपक्षे प्रकृतहेतुकप्रकृतसाध्यकानुमित्यौपयिकव्याप्तित्वव्यापकव्यतिरेकव्याप्तिकत्वं केवलव्यतिरेकित्वम्। प्रकृतहेतुकप्रकृतसाध्यकान्वयपरामर्शजन्यप्रकृतहेतुकप्रकृतसाध्यकव्यतिरेकपरामर्शजन्यप्रकृतसाध्यकानुमितिकरणत्वं वा केवलव्यतिरेकित्वम्।

तदेवं गङ्गेशोपाध्यायान्तनैयायिकैः केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदादनुमानत्रैविध्यमभ्युगतम्। तत्र अन्वयव्यतिरेकोभयविधसहचाराभ्यामन्वयव्याप्तिज्ञानादेवानुमितिर्भवति, इतिमते हेतुभेदेन कार्यकारणभावभेदप्रसङ्गभयात् साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानमात्रस्यानुमितिहेतुतापक्षेऽपि केवलव्यतिरेक्यनुमानस्योपपत्तिर्न भवितुमर्हति।

उभयत्वस्य प्रत्येकमात्रेऽपर्याप्तत्वपक्षे घटत्ववान् घटत्वतदभाववदुभयत्वादित्यत्र हेतोर्घटत्वाभावाधिकरणे पर्याप्तिसम्बन्धेनावृत्तितया प्रसक्ताया अतिव्याप्तेर्वारणार्थं

साध्याभाववदवृत्तित्वरूपव्याप्तिशरीरेऽपि साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तित्वरूपस्य साध्यसामानाधिकरण्यस्य प्रवेशनीयतया पृथिव्यामितरभेदस्य संशयदशायां गन्धात्मके हेतौ साध्यसामानाधिकरण्यघटिताया व्याप्तेर्ग्रहीतुमशक्यत्वात् ।

गृहीतव्याप्तिभेदादनुमानभेदवादिनश्चिन्तामणिकृतो मते साध्याभावव्यापकाभावप्रतियोगित्वरूपव्यतिरेकव्याप्तिज्ञानमात्रादेव केवलव्यतिरेक्यनुमितिर्जायत इत्यभ्युपगमेन सुतरां[1] केवलव्यतिरेक्यनुमानानुपपत्तिः, साध्याभावव्यापकाभावप्रतियोगित्वस्य साध्याभाववदवृत्तित्वापेक्षया गुरुतरत्वेन तज्ज्ञानस्यानुमित्यहेतुत्वात् ।

न च साध्यवदन्यावृत्तित्वज्ञानस्येव साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्यापि व्यभिचारज्ञानविरोधित्वेनानुमितिहेतुत्वसिद्धचा तस्यानुमित्यनुपयोगित्ववर्णनमसङ्गतमिति वाच्यं साध्याभावव्यापकाभावप्रतियोगित्वाज्ञानस्य व्यभिचारज्ञानाविरोधित्वात् ।

न च व्यतिरेकव्याप्तिज्ञानोत्तरं जायमानायां बुद्धौ प्रत्यक्षादिभिन्नानुभवत्वेनानुमितित्वस्य सिद्धचा अगत्या व्यतिरेकव्याप्तिज्ञानस्यानुमितिहेतुत्वमभ्युपेयमिति वाच्यम् उक्तबुद्धौ अनुमितित्वप्रकारकानुभवाविषयत्वहेतुना अनुमितित्वाभावस्य सिद्धतया उक्तानुमितेर्बाधात् ।

न चानुमितिधारावादिमते क्रमिकानुमितिव्यक्तिपूर्वपूर्वानुमितौ एवं न्यायमते प्रवृत्तिजनकानुमितौ चानुमितित्वेनानुभवाविषयत्वस्यानुमितित्वाभावव्यभिचारितया ततो व्यतिरेकव्याप्तिग्रहोत्तरमुत्पद्यमानबुद्धौ अनुमितित्वाभावस्य साधयितुमशक्यत्वेन तत्र प्रत्यक्षादिभिन्नानुभवत्वेनानुमितित्वसिद्धिर्निर्बाधेति वाच्यं लाघवेनानुमितिकारणतया क्लृप्तेन साध्याभाववदवृत्तित्वज्ञानेन अजनिततया व्यतिरेकव्याप्तिग्रहोत्तरजायमानबुद्धेरनुमितित्वासम्भवात् ।

न च क्वचित्साध्याभाववदवृत्तित्वज्ञानादनुमितिः क्वचिच्च व्यतिरेकव्याप्तिज्ञानादनुमितिरित्येवं कल्पनयोक्तबुद्धेरप्यनुमितित्वं सेद्धुमर्हतीति वाच्यम् उक्तकल्पनाया दनुमितित्वानुभवस्यायत्तत्वात्, तस्य चोक्तबुद्धावव्यतिरेकव्याप्तिज्ञानोत्तरजायमानज्ञानेऽनुमितित्वानुभवस्यायत्तत्वात्, तस्य चोक्तबुद्धावभावादतो व्यतिरेकव्याप्तिज्ञानोत्तरजायमानबुद्धेरनुमितिविजातीयत्वस्यैवाभ्युपगमनीयतया केवलव्यतिरेक्यनुमानमप्रामाणिकमेव, किन्तु उक्तबुद्धिरर्थापयामि नानुमिनोमीत्यनुभवबलादनुमितिभिन्ना अर्थापत्तिरूपेति सिद्धचति, अतो व्यतिरेकव्याप्तिज्ञानं नानुमानप्रमाणं किन्तु अर्थापत्तिप्रमाणम् ।

---

१. साध्याभावव्यापकाभावप्रतियोगित्वमपि नानुमित्यौपयिकं गौरवात् ।
केवलान्वयिप्रकरणे पृ० सं० २७०-२८० ।

न च साध्याभाववदवृत्तित्वस्य व्यतिरेकव्याप्तेश्च युगपत्परामर्शदशायाम् अनुमित्यर्थापत्त्योः सङ्कर इति वाच्यम्, अर्थापत्तिप्रमाणवादिनये ज्ञानद्वययोगपद्यस्याङ्गीकारेण तत्र विजातीयज्ञानद्वयस्यैवोत्पत्तेरभ्युपगमात्। अथ वा यथा समानविषयकप्रत्यक्षानुमित्योर्युगपत्सामग्रीसन्निधाने प्रत्यक्षसामग्र्या अनुमितिप्रतिबन्धकत्वं भवति तथैवानुमित्यर्थापत्त्योः समानविषयकयो सामग्रीसन्निधानेऽर्थापत्तिसामग्र्या अनुमितिप्रतिबन्धकत्वस्वीकारेण तादृशस्थलेऽर्थापत्तिमात्रस्यैवोत्पद्यमानत्वेन सङ्करानवकाशात्।

किन्तु दीधितिकृता उक्तरीत्या कृतं केवलव्यतिरेक्यनुमाननिराकरणं सूक्ष्मेक्षिकया समीक्ष्यमाणं युक्तियुक्ततां न बिभर्त्ति, प्रत्यक्षादिभिन्नप्रमात्वेन व्यतिरेकव्याप्तिग्रहोत्तरजायमानबुद्धौ अनुमितित्वस्यानुमानेन तत्करणस्य व्यतिरेकव्याप्तिज्ञानस्य केवलव्यतिरेक्यनुमानत्वसिद्धेर्दुष्परिहरत्वात्।

यच्च साध्याभाववदवृत्तित्वज्ञानरूपक्लृप्तानुमितिकरणाजन्यतया व्यतिरेकव्याप्तिग्रहोत्तरजायमानबुद्धेरनुमितिभिन्नत्वमुक्तं तन्न युक्तम् उक्तबुद्धौ अनुमितिभिन्नत्वनिश्चयं विना साध्याभाववदवृत्तित्वज्ञानम् अनुमितिसामान्यस्य क्लृप्तं कारणमिति वक्तुमशक्यत्वात्।

न च व्यतिरेकव्याप्तिज्ञानस्यापि अनुमितिजनकत्वे व्यतिरेकव्याप्त्यन्वयव्याप्तिज्ञानयोः परस्परजन्यानुमितौ व्यभिचारवारणाय कार्यतावच्छेदककुक्षौ तत्तज्ज्ञानाव्यवहितोत्तरत्वनिवेशेन गुरुतरकार्यकारणभावद्वयकल्पनापेक्षया व्यतिरेकव्याप्तिज्ञानजन्यज्ञानस्यानुमितिविजातीयत्वमभ्युपगम्यानुमितिं प्रति साध्याभाववदवृत्तित्वज्ञानस्य अर्थापत्तिं प्रति च व्यतिरेकव्याप्तिज्ञानस्य कारणत्वमितिकारणताद्वयकल्पनमेव समीचीनमिति वाच्यम् उक्तज्ञानाभ्यां जनितयोरनुमित्योरनुमितित्वव्याप्यजातिभेदकल्पनयापि परस्परजन्यानुमितौ व्यभिचारवारणसम्भवेन तत्तज्ज्ञानकार्यतावच्छेदककुक्षौ तत्तज्ज्ञानाव्यवहितोत्तरत्वस्याप्रवेशनीयत्वात्।

न चान्वयव्यतिरेकोभयविधव्याप्त्योर्युगपन्निश्चयदशायाम् अनुमितित्वव्याप्यतया कल्पितयोर्जात्योः सङ्करप्रसङ्ग इति वाच्यं समाने विषये उक्तज्ञानयोः सन्निधानदशायां लाघवादन्वयव्याप्तिज्ञानस्यैव कार्योपधायकत्वस्य स्वीकारात् विभिन्ने विषये च उक्तज्ञानयोः सन्निधानदशायां क्रमेणोक्तज्ञानकार्ययोरुत्पत्तेः स्वीकारस्यावश्यकतया व्यतिरेकव्याप्तिज्ञानस्यैव पूर्वं कार्योपधायकत्वस्य स्वीकाराच्च।



## उभयत्वविमर्शः

श्रीसार्वभौमोक्तविचित्रचर्चां
सञ्चाल्य बुद्धेरुभयत्वगाथाम् ।
तत्रैव सूरे रघुनाथबोधं
संभाव्य तथ्यं परिलोचयामि ॥ १ ॥

मान्योभयत्वं परिभाति भव्यं
बुधेन दिष्टैकविशिष्टशिष्टम् ।
भव्योभयत्वं महनीयतन्त्रे
संराजते राजपथं दधानम् ॥ २ ॥

मान्यं विशिष्टं बुधबोधगम्यं
दिष्टं बुधैः केवलभिन्नमेव ।
शुद्धं विभिन्नं भणितं बुधेन
बोध्यं विशिष्टं पृथगेव गीतम् ॥ ३ ॥

दिव्योभयत्वं प्रथितं विभिन्नं
मान्यैर्बुधैः केवलभिन्नमेव ।
गीतोभयत्व परिशीलितं च
भिन्ना सदा केवलभानभित्तिः ॥ ४ ॥

विबुधमानससंशयनाशिका
मतिदकेवलभानसुसर्जिका ।
बुधविशिष्टकथारसदायिका
सततभिन्नपथा नयपोषिका ॥ ५ ॥

भव्यं मतं भाति न भव्यभव्यं
बुद्धौ रघोर्वक्ति सशक्ततर्का ।
नव्यं मतं तस्य विभाति भिन्नं
भिन्नं विशिष्टं चिनुते स्वतन्त्रम् ॥ ६ ॥

भव्योभयत्वं पृथगेव भाति
मान्यं विशिष्टं च तथैव भिन्नम् ।
वैशिष्ट्यशून्येऽप्युभयत्वभानं
तस्यापि भव्यो विरहो विभाति ॥ ७ ॥

मान्ये विरुद्धधवले प्रबले विशिष्टे
शिष्टोभयत्वमहिमा न विभाति कम्रः ।
भव्योभयत्वविपिने विटपो विशिष्टो
नोदेति तन्त्ररसिको धवलः स्वतन्त्रः ॥ ८ ॥

एकस्य वैशिष्ट्यविभापरस्मिन्
सम्बन्धभेदं धरते विचित्रम् ।
ना कालिकेनैव विशिष्टबुद्धि
र्मान्यान्यथादोषकथा स्फुटैव ॥ ९ ॥

एकत्र मान्याप्यपरत्र नास्ति
कुम्भो विरुद्धं दधते न धर्मम् ।
वाच्यं विशिष्टं सहजं विभिन्नं
भिन्नोभयत्वं तत एव गेयम् ॥ १० ॥

भूतत्वमूर्तत्वधविधा विचित्रा
शिष्टे विशिष्टेऽप्युभयत्वबुद्धिः ।
कुम्भे घटत्वेऽपि कथं पटत्वं
नायाति बुद्धौ सबलं विरुद्धम् ॥ ११ ॥

बोध्यं घटत्वं प्रथितं पटत्वं
नैवास्ति कुत्रापि विशिष्टरूपम् ।
बुद्धिं विरुद्धां प्रकटं विहाय
नैकत्वबुद्धिर्धरते स्वरूपम् ॥ १२ ॥

विशिष्टबुद्धिः पृथगेव भाति
तथोभयत्वं परिभाति भव्यम् ।
घटे पटे वा सबलं न सत्त्वं
तयोर्विशिष्टं कमनीयकम्रम ॥१३॥

रघूक्तचर्चा सबला न भाति
विशिष्टचर्चामधिकृत्य जाता।
अनेकदोषैर्विहता तदीया
न सेद्धुमर्होभयता विचित्रा ॥ १४ ॥

भव्योभयत्वं प्रथितं वरिष्ठं
श्रीसार्वभौमोक्तविधाप्रवृत्तम्।
मान्यं न हेयं सबलं सतर्कं
तन्त्रे स्वतन्त्रं भणितं विचित्रम् ॥१५॥

एकत्र भव्योभयता तु यत्र
दृष्टाऽविरुद्धा परिभाति रम्या।
श्रीसार्वभौमोक्तपथं दधाना
साध्वी सदा सादरतामवाप्ता ॥१६॥

नानार्थता भाति पदस्य तस्य
भव्योभयत्वस्य बुधैः प्रदिष्टा।
दोषाः समस्ता निहतास्तदैव
संचालिता ये रघुणा प्रकृष्टाः ॥१७॥

दिव्योभयत्वं परिभाति तन्त्रे
भावे विरुद्धे परिभासमाने।
तद्बुद्धिरूपं महितं विशिष्ट
बाधा वराकी सफला न काऽपि ॥१८॥

बुधविशिष्टविधोभयताधरा
पुरपुरातनताप्रबलामरा।
दहति दोषकदम्बविपं सदा
न सहते रघुनाथमतिं वरा ॥१९॥

श्रीसार्वभौमरणपण्डितदृष्टिरेषा
भव्योभयत्वसरणी रमणीव मान्या।
नानार्थता मतिमता परिशीलिताऽत्र
सिद्धोभयत्ववचनस्य विभाति भव्या ॥२०॥

रम्या शिरोमणिविधा विपथा विशीर्णा
सत्तर्कतापदलिता गलिता वराकी ।
तत्पोषकं कविकुलं कुशलं सतर्कं
दृष्टं न तन्त्ररसिकं प्रबलं सयत्नम् ॥२१॥

श्रीसार्वभौमपथपान्थविचित्रभक्तान्
भव्योभयत्वरसिकानखिलान् सुधीन्द्रान् ।
ध्यात्वैव तन्त्रचरितं महितं महेन्द्रं
प्रस्तुत्य नम्रनयनान् भवतो विलोके ॥२२॥

उभयता प्रथिता वरमञ्चगा
मतिविधा सुधियां सुरसिन्धुगा ।
सकलकल्मषरोधनिवारिका
जयतु भव्यकलाकलिता लता ॥२३॥



## उभयत्वस्य सार्वभौमभाषितया एकविशिष्टापरत्वरूपतया दीधिति-कृत्कर्तृकनिराकरणविमर्शः

सिद्धान्तव्याप्तिलक्षणे प्रतियोग्यसामानाधिकरण्यस्य प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यपर्यन्तविवक्षायाः प्रयोजनप्रतिपादनसन्दर्भे[1] भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यत्र 'उभयत्वमेकविशिष्टापरत्वं विशिष्टं च केवलादन्यदिति तदभावो भूतत्वमूर्तत्वोभयाभावो मनसि सहजत एव प्रतियोगिव्यधिकरण इति' सार्वभौममतमुद्धृत्य दीधितिकृता कथितं यदुभयत्वं हि न विशिष्टत्वादनतिरिक्तं न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावाद् वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्य उभयत्वेन तदभावस्य च प्रत्यक्षसिद्धत्वात् ।'

दीधितिकारस्याशयं स्फोरयता जगदीशेनोक्तं यद् 'विरुद्धयोरिव समानाधिकरणयोरपि उभयत्वमतिरिच्यते विरुद्धाविरुद्धस्थलीयोभयत्वप्रतीत्योः समानाकारकत्वानुभवात् भूतत्वमूर्तत्वयोर्विरुद्धत्वभ्रमदशायामपि उभयत्वस्य प्रत्ययाच्च ।'

सर्वस्यास्य दीधितिकृत्सम्मतो निष्कर्षोऽयमाभाति यदुभयत्वमेकविशिष्टापरत्वरूपं न स्वीकर्तुमर्हं यतो हि अपरस्मिन्नेकवैशिष्ट्यं सामानाधिकरण्यसम्बन्धेनैव वाच्यम् अन्यथा कालिकादिसम्बन्धेन वैशिष्ट्यमादाय केवले मनस्यपि 'अत्र भूतत्वमूर्तत्वोभयम् एवं पटेऽपि' अत्र घटत्वपटत्वोभयमित्यादिप्रतीतिप्रसङ्गात्, तथा च समानाधिकरणयोर्धर्मयोः प्रतीयमानस्योभयत्वस्य एकविशिष्टापरत्वरूपतया वर्णनस्य कथञ्चित्सम्भवेऽपि घटत्वपटत्वादिसदृशयोरसमानाधिकरणधर्मयोः प्रतीयमानमुभयत्वमेकविशिष्टापरत्वरूपतया वर्णयितुमशक्यमेव, पटत्वादौ सामानाधिकरण्यसम्बन्धेन घटत्वादिवैशिष्ट्यस्यासम्भवात् तथा च यथा घटत्वपटत्वयोरुभयत्वमेकविशिष्टापरत्वाद् भिन्नं भवति तथैव समानाधिकरणधर्मयोः प्रतीयमानस्योभयत्वस्यापि एकविशिष्टापरत्वभिन्नत्वाभ्युपगम एवोचितः, विरुद्धाविरुद्धस्थलीयोभयत्वप्रतीत्योः समानाकारकत्वानुभवात् ।

वस्तुतः समानाधिकरणधर्मयोर्भूतत्वमूर्तत्वयोः प्रतीयमानमुभयत्वमपि एकविशिष्टापरत्वरूपं नाङ्गीकर्तुं शक्यं भूतत्वमूर्तत्वयोर्मिथोऽसामानाधिकरण्यग्रहदशायां

---

१—वामाचरणभट्टाचार्यविवृतियुतजागदीशीसिद्धान्तलक्षणे पृ०—८४ ।

तयोः सामानाधिकरण्यरूपस्य मिथो वैशिष्ट्यस्य ग्रहीतुमशक्यतया तदानीं तयोः प्रतीयमानस्योभयत्वस्य एकविशिष्टापरत्वभिन्नतयैव उपपादनीयत्वात् ।

परन्तु दीधितिकृतः प्रकृतोक्तिरालोच्यमाना नौचित्यमाश्रयते यतो हि भूतत्व-मूर्तत्वयोर्घटत्वपटत्वयोश्च ये उभयत्वप्रतीती भवतस्तयोरुभयत्वांशे समानाकारकत्वमाश्रित्य समानाधिकरणधर्मयोरसमानाधिकरणधर्मयोश्च प्रतीयमानयोरुभयत्वयोर्यदेकरूपत्वमुक्तं तन्न युक्तमुभयत्वस्य एकविशिष्टापरत्वभिन्नत्वोपगमेऽपि भूतत्वमूर्तत्वयोः प्रतीयमानमुभयत्वं विशेष्यतासम्बन्धेन भूतत्वं मूर्तत्वं चेत्याकारकबुद्धिरूपम्, एवं घटत्वपटत्वयोः प्रतीयमानमुभयत्वं विशेष्यतासम्बन्धेन घटत्वं पटत्वं चेत्याकारकबुद्धिरूपं वाच्यम्, उभे च ते बुद्धी विभिन्नविषयिकेऽनुगतधर्मशून्ये च अतस्तादृशबुद्ध्यात्मकोभयत्वयोर्ये प्रतीती भूतत्वमूर्तत्वयोर्घटत्वपटत्वयोश्च जायेते तयोरुभयत्वांशेऽपि समानाकारकत्वस्य वक्तुमशक्यत्वात् । तथा च यदि समानाधिकरणासामानाधिकरणधर्मयोश्च जायमानयोरुभयत्वप्रतीत्योः समानाकारकत्वमसिद्धं तर्हि तद्बलेन भूतत्वमूर्त्तत्वयोः प्रतीयमानस्योभयत्वस्य एकविशिष्टापरत्वरूपताया निराकरणमसङ्गतम्, यच्च भूतत्वमूर्त्तत्वयोरसामानाधिकरण्यग्रहदशायां तयोरुभयत्वप्रतीत्यनुरोधेन तद्गतोभयत्वस्य एकविशिष्टापरत्वरूपत्वं निरस्तं तदपि नोचितम्, असामानाधिकरण्यग्रहदशायां जायमानस्योभयत्वप्रत्ययस्योक्तबुद्ध्यात्मकोभयत्वमादायोपपत्तिसम्भवात्, अतो भूतत्वमूर्त्तत्वयोरसामानाधिकरण्यग्रहाभावदशायां तयोः प्रतीयमानस्योभयत्वस्य एकविशिष्टापरत्वरूपतास्वीकारे न किञ्चिद् बाधकं फलतया अयमभ्युपगम एव युक्तियुक्तः प्रतीयते यत्समानाधिकरणधर्मयोः प्रतीयमानमुभयत्वमेकविशिष्टापरत्वरूपम्, असामानाधिकरण्यग्रहदशायां तयोः प्रतीयमानमुभयत्वं च विशेष्यतासम्बन्धेनोक्तधर्मविषयकबुद्धिरूपम्, एवमसमानाधिकरणधर्मयोरपि प्रतीयमानमुभयत्वं तादृशधर्मविषयकंबुद्धिरूपमेव, उभयत्वपदस्य नानार्थकता चागत्या स्वीकार्यैव, विशेष्यतासम्बन्धेन विभिन्नपदार्थविषयकबुद्धीनां द्रव्येषु संख्यात्मकोभयत्वानां च उभयत्वशब्दार्थताया आवश्यकत्वात् ।



## ज्ञाधातूत्तराख्यातार्थविमर्शः

जानाति चैत्रो वचनं प्रसिद्धं
तत्रैव धातूत्तरतामुपेतम् ।
आख्यातशब्दं परिलोचयामि
संलोच्य तत्रत्यविधां ब्रवीमि ॥ १ ॥

आख्यातवाचो न विभाति वाच्यो
विज्ञा प्रसिद्धा मणिकारभाषा ।
ब्रूते सदा निर्भयतामवाप्ता
ग्राह्या बुधैः साखिलदोषरिक्ता ॥ २ ॥

रघुर्विरुद्धं विमतो विरौति
निजस्वतन्त्रं सुमतिर्विभिन्नम् ।
भयं न धत्ते सबलो मनीषी
मतप्रकाशे विरलो विभाति ॥ ३ ॥

भव्याश्रयत्वे प्रथितां निरूढां
तल्लक्षणां तां कुरुते मनीषी ।
यस्यां न बाधोदयता विचित्रा
नायाति संशीतिपदं दधाना ॥ ४ ॥

ज्ञानाश्रयत्वे भ्रमबोधकाले
संल्लक्षणायाः प्रबलप्रबोधे ।
धात्वर्थदेशेऽन्वयताप्रतीतौ
वार्या न सा गौरवगर्भचर्चा ॥ ५ ॥

मतं प्रहेयं मणिकारमान्यं
गुरुत्वदोषेण हतं न शस्तम् ।
लघुत्वचर्चापरिपोषितं मे
मतं न हेयं सबलं सतर्कम् ॥ ६ ॥

स्थले विशेषे न च गौरवं मे
मते मदीये रमणीयरम्ये ।
न कल्पनायाः प्रतिबन्धिकाया
विभाति माया प्रबला तदानीम् ॥ ७ ॥

आख्यातवाच्यस्य विचारचर्चा
व्युत्पत्तिवादे प्रथिता वरिष्ठा ।
आश्रित्य तामेव रघोर्विपक्षं
पक्षं मणेश्चापि विचारयामि ॥ ८ ॥

सन्दर्भभूमिर्मणिकारमान्या
मान्या रघ।नैंव समीक्ष्यमाणा ।
आलोकवैपुल्यधराधरित्री
संराजते नव्यविचारराज्ञी ॥ ९ ॥

मान्या न सा गौरवमादधाना
नीती रघोर्दिग्व्रविशालकाया ।
चिन्तामणेश्चिन्तनचारुचर्चा
नोपेक्षणीया प्रबला सतक। ॥१०॥

आख्यातवाचो न चसार्थकत्वं
सा भव्यभावापि निरर्थभावा ।
चिन्तामणेर्वाग् ः रुतां न धत्ते
सा केवलं लाघवबोधभक्ता ॥११॥

ख्यातां िरूढां वृत्तिमाश्रयन्ती
मान्या मतिर्नास्ति रघोर्दयालोः ।
ध्वस्ता सदा गौरवगानसक्ता
हेया सदानादरतामवाप्ता ॥१२॥

तत्तत्पदा वाच्यततिं दधाना
तत्तत्पदानादिविशेषवाञ्छा ।
बोध्या निरूढा प्रबला रघोर्या
बाभाति भव्या भणिता स्वतन्त्रा ॥१३॥

एवञ्च तात्पर्यमिदं न नित्यं
नित्ये च तस्मिन्नपरा विपत्तिः ।
नित्येश्वरेच्छा भवतीह शक्ति-
स्तां लक्षणां वक्ति न कोऽपि मानी ॥१४॥

अनित्यरूपं यदि वक्तुकामो
रघुस्तदा पक्षविनाश एव ।
न कापि तात्पर्यवरस्य भूति-
र्भव्या वरैका बहुकालतोऽद्य ॥१५॥

असंख्यतात्पर्यविधा विचित्रा
क्षणैरनेकैरनुवर्तमाना ।
इष्टा तदा गौरवगर्भभारी
हास्या कथं नास्ति रघूक्तिरेषा ॥१६॥

चिन्त्या सदा लाघवगर्वहीना
त्याज्या वराकी कुलटेव दीना ।
दोषं दधाना न विभात्यभव्या
मार्गाच्च्युता गौरवगर्भगर्ह्या ॥१७॥

चिन्तामणेर्विभववंशपरम्पराया
वित्तं प्रसिद्धसुखदं सुधियां धियां वा ।
आलोकपुञ्जरसिकं मतिदं स्वतन्त्रं
संचर्च्यं मान्यमतिकं भणितं प्रबन्धे ॥१८॥

आस्वाद्यतोया सरिता प्रशस्ता
कालाद् बहोर्भाति वसुन्धरायाम् ।
वेदे प्रगीता नयशास्त्रकाया
भव्यं जलं बोधकुलं दधाना ॥१९॥

तस्याः कणं कञ्चन भव्यरूपं
सम्प्राप्य लेखं सुधियां पुरस्तात् ।
प्रस्तुत्य याचे भवतो दयालून्
हेया न चर्चा नयशास्त्रपूता ॥२० ।

शास्त्राविरुद्धधवलानखिलान् पदार्थान्
सँल्लोड्य वाचमुचितां विनयी ब्रवीमि ।
त्याज्या शिरोमणिमणेर्विमतप्रकाशा
मान्यैर्न भव्यविभवाभिनवापि रम्या ॥२१॥

कठिननिष्ठुरकर्मपरायणा
रघुविधा दलिता गरदायिका ।
निगमशास्त्ररसारसिकाधुना
बुधसमीपमनोरमभामिनी ॥२२॥



## ज्ञाधातूत्तराख्यातार्थविषये दीधितिकृन्मतविमर्शः

व्युत्पत्तिवादे चैत्रो जानातीत्यादौ चैत्राद्यंशे ज्ञानादेराश्रयतासम्बन्धेनान्वय उत ज्ञाननिरूपिताश्रयतायाः प्रकारविधया अन्वय इत्येतद्विचारं वितन्वता गदाधरभट्टाचार्येण जानातीत्यादावाख्यातस्य मणिकारमतेन निरर्थकतामभिधाय आश्रयत्वे निरूढलक्षणामभ्युपगच्छतो दीधितिकारस्याशय इत्थं प्रदर्शितः, 'यत्र[1] ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र चैत्राद्यंशे धात्वर्थैकदेशस्य ज्ञानादेरन्वयानुपपत्त्या स्वरूपसम्बन्धेन ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकान्वयबोध एव तत्र मणिकृता स्वीकरणीयः, तथा च तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधे तत्प्रकारकयोग्यताज्ञानहेतुतायाः क्लृप्तत्वादाश्रयतासंसर्गकशाब्दबोधे तादृशयोग्यताज्ञानहेतुताकल्पनमावश्यकमेव मणिकृन्मते ।

न च दीधितिकृन्मते तादृशयोग्यताज्ञानहेतुत्वाकल्पनलाघवेऽपि जानातीत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटितज्ञानसामग्र्या भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकतायाम् आख्यातजन्याश्रयतोपस्थितेर्निवेशनस्याधिक्याद्गौरवमितिवाच्यं भवन्मतेऽपि ज्ञानाश्रयत्वाभाववांश्चैत्रः सुन्दर इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे जानाति चैत्र इत्याद्यानुपूर्वीघटितज्ञाधातुजन्यज्ञानोपस्थितिघटितसामग्र्याः प्रतिबन्धकताधिक्येन गौरवात्, मन्मते च तादृशसामग्र्या विरोधिज्ञानाश्रयत्वाभाववत्तानिश्चयघटिततया तथाविधविशिष्टवैशिष्ट्यबोधसामग्र्यास्तादृशशाब्दसामग्र्या समं युगपदवस्थानासम्भवेन तादृशप्रतिबन्धकत्वकल्पनाविरहात् ।

प्रस्तुतविचारसन्दर्भे मणिकारदीधितिकारयोर्निर्दिष्टविचारविषयकविमर्शे क्रियमाणे दीधितिकृतो विचारो मणिकारविचारापेक्षया प्रशस्यतरो न सिद्ध्यति, यतो हि मणिकारमते जानातीत्यादौ आख्यातस्य नैरर्थक्यं यदुक्तं तत्र किमपि गौरवं नास्ति, किन्तु दीधितिकृता जानातीत्यादौ आख्यातस्य आश्रयत्वे निरूढलक्षणा अभ्युपगता, एषोऽभ्युपगमोऽधिकगौरवग्रस्तो यतो हि तत्तत्पदस्य निरूढलक्षणा तत्तत्पदावाच्यत्वे सति तत्तत्पदानादितात्पर्यरूपा, यादृशतात्पर्यत्वावच्छेदेन समानाकारतात्पर्यपूर्वकत्वं तादृशं तात्पर्यमेवानादि मन्यते, एवं च तात्पर्यमिदं यदि नित्यं भवेत्तदा तस्य ईश्वरेच्छारूपतया शक्तिरूपत्वमेव स्यादतस्तस्यानित्यत्वमेवाभ्युपेयम् अनित्यत्वे च एकस्य तात्पर्यस्यानादिकालतोऽनुवर्तमानत्वासम्भवेन असंख्यतात्पर्याणाम् असंख्यकालैः सह सम्बन्धः स्वीकार्य इति निरूढलक्षणापक्षस्य गौरवग्रस्तता निर्विवादा ।



---

१. गूढार्थतत्त्वालोकसहिते व्युत्पत्तिवादे पृ० सं० ८७-८८ ।

# उपसंहारः

प्रस्तुतप्रबन्धे न्यायवैशेषिकसम्मतान् पदार्थान् सङ्क्षेपत उपन्यस्य तत्र बहुत्र दीधितिकारोपज्ञविचारान् उपस्थापयता तेषां यथामति परिशीलनमालोचनं च विहितम्। दीधितिकृतः पदार्थतत्त्वनिरूपणग्रन्थावलोकनेनेदं स्फुटं यत्तेन पदार्थत्वस्य द्रव्याद्यन्यतमत्वव्याप्यत्वं न मन्यते यतो हि तत्रैवंविधा अनेके पदार्थास्तेन प्रतिपादिता ये द्रव्यादिषु सप्तसु कुत्रापि नान्तर्भवन्ति, किन्तु नेयं स्थितिः केवलं दीधितिकारस्यैव अपि तु सर्वेषामेव प्राचीनार्वाचीननैयायिकानामियमेव स्थितिः, ये हि प्रतियोगित्वानुयोगित्वादीनाम् आधेयत्वाधारत्वादीनाम्, अवच्छेद्यत्वावच्छेदकत्वादीनां स्वरूपसम्बन्धविशेषरूपत्वमभ्युपेत्य तत्तत्पदार्थान् द्रव्यादिष्वेवान्तर्भावयन्ति तेऽपि प्रतियोगितात्वानुयोगितात्वादीनां विषयतात्वविषयितात्वादीनाम् आधेयतात्वाधारतात्वादीनाम् अवच्छेद्यतात्वावच्छेदकतात्वादीनां द्रव्यादिपदार्थेष्वन्तर्भावं कर्तुमसमर्था एव भवन्ति, तांस्तान् धर्मान् अखण्डोपाधि वदन्तस्तेषां निर्वचनेऽकौशलमेव प्रकाशयन्ति, यतो हि अखण्डोपाधयोऽपि द्रव्यादिष्वेव तैरन्तर्भावनीया भवन्ति ये द्रव्यादयः सप्तैव पदार्था इतीमं सिद्धान्तं निरपवादमुद्घोषयन्ति, यच्चाखण्डोपाधिं द्रव्यादिभिन्नत्वेन अभ्युपगम्य द्रव्यादयः सप्तैव पदार्था निःश्रेयससाधनीभूततत्त्वज्ञानविषयपदार्थपरतया समर्थयद्भिः कतिपयपण्डितैर्द्रव्यादितः पदार्थानामाधिक्येऽपि तेषां न्यायशास्त्रानुमतत्वं प्रतिपाद्यते तद् दीधितिकारापेक्षया तेषां प्राचीनसिद्धान्तानुयायित्वपोषणे पर्याप्तं न भवति, तथाविधोक्तेर्दीधितिकारपक्षेऽपि निर्बाधं सम्भवात्। दीधितिकारानुयायिभिर्दीधितिकारेण अभ्युपगता द्रव्यादितो भिन्नाः पदार्था न निःश्रेयससाधनीभूततत्त्वज्ञानविषया अतस्तेषां द्रव्यादिष्वनन्तर्भावेऽपि युक्तिभिः क्रियमाणं तत्प्रतिष्ठापनं नोपेक्षितुं शक्यमिति निर्णयमभिधातुं शक्यत्वाच्च।

वर्धमानोपाध्यायप्रमुखैः पण्डितैरखण्डोपाधितया स्वोचिकीर्षितानां प्रतियोगितात्वादीनां सामान्यपदार्थेऽन्तर्भावं विधाय द्रव्यादयः सप्तैव पदार्था इत्येतत्सिद्धान्तस्य संरक्षणं कर्तुं प्रायासि, एष प्रयासोऽनया रीत्या वर्णयितुं शक्यते यत्सामान्यपदार्थो द्विविधो जात्यात्मकोऽखण्डोपाधिश्च, तत्र जातित्वं नाम 'नित्यत्वे सत्यनेकसमवेतत्वम्, अखण्डोपाधित्वं च जातिभिन्नत्वे सति निरवच्छिन्नप्रकारताश्रयत्वम्। जात्यखण्डोपाध्युभयसाधारणं सामान्यत्वं च निरवच्छिन्नप्रकारताश्रयत्वम्।

न च सिद्धान्तव्याप्तिलक्षणजागदीश्यां जातिमत्त्वान् घटत्वादित्यत्र पटसमवेतत्वविशिष्टजातिमदभावमादायाव्याप्तिवारणाय सिद्धान्तव्याप्तिलक्षणघटकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वस्य निवेशे कृतेऽपि दण्डिमान् दण्डिसंयोगादित्यत्र तत्तद्दण्डवदभावमादायाव्याप्त्युपपत्तये तत्तद्दण्डवान् नास्तीतिप्रतीतौ तत्तद्दण्डे निरवच्छिन्नावच्छेदकतायाः समर्थनाय तत्तद्दण्डव्यक्तेः स्वरूपतो भानमभ्युपेतम्, अतो निरवच्छिन्नप्रकारताश्रयत्वरूपं सामान्यलक्षणं तत्रातिव्याप्तं न चेष्टापत्तिस्तत्तद्दण्डादौ द्रव्यत्वसामान्यत्वयोः संकीर्णतया तयोः पदार्थविभाजकत्वानुपपत्तेरित्ति वाच्यं तत्तद्दण्डादिव्यक्तेः स्वरूपतः प्रकारत्वे मानाभावात्, तत्तद्दण्डवदभावमादाय दण्डिसाध्यकस्थलेऽव्याप्तेरनुपपत्त्या 'दण्ड्यादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमित्यत्र दण्डिपदोत्तरमादिपदोपन्यासेन उक्ताव्याप्तौ अरुचिं संकेतयता दीधितिकृता रूपत्वव्याप्यजातिमत्त्वान् पृथिवीत्वादित्यत्र नीलपीताद्यभावमादायाव्याप्तिसूचनाच्च ।

नचोक्तसामान्यलक्षणस्य तद्व्यक्तित्वे विद्यमानतया तत्र समानानां भाव इत्येतदर्थाभिप्रायकस्य सामान्यपदस्यान्वर्थत्वानुपपत्तिरितिवाच्यं समानानां भावइत्यर्थे सामान्यपदस्य जातिमात्र एवान्वर्थताया अभिमतत्वात्, अखण्डोपाधौ तु सामान्यपदस्य पारिभाषिकत्वस्यैव स्वीकारात्, अथवा अनेकवृत्तित्वे सति निरवच्छिन्नप्रकारताश्रयत्वं सामान्यलक्षणं तद्व्यक्तित्वं च नाखण्डोपाधिः किन्तु तादात्म्यसम्बन्धेन सा व्यक्तिरेव, तादृशी व्यक्तिर्यथायथं द्रव्यादिरूपैव, तादात्म्यं च भेदाविशिष्टान्यधर्मो वैशिष्ट्यं च स्वप्रतियोगिवृत्तित्व-स्वसामानाधिकरण्योभयसम्बन्धेन, तथा च प्रतियोगितात्वादिधर्माणां सामान्यपदार्थस्याखण्डोपाधिवर्गेऽन्तर्भावेण द्रव्यादयः सप्तैव पदार्था इत्येष सिद्धान्तः सर्वथा सुपुष्ट एव । दीधितिकृता अस्य पथोऽनवलम्बनेन तादृशो मार्गो गृहीतो यन्मार्गानुसरणेऽनन्तपदार्थानां कल्पना आपद्यत इति धियैव प्रस्तुते शोधप्रबन्धे तन्मतमालोचयता तेन द्रव्यादिभिनत्वेन प्रतिष्ठापितानां पदार्थानां तथा स्वरूपं निरूपितं येन द्रव्यादितस्तद्बहिर्भावो न स्यादिति ।

श्रीविश्वनाथपदपङ्कजभक्तभृङ्गो
राम: प्रबन्धमकरन्दमधुप्रवाहम् ।
अन्विष्य तत्र भवतां भवतां पुरस्तात्
प्रस्तुत्य तुष्टिममलां सुधियां समीहे ॥१॥

श्रीराम पाण्डेयः

# शोधप्रबन्धाय परिशीलितग्रन्थानां तालिका

| | |
|---|---|
| १. न्यायसूत्रम् | श्री गोतमस्य |
| २. न्यायभाष्यम् | ,, वात्स्यायनस्य (पक्षिलस्वामिनः) |
| ३. न्यायवार्तिकम् | ,, उद्योतकरस्य |
| ४. न्यायवार्तिकतात्पर्यटीका | , वाचस्पतिमिश्रस्य |
| ५. न्यायवार्तिकतात्पर्यटीका-परिशुद्धिः | ,, उदयनाचार्यस्य |
| ६. न्यायमञ्जरी | ,, जयन्तभट्टस्य |
| ७. न्यायनिबन्धप्रकाशः | ,, वर्धमानस्य |
| ८. न्यायालङ्कारः | ,, श्रीकण्ठस्य |
| ९. न्यायरहस्यम् | ,, रामभद्रस्य |
| १०. न्यायसिद्धान्तमाला | ,, जयरामस्य |
| ११. न्यायसूत्रवृत्तिः | ,, विश्वनाथस्य |
| १२. न्यायसंक्षेपः | ,, गोविन्दस्य |
| १३. सोपस्कारवैशेषिकसूत्रम् | ,, शङ्करमिश्रस्य |
| १४. प्रशस्तपादभाष्यम् | ,, प्रशस्तपादाचार्यस्य |
| १५. तत्त्वचिंतामणि | ,, गङ्गेशोपाध्यायस्य |
| १६. तत्त्वचिन्तामणिप्रकाशः | ,, वर्धमानोपाध्यायस्य |
| १७. न्यायपरिशिष्टप्रकाशः | ,, ,, |
| १८. प्रमेयनिबन्धप्रकाशः | ,, ,, |
| १९. न्यायकुसुमाञ्जलिः | ,, उदयनाचार्यस्य |
| २०. न्यायकुसुमाञ्जलिप्रकाशः | ,, वर्धमानोपाध्यायस्य |
| २१. किरणावलिप्रकाशः | ,, ,, |
| २२. न्यायलीलावतीप्रकाशः | ,, ,, |
| २३. खण्डनखण्डप्रकाशः | ,, ,, |

२४. न्यायनिवन्धप्रकाशः ,, ,,
२५. तत्त्वचिन्तामण्यालोकः ,, पक्षधरमिश्रस्य
२६. द्रव्यपदार्थः ,, पक्षधरमिश्रस्य
२७. लीलावतीविवेकः ,, ,,
२८. तत्त्वचिन्तामणिटीका ,, वासुदेवमिश्रस्य
२९. तत्त्वचिन्तामणिप्रकाशः ,, रुचिदत्तमिश्रस्य
३०. न्यायकुसुमाञ्जलिप्रकाशमकरन्दः ,, ,,
३१. आत्मतत्त्वविवेककल्पलता ,, शङ्करमिश्रस्य
३२. तत्त्वचिन्तामणिमयूखः ,, ,,
३३. त्रिसूत्रीनिबन्धव्याख्या ,, ,,
३४. भेदरत्नप्रकाशः ,, ,,
३५. वादिविनोदः ,, ,,
३६. न्यायलीलावतीकण्ठाभरणम् ,, ,,
३७. न्यायबोधिनी ,, दुर्गादत्तमिश्रस्य
३८. तत्त्वचिन्तामण्यालोकपरिशिष्टम् ,, देवनाथठक्कुरस्य
३९. तत्त्वचिन्तामण्यालोककण्टकोद्धारः ,, मधुसूदनठक्कुरस्य
४०. तत्त्वचिन्तामणिदीधितिः ,, रघुनाथशिरोमणेः
४१. पदार्थतत्त्वनिरूपणम् ,, ,,
४२. बौद्धाधिकारशिरोमणिः ,, ,,
४३. किरणावलिप्रकाशदीधितिः ,, ,,
४४. न्यायलीलावतीप्रकाशदीधितिः ,, ,,
४५. खण्डनखण्डखाद्यदीधितिः ,, ,,
४६. आख्यातवादः ,, ,,
४७. नञ्वादः ,, ,,
४८. न्यायकुसुमाञ्जलिकारिकाव्याख्या ,, हरिदासन्यायालङ्कारभट्टाचार्यस्य
४९. तत्त्वचिन्तामणिप्रकाशः ,, ,,
५०. भाष्यालोकटिप्पणी ,, ,,
५१. न्यायसिद्धान्तमञ्जरी ,, जानकीनाथशर्मणः

| | | |
|---|---|---|
| ५२. मणिव्याख्या | ,, | कणादतर्कवागीशस्य |
| -५३. भाषारत्नम् | ,, | कणादतर्कवागीशस्य |
| ५४. गुणशिरोमणिप्रकाशः | ,, | रामकृष्णभट्टाचार्यस्य |
| ५५. न्यायदीपिका | ,, | ,, |
| ५६. तत्त्वचिन्तामण्यालोकरहस्यम् | ,, | ,, |
| ५७. दीधितिरहस्यम् | ,, | ,, |
| ५८. सिद्धान्तरहस्यम् | ,, | ,, |
| ५९. किरणावलीप्रकाशरहस्यम् | ,, | ,, |
| ६०. न्यायलीलावतीप्रकाशरहस्यम् | ,, | ,, |
| ६१. न्यायलीलावतीदीधितिरहस्यम् | ,, | ,, |
| ६२. बौद्धाधिकाररहस्यम् | ,, | ,, |
| ६३. तत्त्वचिन्तामणिदीधितिप्रसारिणी | ,, | कृष्णदाससार्वभौमभट्टाचार्यस्य |
| ६४. अनुमानदीधितिविवेकः | ,, | गुणानन्दविद्यावागीशस्य |
| ६५. आत्मतत्त्वविवेकदीधितिटीका | ,, | ,, |
| ६६. गुणविवृत्तिविवेकः | ,, | ,, |
| ६७ न्यायकुसुमाञ्जलिविवेकः | ,, | ,, |
| ६८. न्यायलीलावतीप्रकाशदीधितिविवेकः | ,, | ,, |
| ६९. न्यायरहस्यम् | ,, | रामभद्रसार्वभौमस्य |
| ७०. गुणरहस्यम् | ,, | ,, |
| ७१. न्यायकुसुमाञ्जलिकारिकाव्याख्या | ,, | ,, |
| ७२. पदार्थविवेकप्रकाशः | ,, | ,, |
| ७३. तत्त्वचिन्तामणिदीधितिप्रकाशिका | ,, | [जागदीशी] जगदीशतर्कालङ्कारस्य |
| ७४. न्यायादर्शः | ,, | ,, |
| ७५. शब्दशक्तिप्रकाशिका | ,, | ,, |
| ७६. तर्कामृतम् | ,, | ,, |
| ७७. पदार्थतत्त्वनिर्णयः | ,, | ,, |
| ७८. न्यायलीलावतीदीधितिव्याख्या | ,, | ,, |
| ७९. किरणावलीप्रकाशविवृत्तिपरीक्षा | ,, | रुद्रन्यायवाचस्पतेः |

| | | |
|---|---|---|
| ८०. | तत्त्वचिन्तामणिदीधितिपरीक्षा | ,, ,, |
| ८१. | पदार्थखण्डनव्याख्या | ,, ,, |
| ८२. | तत्त्वचिन्तामण्यालोकविवेकः | ,, जयरामन्यायपञ्चाननस्य |
| ८३. | तत्त्वचिन्तामणिगूढार्थविद्योतनम् | ,, ,, |
| ८४. | न्यायसिद्धान्तमाला | ,, ,, |
| ८५. | गुणदीधितिविवृतिः | ,, ,, |
| ८६. | पदार्थमणिमाला | ,, ,, |
| ८७. | तत्त्वचिन्तामणिदीधितिप्रकाशिका | ,, भवानन्दसिद्धान्तवागीशस्य |
| ८८. | तत्त्वचिन्तामणिटीका | ,, ,, |
| ८९. | तत्त्वचिन्तामणिटीकाविचारः | ,, हरिरामतर्कवागीशस्य |
| ९०. | न्यायसूत्रवृत्तिः | ,, विश्वनाथसिद्धान्तपञ्चाननस्य |
| ९१. | पदार्थतत्त्वालोकः | ,, ,, |
| ९२. | न्यायतन्त्रबोधिनी | ,, ,, |
| ९३ | भाषापरिच्छेदः | ,, ,, |
| ९४. | मुक्तावली | ,, ,, |
| ९५. | दिनकरी | ,, दिनकरस्य |
| ९६. | रामरुद्री | ,, रामरुद्रस्य |
| ९७. | न्यायसंक्षेपः | ,, गोविन्दन्यायवागीशस्य |
| ९८. | पदार्थखण्डनव्याख्या | ,, ,, |
| ९९. | तत्त्वचिन्तामणिगूढार्थदीपिका | ,, रघुदेवन्यायालङ्कारस्य |
| १००. | दीधितिटीका | ,, ,, |
| १०१. | न्यायकुसुमाञ्जलिकारिकाव्याख्या | ,, ,, |
| १०२. | द्रव्यसारसंग्रहः | ,, ,, |
| १०३. | पदार्थखण्डनव्याख्या | ,, ,, |
| १०४. | तत्त्वचिन्तामणिदीधितिप्रकाशिका | ,, ,, |
| १०५. | तत्त्वचिन्तामणिव्याख्या | ,, गदाधरभट्टाचार्यस्य |
| १०६. | तत्त्वचिन्तामण्यालोकव्याख्या | ,, ,, |
| १०७. | रत्नकोषवादरहस्यम् | ,, ,, |

| | | |
|---|---|---|
| १०८. अनुमानचिन्तामणिदीधितिटीका | ,, | ,, |
| १०९. आख्यातवादः | ,, | ,, |
| ११०. प्रामाण्यवाददीधितिटीका | ,, | ,, |
| १११. विषयतावादः | ,, | ,, |
| ११२. व्युत्पत्तिवादः | ,, | ,, |
| ११३. शक्तिवादः | ,, | ,, |
| ११४. न्यायसिद्धान्तमञ्जरीभूषा | ,, | ,, |
| ११५. तत्त्वचिन्तामणिदीधितिटीका | ,, | रामरुद्रतर्कवागोशस्य |
| ११६. तत्त्वसंग्रहदीपिका टिप्पणो | ,, | ,, |
| ११७. वादपरिच्छेदः | ,, | रुद्ररामस्य |
| ११८. वैशेषिकशास्त्रीयपदार्थनिरूपणम् | ,, | ,, |
| ११९. न्यायरत्नावली | ,, | कृष्णकान्तविद्यावागीशस्य |
| १२०. आरम्भवादः | ,, | बदरीनाथशुक्लस्य |
| १२१. तर्कभाषा | ,, | केशवमिश्रस्य |
| १२२. तर्कभाषाव्याख्या | ,, | बदरीनाथशुक्लस्य |
| १२३. न्यायलीलावती | ,, | वल्लभाचार्यस्य |
| १२४. न्यायप्रवेशः | ,, | आचार्यदिङ्नागस्य |
| १२५. तर्कभाषा | ,, | मोक्षाकरगुप्तस्य |
| १२६. स्याद्वादमञ्जरी | ,, | मल्लिसेनसूरेः |
| १२७. न्यायकन्दलीपञ्जिका | ,, | राजशेखरसूरेः |
| १२८. तत्त्वसंग्रहपञ्जिका | ,, | शान्तरक्षितस्य |
| १२९. तत्त्वसंग्रहकारिका | ,, | ,, |
| १३०. ईश्वरभङ्गकारिका | ,, | कल्याणरक्षितस्य |
| १३१. कार्यकारणभावसिद्धिः | ,, | ज्ञानश्रीमित्रस्य |
| १३२. न्यायखण्डनखाद्यव्याख्या | ,, | बदरीनाथशुक्लस्य |

# भूमिकायाः

## शुद्धिपत्रम्

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १३ | बन्धेवनौ | बन्धेऽवनौ |
| ३ | ३ | निरुक्त | निरुक्तम् |
| ,, | १२ | अयल्पम् | अत्यल्पम् |
| ,, | २४ | स्यास्यति | स्थास्यति |
| ४ | ५ | शारत्रम् | शास्त्रम् |
| ,, | १९ | दह्तो | दह्तः |
| ५ | ३ | शारत्र | शास्त्र |
| ,, | ४ | वद्यानां | विद्यानां |
| ,, | ११ | शारत्रम् | शास्त्रम् |
| ,, | १२ | शारत्र | शास्त्र |
| ,, | ,, | शारत्र | शास्त्र |
| ,, | २१ | प्रसंगे | प्रसङ्गे |
| ,, | २२ | परस्पर | परस्परं |
| ७ | १३ | यदि | यदिदं |
| | १९ | आन्वीक्षकीम् | आन्वीक्षिकीम् |
| ८ | ४ | भारभूत | भारभूतं |
| ,, | १२ | अशासन | अनुशासन |
| ,, | १६ | सशयमेव | संशयमेव |
| ६ | १५ | शारत्रे | शास्त्रे |
| ९ | १६ | व्पक्तये | व्यक्तये |
| | १७ | शारत्रार्थ | शास्त्रार्थक |
| ,, | २० | अश्च | अयश्च |
| | २१ | रचयितृणा | रचयित्रा |
| १० | ५ | मनुवाव | मनुवाक्यं |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | ११ | उपकरण | उपकरणं |
| ११ | ३ | अनुपद | अनुपदं |
| ,, | २१ | विचारादाना | विचारादीना |
| १२ | / | पञ्चाध्याय यसूत्रस्य | पञ्चाध्यायन्यायसूत्रस्य |
| ,, | ९ | पारचालितो | परिचालितो |
| ,, | १७ | त्कृष्टं | मुत्कृष्टं |
| ,, | २३ | सम्पादावायाल | सम्पादनायालं |
| ,, | ३० | संकेर्ति | संकेतितं |
| ,, | २१ | शास्त्र | शास्त्र |
| १३ | ५ | तकः | तर्कैः |
| ,, | १० | हेतकः | हेतुकः |
| , | २२ | पूरुषार्थस्य | पुरुषार्थस्य |
| ,, | २६ | रोजरे | रेंजिरे |
| १४ | ३१ | साधनाभासावा | साधनाभासा वा |
| १६ | १ | तत्व | तत्त्व |
| ,, | ४ | प्रमेय | प्रमेयं |
| १६ | १४ | यूपादिता | यूपतापादिता |
| ,, | २२ | अनुग्रहोपदिष्टा | अनुग्रहायोपदिष्टा |
| , | २३ | पार्थास् | पदार्थास् |
| १८ | ९ | पादनार्थत्त्वं | पादनार्थत्वं |
| १९ | २० | एय | एव |
| २२ | १६ | अद्वैत | अद्वैतं |
| २६ | ३० | भावता | भोक्ता |
| ३१ | २४ | तदाह | तदाहु |
| ३२ | २ | वेंद्यम्यश्च | वैधर्म्यश्च |
| ,, | २२ | बाधक | बाधक |
| ३४ | ५ | रूप | रूपं |
| ३५ | ४ | विराधः | विरोधः |
| ,, | १३ | भेदावतारा | भेदावतारो |
| ,, | ,, | यासोऽभेद | योऽसा अभेद |
| ४१ | २८ | युक्तेना | युक्तेर्ना |
| ४४ | ७ | भवता | भवतो |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४५ | २७ | बाधकः | बाधकस्य |
| ४६ | ९ | कथ | कथं |
| ४८ | १ | अभिमनः | अभिमानः |
| ५७ | १९ | भारद्वजेन | भारद्वाजेन |
| ६६ | ९ | विदाङ्कवंन्ति | विदाङ्कवंन्ति |
| ६९ | ८ | गन्थ | ग्रन्थ |
| ७८ | १७ | न्थाय | न्याय |
| ७६ | १० | टीकका | टीकैका |
| ,, | २२ | अधिकृय | अधिकृत्य |
| ८१ | १९ | वराजते | विराजते |
| ८६ | १६ | स्थिता | स्थितो |
| ८७ | | कथन | कथनं |
| ९० | १९ | सक्षोभजः | संक्षोभजः |
| ९५ | १४ | पुरुषोत्तकृत | पुरुषोत्तमकृत |
| ९६ | २४ | पुलस्ति अग्नि | पुलस्त्यग्नि |
| ,, | २८ | कृवन्तः | कृतवन्तः |
| ९८ | ३ | इण्डिका | इण्डिया |
| १०२ | २७ | वंशकथाप्रसङ्गे | तद्वंशकथाप्रसङ्गे |
| १०३ | ७ | यज्ञे | जज्ञे |
| १०६ | २४ | वञ्चकत्वे न | वञ्चकत्वेन |
| ११० | १५ | ग कलियुगा | गतकलियुग |
| ,, | १७ | सन्धो | सन्धौ |
| ११४ | १८ | ब्रह्माचर्यो | ब्रह्माचार्यौ |
| १२० | १६ | कुऽये | कुडये |
| १२४ | १५ | न तस्य | तस्य च |
| १२६ | ६ | नेंकर्व्यक्तिकः | नैकव्यक्तिः |
| १२८ | २४ | शारत्र | शास्त्र |
| ,, | २५ | शारत्राणि | शास्त्राणि |
| ,, | २८ | शारत्रान्तरं | शास्त्रान्तरं |
| १३१ | २४ | कस्मिन् | कस्मिन् स्थाने |
| १३२ | १२ | सन्तमससमु | सन्तमसमु |
| १३६ | ४ | अवतीर्णा | अवतीर्णो |

